Reg. No. C. 1073.

१८५१ शकीये वैशाखे
May. 1929. ]

१२श-खण्डस्य १म-संख्या
[ Vol. XII, No. 1.

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—श्रीकालीपद-तर्काचार्य्यः
सह-सम्पादकः—श्रीदुर्गामोहन-भट्टाचार्य्यः. एम. ए.

वार्षिकमूल्यम्—३) रूप्यकत्रयम्
Foreign price—7 s.

न वाति वायुः सुखदो विशुद्धो वरञ्च झञ्झावह एव वाति ।
वेश्म-द्रुम-प्राणिविनाशहेतुः काले कलौ भारतभूमिजानाम् ॥७
न वर्षति प्रावृषि वारिवाहः प्रवृद्धवर्षोऽपि भवन् कदाचित् ।
उत्पादयत्यल्पक-शस्यजातं काले कलौ भारतभूमिजानाम् ॥८
अकालमृत्युस्त्वथवापमृत्युः संक्रामि-रोगो विषमज्वरश्च ।
सम्मोहगुल्मो नगरे लसन्ति काले कलौ भारतभूमिजानाम् ॥९
भाषा निजा संस्कृतभूमिजापि भावेन सार्द्धं प्रकृतिं विहाय ।
विदेशभाषामनुगच्छतीह काले कलौ भारतभूमिजानाम् ॥१०
न वीर्य्यशक्ती न च कर्म्मरक्तिः स्फूर्त्तिर्न काचिच्च मृतेव मूर्त्तिः ।
स्वाचेत्तथाप्यस्ति सुपुण्यबुद्धिः काले कलौ भारतभूमिजानाम् ॥११
ऋष्युक्त-सत्सात्त्विक-भक्ष्यभोगः सन्ध्येष्ट-देवार्च्चनकर्म्मयोगः ।
सत्यादि-धर्मोऽप्यनुपालनीयः काले कलौ भारतभूमिजानाम् ॥१२
निधाय चित्तञ्च विधाय भक्तिं देवे पदे सत् सहजञ्च कर्म्म ।
फलेष्टसिद्धिर्हि भवेत् स्वधर्म्मात् काले कलौ भारतभूमिजानाम् ॥१३

यं धर्म्मं क्षणनश्वरेन्द्रियमुदे त्यक्त्वा चिरन्तिष्ठतां
रम्यं हर्म्यमपि प्रयाति विलयं चेत्रन्त्वशस्यं व्रजेत् ।
साक्षाद्धीश्वरतोषणो बहुफलो देवैः सदा सेवितः
सोऽस्मात् शश्वदुपार्जनीय इह नस्तु स्याश्रितं मङ्गलम् ॥१४

# सरस्वत्या मूर्त्तितत्त्वम्

[ निबन्धकः—श्रीअमूल्यचरणविद्याभूषणः ]

समागताः सुधियः ! आदिष्टोऽहमद्य भगवत्याः सरस्वत्या मूर्त्ति-तत्त्वमधिकृत्य किमप्यालोचयितुम्। तत्तु दुरूहं प्रकाण्डं विज्ञेय-बहुलमपि प्रायश एव सर्वेषां नीरसतया प्रतिभाति। मूर्त्तितत्त्वं नाम साधारणम्—बौद्धानां जैनानामस्माकञ्च। तेषु एकमप्यपहाय नापरः पूर्णत्वमारोढुं शक्नोति—जैनो वा बौद्धो वा ब्राह्मणो वा। मूर्त्तितत्त्वं नाम यदेतेषां मिलितं, तदेव सम्पूर्णमुच्यते। नहि तत् शक्यमालोचयितुमल्पेन कालेन, मादृशेन मन्दमतिना च। तदद्य तेषामेकतमस्य ब्रह्मण्यधर्म्मस्य सरस्वतीमूर्त्तितत्त्वमवलम्ब्य किञ्चिद् वक्तुमुद्युक्तः। किन्त्वत्र शङ्का मे महती—यत् इदं नाम सभ्यानां चित्तानुरञ्जकं भवेन्न वेति। किमत्र कारणम्? उच्यते। यन्नाम सर्वेषामेव प्रायशो रसवर्जितं, स एवाद्य वचनविषय इति प्रथमम्। द्वितीयं तावत्—दृश्यते हि लोके सरसवाक्पटुता, यया नीरसोऽपि विषयः सरसायते। मम तु तादृशी संस्कृतवाग्भाषणपटुता—यया सरसोऽपि विषयो नीरसायते। तत् कथमहं मन्ये—नीरसोऽयं विषय-स्ततोऽपि नीरसवाक्पटुता मे सभ्याननुरञ्जयेदिति। किन्तु इदमेवाशा-स्महे—यत् पिधाय वचनविषयं, पिधाय च मे वाक्पारुष्यं सभ्याना-मत्रोपस्थितानां वाग्देवतानुराग एवताननुरञ्जयेदाकर्षेच्च नीरसं विषयं प्रतीति।

कतिविधाः सरस्वतीमूर्त्तयो दृश्यन्त इत्युच्यते—

( ) क्वाप्यसौ एकाकिनी निषण्णा।

(२) कुत्र वा तथा दण्डायमाना।

(३) कुत्रचिद्वा स्थिता ब्रह्मणः परिवार-देवतारूपेण ।

(४) पुनरन्यत्र विष्णोः परिवारदेवतारूपेण सा तिष्ठति ।

प्रायशो भारती पद्मासीना पद्मस्था वा भवति । शिल्पशास्त्रमपि एवं निर्दिशति—

पद्मं लक्ष्म्याः सरस्वत्या ओङ्कारं च त्रिवर्णकम् ।

मयमते द्वादशाध्याये षट्षष्टितमः श्लोकः ।

श्वेतपद्मासीना एव सरस्वतीति शास्त्रोपदेशः । अंशुमेदागमः (५१ पटल) पूर्वकारणागमश्च (१२ पटल) इदमेव मतं प्रख्यापयतः ।

अस्मद्देशे सर्वेषु पुष्पेषु पद्मनामकपुष्पस्य सौन्दर्य्यं विज्ञाय पद्मं प्रति सर्वे चिरम् आकृष्टा आसन् । सुप्राचीनकालात् पद्मन्तु सर्वेषां प्रियम् । सर्वेषु युगेषु पद्मम् अतुलनीयमासीत् । समान एव समादरोऽस्य सर्वदा । सेवायां साहित्यस्य, अनुशीलने च शिल्पकलायाः केनापि न त्यक्तं सुन्दरमेतत् पद्मम् । प्राचीनतमे वेदे पद्मस्योल्लेखस्तु प्रथमं प्राप्यते । ऋग्वेदे बहुधा दृश्यते श्वेतपद्मस्य नीलपद्मस्य च प्रयोगः । पुण्डरीकन्तु श्वेतपद्मं पुष्करञ्च पद्मं नीलम् । ततो ब्राह्मणयुगे पद्मस्य समादरः समधिकः सञ्जातः । परवर्त्तिनि काले संस्कृतसाहित्यविशारदैः कविभिः पद्मस्य वैशिष्ट्यं सुविज्ञातम् । न कस्मिंश्चित् काले भारतस्य कलाशिल्पे परित्यक्तं पद्मम् । न कदाचित् शिल्पस्य चातुरी पद्मं विना प्रदर्शिता शिल्पकुशलैः । सर्वैर्धर्मैश्च पद्मस्य आश्रयो गृहीतः । जैनबौद्धाद्यधर्माणां प्राचीनतमेषु स्थापत्यनिदर्शनेषु भारतवर्षस्य सर्वत्र पद्मं विराजितम् । यदा हि बौद्धधर्मो बहिर्भारतेषु विस्तृतिं जगाम, तदा यवद्वीप-सुमात्रा-श्याम-जापानप्रभृतिषु सुदूरप्राच्यविषयेष्वपि तत्तद्देशनिवासिभिर्मूर्त्तिशिल्पे स्थापत्यकलायाञ्च पद्मं प्रकृष्टतया परिगृहीतमासीत् । दृश्यते च ब्राह्मणग्रन्थेषु पद्मेन सार्द्धं सृष्टुः प्रजापतेः सम्बन्धः । तैत्तिरीयब्राह्मण उपदिशति (१.१.३.५) आदौ सर्वमिदं जलमयमासीत् । प्रजापतिरियेष

ब्रह्माण्डस्य सृष्टिम्। तावदेव एकं "पुष्करपर्णं" सलिलस्योपरि ब्रह्मणा दृष्टम्। पुनरारण्यके तैत्तिरीये (१.२३.१) दृश्यते—यदा सर्वं जलमग्नमासीत् तदा एक एव प्रजापतिः पुष्करपर्णे उत्पन्नोऽभूत्। अत्रान्तरे महाभारतं वर्णयति—स्रष्टा ब्रह्मा ध्यानरतस्य विष्णोर्नाभित उत्पन्नः। ब्रह्मणो नाभिपद्मात् उत्पत्तिहेतोः 'अब्जः' 'अब्जयोनिः' इत्यादीनि नामानि आसन्। विष्णुनापि सह पद्मस्यास्ति सम्बन्धः। विष्णोरेकं नाम 'पद्मनाभः'। विष्णुरपि तस्य चतुर्षु हस्तेषु एकस्मिन् हस्ते पद्मं धारयति। विष्णुपत्न्याः श्रियोऽपि नाम पद्मा।

दृश्यते पौराणिकीषु आख्यायिकासु पद्मस्य आसनरूपेण पादपीठरूपेण च व्यवहारः।

उपविशन्ति तिष्ठन्ति च प्रायश एव देवा देव्यो वा पद्मोपरि। ब्रह्मा विष्णोर्नाभिपद्मे समासीनः। ब्रह्मणो विष्णोस्तथा महेश्वरस्य पद्ममेवासनम्। तेषां शक्तीनाञ्च आसनम् एतदेव। अग्निर्गणेशः पवनश्च पद्मोपरि उपविशन्ति। सूर्य्यस्य इन्द्रस्य विष्णोः तदवताराणाञ्च पादपीठं भवति पद्मम्। पद्मासनस्य तु प्राचीनतमं स्थापत्यनिदर्शनं दृश्यते उदयगिरि-भारहुत-साँची इत्यभिधेयेषु त्रिषु स्थानेषु। अधिकसंख्यकानि पद्मासनानि साँचीनामकस्थानस्य महास्तूपद्वारस्योपरि दृश्यन्ते। एतेषु पद्मासनेषु समासीना लक्ष्मीः।

सिंहले शिवस्य पार्वत्याः कुबेरस्य च पीठासनं पद्ममेव। तिब्बते सरस्वत्याः पीठासनमपि पद्मम्।

दाक्षिणात्यस्थेषु 'गङ्गैकोण्डचोलपुरम्' 'वागलि' 'गदग' इति ख्यातेषु स्थानेषु द्विभुजपद्मासीनायाः सरस्वत्याः प्रस्तरमूर्त्तयः सन्ति।

अंशुभेदागमः सरस्वतीं "श्वेतपद्मासनान्वितां" पूर्वकारणागमः पुनस्तां "श्वेतपद्मासीनां" वर्णयति। परन्तु सरस्वती श्वेतपद्मोपरि तिष्ठेदिति विष्णुधर्मोत्तरवचनम्।

सरस्वती हि ब्रह्मण: शक्ति:। ब्रह्मा तु हंसवाहन:। तत: सापि प्रायेण हंसारूढ़ा दृश्यते। यस्य देवस्य यद् वाहनं तस्य शक्त्या अपि तदेव वाहनं प्रायश: स्यात्। अत: सरस्वती ब्रह्माणो अपि प्रियहंस-वाहना। मानसं हि सरो ब्रह्मण: प्रियं स्थानम्। तत्रत्या हंसा अपि लोकविश्रुता:। कालिदासस्य मेघदूतात् इदानीन्तनं काव्यं यावद् मानसहंसा वर्ण्यन्ते। एतदपि ब्रह्मणो हंसवाहनत्वे कारणं भवितुं युज्यते। सरस्वती मानसभूरिति पुराणादिषु दृश्यते; अतो हंसेन सरस्वत्या: सङ्घटनं न किमपि चित्रम्। राज-तरङ्गिण्या उपोद्घाते कविवर-कल्हण: काश्मीरं वर्णयति स्म। तत्र एवमासाद्यते यद् भारती हंसरूपेण भेरगिरिशृङ्गस्थे सरोवरे आविर्बभूवेति। दाक्षिणात्ये गदगेति ख्याते स्थाने हंसवाहना द्विभुजा सरस्वती वर्त्तते। पादपीठिकामुभयतो द्वे द्वे परिवारदेवते ता अन्तरा हंस:। पादपीठ-स्थायां पद्मपीठिकायां राजते देवी भारती।

महीशूरान्तर्गत-नेलमङ्गलतालुके सारदेति ख्यातं सरस्वतीमन्दिरं विद्यते। तत्र हंसवाहना चतुर्भुजा पद्मासनोपविष्टा सरस्वत्या: पाषाणमयी मूर्त्तिर्वर्त्तते। मूर्त्तिरियम् इदानीन्तनी। दक्षिणभारते सुब्बाइप्रदेशे प्रायश: सरस्वती मयूरवाहनेति दृश्यते। महामति-मूरस्य Hindu Pantheon इति पुस्तके चतुर्भुज-मयूरवाहन-सरस्वत्याश्चित्र मस्ति। 'राजपुताना' विभागेऽपि मयूरवाहनाया: सरस्वत्या मूर्त्तिरासा-द्यते। साम्प्रतं श्रीमताजितघोषनाम्ना केनचिन्मे बन्धुवरेण मयूर-वाहनाया: सरस्वत्या: कापि अपूर्वा मूर्त्ति: संगृहीता। मूर्त्तेरस्या: सुविस्तृतं हस्तद्वयं व्याघ्रद्वयस्य मस्तकोपरि तिष्ठतीति।

महामते: कानिङ्हम् महोदयस्य मतेन प्राचीनतमं हिन्दुमन्दिर-मात्रमेव गङ्गा-यमुनयो: चोदितमूर्त्तिसनाथं दृश्यते। प्रवेशपथमुभयतो मूर्त्तिद्वयं तिष्ठति, गङ्गा-यमुना-सरस्वतीनां वाहनपृथक्त्वमपि वर्त्तते। गङ्गा मकरवाहना, यमुना कच्छपारूढ़ा सरस्वती पुनर्मयूरासना।

गङ्गायां मकरप्राचुर्य्यं, यमुनायां प्राचुर्य्यं कच्छपानां, सरस्वत्यां बाहुल्यं मयूराणाञ्च। एतेन तत्तद्देवता तत्तद्वाहनाऽभूदिति तेन मनीषिणा मन्यते।

बङ्गीय-साहित्य-परिषच्चित्रशालायाम् एका आसीन-सरस्वतीमूर्त्ति-र्विद्यते। असौ महाम्बुजपीठिकायां सुखासने निषण्णा। पादपीठे एका मेषमूर्त्तिरस्ति। अस्याः पृष्ठदेशे देव्या दक्षिणपदं न्यस्तम्। मूर्त्तिरियं चतुर्भुजा। ऊर्द्धतनदक्षिणे हस्ते अक्षमाला, वामे तु पुस्तकम्, अधस्तात् हस्तद्वयेन वीणा धृता। वरेन्द्रानुसन्धानसमिते-श्चित्रशालायामपि काचित् मेषवाहना सरस्वतीमूर्त्तिर्विद्यते।

साम्प्रतं काचित् भग्ना सरस्वतीमूर्त्ति र्गान्धारेष्वासादिता। अस्या मुखं न विद्यते। असौ पुनः सिंहासीना। सिंहस्य पृष्ठदेशे अवस्थितायास्तस्याः पादौ एकस्यामेव दिशि लम्बितौ। अस्याकं वीणेव किञ्चिद् वाद्ययन्त्रं जानुनोरुपरि निहितम्। 'लाहोर'चित्र-शालायामपि एतादृशी एका सिंहारूढ़ा भग्ना मूर्त्तिरस्ति।

सिंहवाहना सरस्वती बौद्धसरस्वती। मञ्जुश्रीबोधिसत्त्वस्य शक्तिः सरस्वती। मञ्जुश्रीबोधिसत्त्वस्य वाहनं सिंहः। अतस्तस्याः शक्त्या वाहनमपि सिंहोऽभूत्। वङ्गदेशस्थ-राजकीय-प्रत्नचित्रशालायां सिंह-वाहना चतुर्भुजा सरस्वती विद्यते।

साम्प्रतं बोधगयायां सोमनाथपर्व्वते एका चतुर्भुजा सिंहवाहना मूर्त्तिराविष्कृता। सरस्वती तत्र द्विदलपद्मोपरि उपविष्टा। पाद-पीठस्य निम्नभागे एका सिंहमूर्त्तिः। सिंहोपरि पद्ममेकं विन्यस्तम्।

सरस्वत्या हस्तसंख्या द्वे चतस्रो वा। प्रायशो द्विभुजाया एक-स्मिन् हस्ते पुस्तकम् अपरस्मिन् माला दृश्यते। ब्रह्मवैवर्त्तपुराणे पुनर्वीणापुस्तकधारिणीति आसाद्यते। चतुर्षु हस्तेषु अपरस्मिन् हस्तद्वये पाशाङ्कुशौ—वीणा कमण्डलुर्वा।

महीशूरान्तर्गत-वेलुड़-हलेविड्-ग्रामयोः हैसलराजनिर्म्मितमन्दिर-

गात्रे काश्चन सरस्वतीमूर्त्तयो विद्यन्ते। तासां हस्ते अङ्कुशः पाशश्च विद्यते। हैसलस्थापत्ये कतिपयानां सरस्वतीनां मूर्त्तेर्हस्ते अङ्कुशो वीणा अक्षमाला पुस्तकञ्च दृश्यन्ते। एताः सर्वा एवात्र शिवशक्ति-रूपा उच्यन्ते। महीशूरस्थ-मण्ड्य-तालुकान्तर्गत-वसरल्-ग्रामे अस्ति मल्लिकार्जुनमन्दिरम्। खृष्टीय १२३५ अब्दे मन्दिरमिदं निर्मितम्। मन्दिरस्यास्य नवरङ्गस्य उत्तरतो दक्षिणतश्च द्वे सरस्वतीमूर्त्तौ विद्येते। अत्र दक्षिणभागस्थाया मूर्त्तेर्हस्ते अङ्कुशो वीणा अक्ष-माला पुस्तकञ्च। हस्तस्थितद्रव्याणां विपर्य्ययोऽपि दृश्यते। दक्षिणभारतीये अंशुभेदागमे सरस्वत्या मूर्त्तेरधस्तनं विवरण-मस्ति—

व्याख्यानं चाक्षसूत्रञ्च दक्षिणे तु करद्वये।
पुस्तकं पुण्डरीकञ्च त्रिनेत्रा चारुरूपिणी॥

देव्या दक्षिणविभागस्थिते एकस्मिन् हस्ते अक्षमाला अपरस्मिंश्च व्याख्यामुद्रा। सव्ये पुनरेकस्मिन् पुस्तकम् अपरस्मिन् श्वेतपद्मम्। विष्णुधर्मोत्तरवचने तु वामदिग्विभागस्थे एकस्मिन् हस्ते न पद्मम् अपि च कमण्डलुर्दृश्यते। देवी दक्षिणहस्तेन व्याख्यामुद्रया वीणा-मपि धारयन्ती राजते।

अस्याः कर्णयोः कुण्डलद्वयम्। पूर्वकारणागमे कुण्डलमिदं मौक्तिकमिति आसाद्यते। अंशुभेदागमे तु कुण्डलमिदं रत्नखचितम् इति वर्ण्यते। स्कन्दपुराणस्य-सूतसंहितायां सरस्वत्या मस्तके जटा-जूटमस्ति इति कथ्यते। जटाकलापः पुनश्चन्द्रकलासनाथः। सरस्वती नीलकण्ठा त्रिनेत्रा च।

जटाजूटधरा शुभ्रा चन्द्रार्द्धकृतशेखरा।
पुण्डरीकसमासीना नीलग्रीवा त्रिलोचना॥

सा पुनः श्वेतपद्मासीना श्वेतवर्णा श्वेतवस्त्रावृता च। अत्रापि देवी जटामुकुटधारिणी यज्ञोपवीतिनी मुक्ताहारभूषिता च। सर्वा

एव मूर्त्तयस्त्रिनेत्राः, एतासां मस्तकं परितः प्रभामण्डलमपि दृश्यते।
हेमाद्रिकृतव्रतखण्डेऽपि विष्णुधर्मप्रसङ्गे दृश्यते—

पुस्तकं चाक्षमाला च तस्या दक्षिणहस्तयोः।
वामयोश्च तथा कार्य्या वैष्णवी च कमण्डलुः॥ इति।

तथा च पूर्वकारणागमे (१२ पटले)—

सुदण्डं दक्षिणे हस्ते वामहस्ते च पुस्तकम्।
दक्षिणे चाक्षमाला च करकं वामके करे॥

रूपमण्डनमतेऽपि—

अक्षाब्जवीणापुस्तकं महाविद्या प्रकीर्त्तिता।
वराक्षाब्जं पुस्तकञ्च सरस्वती शुभावहा॥

देव्या ध्यानेऽपि अस्ति—

... ... .. ... "बाहुभिः स्वै-
र्व्याख्यां वर्णाक्षमालां मणिमयकलसं पुस्तकञ्चोद्वहन्तीम्॥"

( क्रमशः )

---

# कर्त्तव्यं कर्म

[ निबन्धकः—रामनरेशत्रिवेदी काव्यतीर्थः ]

हन्त भोः! 'ते हि नो दिवसा गताः', नाधुना मनु-याज्ञवल्क्य-पराशरादिभिर्ज्ञानगरिमगरिष्ठैरलङ्कृता भूमिरार्य्यावर्त्तस्य। नाव तेषां तपोव्रतानां वसुधैव कुटुम्बकमन्वानानां प्रसारितस्य पथः कोऽपि पथिकः। तैरुचितार्थपारदर्शिभिर्निर्मितेषु ग्रन्थेषु ये वस्तुविशेषा वैशिष्ट्येनोपनिबद्धाः, येषामनुष्ठानतो मानवमात्रमाजीवनं सुखेन कालं यापयितुमपारयेत्। नहि केवलमाजीवनं, परं प्रेत्यापि सुखानुभूतिर्भवति, ते च वस्तुविशेषाः कर्त्तव्यस्य कर्मणः सुसम्पादननिबन्धना इति।

यच्च मानवैरवश्यमनुष्ठेयं, यस्य चाननुष्ठानेन गुरुतरः प्रत्यवायो

भवति, तदेव कर्त्तव्यं कर्म इति कथ्यते। यथा हि पुत्रैः पित्रोरादेश्च श्रेयं, तयोः शुश्रूषा विधेया इति कर्त्तव्यं तेषाम्। अननुष्ठिते च तस्मिन्निरये गम्यते। शिष्यैर्गुरोरादेशः पाल्यः इति तेषां कर्त्तव्यं कर्म, अपालिते च तस्मिन् प्रत्यवायिभिर्भूयते तैरिति। प्राक्तनैर्महर्षिभिः कर्त्तव्यस्य कर्मणो गुरुत्वं महत्त्वं च बहुमानपुरःसरमादृतम्। कर्तव्यस्यैवापरः पर्यायो धर्म इति। सूक्ष्मधिया विचारे कृते च कर्त्तव्यस्य धर्मपर्यायेणोद्घोषणं नह्यनुचितं प्रतिभाति। एतद्विषये मनुना "धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः" इत्याद्युपदिशता बहुशः कथितम्। भगवता सचराचर-गुरुणा अनादिनिधनेन लीलापुरुषेणापि महाभारतावसरे कर्त्तव्यकर्मविरतमर्जुनमपि गीतोपदेशच्छलेन कर्त्तव्यस्य कर्मणः परिपालनमेवोपदिष्टम्। अन्यान्यपि आर्य्याणाम् ऋषीणाम्प्रमाणवाक्यानि तमेवार्थम्परिपोषयन्ति। कर्त्तव्यकर्मणा तपसोऽप्यन्योन्याश्रयत्वम्। तथाहि अहिंसा सत्यं दानम् इन्द्रियनिग्रहः इत्यादिकन्तपः, एवं कर्त्तव्यं कर्म चिकीर्षुणाऽवश्यमेव तापसेन भाव्यम्। नातपस्को वस्तुतः कर्त्तव्यपरो भवितुमर्हति, न वा कर्त्तव्यस्यानुष्ठाता तपस्वी भवितुमर्हति, नापि सुखमेधते। सर्वोऽपि जीवलोकः सुखलिप्सुरित्यत्र न हि सन्देहलेशः, तच्च सुखं कर्त्तव्यपरेणैव लभ्यञ्चेत् कर्त्तव्यं कर्मैव सुखस्यापि जनकत्वे स्थितमिति। यो यथा स्वस्मिन् कर्त्तव्ये कर्मणि प्रयत्नपरो भविष्यति, स तथैव सुखं लप्स्यते।

कर्त्तव्यं कर्म च प्रतिजाति भिन्नम्। पूर्वमेव प्रतिपादितं कर्त्तव्यस्यापरः पर्यायो धर्म इति। चाभ्युदय-निःश्रेयस-सिद्धिकृद्धर्मः प्रतिजाति भिन्न इति। सृष्टेरादौ स्वलीलाभूमावार्यावर्त्ते जनान् सिसृक्षता परेण पुरुषेण चतुर्धा सुविभक्ता मानवा ब्राह्मण-क्षत्रिय-वैश्य-शूद्ररूपाः। अस्य च विभागस्य मूलं कर्त्तव्यं कर्म। अत एवोक्तं कर्त्तव्यं कर्म प्रतिजाति भिन्नमिति।

यदा हि नरः अस्मिन् जगति समुत्पद्यते, तदैव कर्त्तव्यसूत्रग्रन्थिना ग्रथितो भवति। स च ग्रन्थिराजीवनं तमनुबध्नाति। अन्ते च तमनुगच्छति। एवं यो यथा कर्त्तव्यपरः कर्त्तव्यविरतश्च भवति, स तथैव फलमश्नुते। यथा विना मृदा घटो न निर्मातुं शक्यते, तथैव कर्त्तव्यपालनमन्तरा न किमपि सिध्यति, नवैकान्तिकस्य सुखस्योपलब्धिर्भवति। कर्त्तव्यकृदेव संसिद्धिं लभते, नावकाशोऽत्र सन्देहलेशस्य। कर्त्तव्ये कर्मणि कार्य्यस्य संसाधिका काचनानवद्या शक्तिर्वर्त्तते। एवं च यदि कस्यचन कार्य्यस्यासिद्धिर्दरीदृश्यते, अवश्यमेव तत्कर्त्तुर्भिर्वस्तुतः स्वकृत्यं नानुष्ठितमिति बोद्धव्यम्। कर्त्तव्यपरेण सर्वमेव कृत्यजातं सुकरमेव। आत्मन आत्यन्तिकी तुष्टिरपि तदैव समुद्भवति, यदा हि कर्त्तव्यपरस्तिष्ठति नरः।

यथा हि कर्तव्यं प्रतिजाति भिन्नस्तथैव प्रत्याश्रमं किम्बहुना प्रतिमानवं भिन्नमेव। अतः सम्यक् स्वीयमेव कर्तव्यमनुष्ठेयं, तदेवानुष्ठितममृतस्रावि भवति, परकीयन्तु विषोपमं त्याज्यमिति। करालेऽस्मिन् धर्मकर्मविलोपके कलौ सर्वोऽपि नरः स्वकर्तव्यविमुखः परकीयस्य कर्तव्यस्यानुष्ठानतः सिद्धिं लब्धुमीहते, किन्तु तादृशः प्रयासो मृगमरीचिकाप्राय एव इति। बहवः पाश्चात्त्यभाषाभिभूषिताखिलावयवाः पाश्चात्त्यभाषामनुसरन्तस्तामेवोन्नतिशिखरस्य सोपानं मन्यमाना एवं कथयन्ति "मानवजातिरेका, तस्याः कर्तव्यमपि आ चाण्डालाद् ब्राह्मणं यावदेकमेव।" तदर्थं यत्नपरा अपि वर्तमानास्ते साम्यवादिनः पुनरेवं कथयन्ति "स्मृत्यादिकमुदर-साराणां ब्राह्मणानां स्वार्थसाधनपरमतस्तत्त्याज्य"मिति। किन्तु तेषां तादृशः प्रयासः पङ्गोर्गिरिलङ्घनयत्नवदन्धस्य रूपकादिदर्शनवाञ्छावद् वामनस्योन्नततरोः फलग्रहणकामनावद् व्यर्थ एव। यदा चैकस्यैव नरस्य बालत्वाद्यवस्थाभेदेन कर्तव्यभेदो भवति, कथन्तदा स्नानादिकालाद् विलुप्तसंस्काराः संस्कारशुद्धैः कर्तव्यस्य कर्मणोऽनु-

ज्ञानेन कृतकामा भवितुमर्हन्ति ? एतद्विषये ह्यन्यदा किञ्चिन्निवेदयिष्यामः, साम्प्रतन्तावत् प्रस्तुतविषयविवेचनमेवोचितम् ।

कर्तव्यं कर्म नहि नरेण फलेप्सुना कार्यम्, अनासक्तधिया फलाफलविचारं दूरीकृत्य कर्तव्यं कर्म कुर्वन् मानवः सुखभाग्भवति, संसिद्धिमपि लभते । यः फलाफलविचारपरो दोलायमानमतिः कर्तव्यपथाद् भ्रश्यति, स चास्थिरमतिर्मनसि नानाविधान् भावयित्वा विषयान् सदैव चिन्तितस्तिष्ठति । अतः कर्तव्यधियैव सर्वं कर्म सम्पाद्यमिति दिक् ।

---

## प्रेमतत्त्वम् *

[ ... ... ... ...विष्णुपदभट्टाचार्यः (परिषच्छात्रः) ]

वाहिन्योत्सा मिलन्ते पुनरिह सरितः सागरैः संगतास्ता
रागादाकाशवायुर्मिलति च गगने वायुना नित्यमेव ।
निर्द्वन्द्वं वस्तु किञ्चिन्न भवति भुवने कोऽपि दिव्यो निदेश
एकस्यान्येन साकं घटयति मिलनं किं मिले न त्वयाहम् ॥
ऊर्म्योर्मिः श्लेषसक्ता शिखरिभिरनिशं चुम्ब्यते नीलमभ्रं
क्षन्तव्यं तन्न पुष्पं नहि परिरभते यच्च पुष्पं प्रफुल्लम् ।
चुम्बत्यंशुः सुधांशोर्जलनिधिसलिलं भानुनालिङ्ग्यते क्ष्मा
किञ्चैभिश्चुम्बितैर्वा यदि च न ललने चुम्बितोऽस्मि त्वयाहम् ॥

---

* पाश्चात्त्यकवेः श्रीशेलिमहोदयस्य "लभस फिलसफि" इति काव्यात् अनूदितमिदं मतत्त्वम् ।

# संहितायां ब्रह्मचर्य्यम्

[ निबन्धकः—श्रीमित्रशास्त्री ]

धर्म्मशास्त्रं संहिताशब्दार्थः, सा प्रायेण स्मृतिरित्यभिधीयते। धर्म्मसंहितास्या नामान्तरम्। विंशतिसंख्याकाः संहिता वर्त्तन्ते विभिन्नमुनिजनप्रणीताः। संहितानामासां विधानानुसारेणार्य्यसमाजाः परिचालिता आसन्।

विमुग्धा भवन्ति ते खलु मानवा ये तदानीन्तनकालस्य विद्वज्जनानां ब्रह्मचर्य्यरीतिमवलोकयन्ति, तदा च ते 'शरीरमाद्यं खलु धर्म्मसाधन'-मित्यंशस्यार्थमवगन्तुमीशा भवन्ति। ब्रह्मचर्य्येण शरीररक्षा जायते। शरीररक्षाया नियमपालनेन विद्याभ्यासस्य नेदिष्ठः सम्बन्धः। शास्त्रे अष्टानां ब्रह्मचर्य्याणामुल्लेखोऽस्ति। तथा च—

"स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणम्॥"

आर्य्ययुगे पुरुषश्चतुर्विंशतिवर्षवयो यावदुल्लिखिताष्टविध-ब्रह्म-चर्य्यपालने अभ्यस्ता आसंस्तथा दीर्घकालब्रह्मचर्य्यपालनफलस्वरूपं दीर्घजीवनञ्च लब्धुमलमभवन्। अधुना परिलक्ष्यते महानभावो ब्रह्मचर्य्यस्यार्य्यसंसदि, अतो ध्वंसमार्गमुपनीतो मानवसमाज उच्छृ-ङ्खलतापूर्णश्च। नाभिनन्दन्ति युवानो धर्म्मम्, धर्म्मस्तथा धर्म्मसंहिता च तेषां चक्षुषि अलीकाविव प्रतिभातः। तथा च महर्षि-याज्ञवल्क्यः—

'चत्वारो वेदधर्म्मज्ञाः पर्षत्त्रैविद्यमेव वा।
सा ब्रूते यं स धर्म्मः स्यादेको वाध्यात्मवित्तमः॥ १।९

अयमर्थः।—'धर्म्ममधिकृत्य संशय उपस्थिते केन प्रकारेण तस्य छेदनं कर्त्तव्यमिति प्रश्नस्योत्तरे याज्ञवल्क्यः कथयति—वेदधर्म्मशास्त्रज्ञाश्चत्वारो ब्राह्मणाः, त्रैविद्यमण्डली नाम या सभा सा सभा, अध्यात्मज्ञानसम्पन्नानां मध्ये अतीव निपुणो वेदधर्म्मशास्त्रज्ञश्च कश्चिन्नरो वा यद् ब्रूते सोऽपि धर्म्म इत्युच्यते। किञ्च—

'ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः।
निषेकादि-श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः॥'२।१

अस्यार्थः—ब्राह्मणक्षत्रियवैश्यशूद्रा इति चत्वारो वर्णाः, तेषां प्रथममुक्तास्त्रयो वर्णा द्विजा उच्यन्ते। तेषां द्विजानां गर्भाधानादौर्द्ध्वदैहिकक्रियां यावत् सर्वाः क्रिया मन्त्रोच्चारणपूर्व्वकं सम्पाद्यन्ते।

तदा द्विजानामुपनयनविधिरासीत्। अधुना केवलं नाममात्रमुपनयनं सम्पाद्यते, परन्तु तादृङ्‌नियमो न पाल्यते। ब्राह्मणकुमारस्य गर्भाधानमादिं कृत्वा जननं वाष्टमे वर्षे, क्षत्रियकुमाराणां गर्भादेकादशे, तथा गर्भाद्धि द्वादशे विशाञ्चोपनयनं शास्त्रानुमोदितमिति। याज्ञवल्क्यः कथयति—

'गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्।
राज्ञामेकादशे सैके विशामेके यथाकुलम्॥'२।५

उपनयनात् परं गुरुः शिष्यं वेदमध्यापिपच्छौचाचारविषयमुपादिशच्च। याज्ञवल्क्यसंहितायां तस्य बहु प्रमाणं विद्यते। ततः प्रश्नत्युपनीतबालकानां पालनीयनियमा अतीव कठोरा आसन्। कठोरनियमपालनात्तेषां भावि जीवनं सुचारुरूपेण घटितमभवत्।

अतो दृश्यते यद् द्विजा उपनयनादूर्द्ध्वं वेदेऽधिकारमलभन्त, वेदाङ्गानि चाध्यगीषत। नास्ति शास्त्रे शूद्रस्याधिकारः। अधुना धर्म्मशास्त्रे शूद्रस्याधिकारमधिकृत्यानल्पाः कथा उत्थाप्यन्ते। स्वयं मनुनोक्तम्—

'निषेकादि-श्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित् ॥' २।१६

गर्भाधानादिरन्त्येष्टिपर्य्यन्तो यस्य वर्णस्य मन्त्रैरनुष्ठानकलाप उक्तस्तस्य धर्म्मशास्त्रस्यास्याध्ययने श्रवणे चाधिकारो न त्वन्यस्य कस्यचित् स्त्रीशूद्रादेरित्यर्थः। तेषान्तु शास्त्रोक्त-कर्म्मानुष्ठानेऽधिकारोऽस्त्येव।

उपनयनात् परं द्विजाः सन्ध्याविधिं गुरोः सकाशात् सम्यगशिक्षन्त। अधुना तूपनीतबालक उपनयनादनन्तरं मासं यावदपि सन्ध्याक्रियां कर्त्तुं कष्टमनुभवति। तदा त्वा मरणात् सन्ध्यावन्दनमवश्यं पालनीयमासीत्। तथा च मनुः—

'गुरुः शिष्यं शिक्षयेत सन्ध्योपासनमेव च।'

इदानीन्तु ये खलु मानवाः सन्ध्यावन्दनादिकमपि कुर्वन्ति तेषां बहव आचमनं जानन्ति न वेति सन्देहमवगाहते मे मनः। यथाह्याचमनमधिकृत्य महर्षिर्मनुः—

'त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम्।
खानि चैव स्पृशेदद्भिरात्मानं शिर एव च॥'

अयमर्थः—प्रथमं तावत् ब्राह्मादितीर्थेन जलगण्डूषत्रयं पिबेत्। ततोऽङ्गुष्ठमूलेनोष्ठाधरौ द्विर्मार्जयेत्। तदनन्तरं जलेन नासिकाचक्षुःकर्णस्थानि षट् छिद्राणि हृदयं शिरश्चाङ्गुलिद्वारेण स्पृशेत्। इदमाचमनञ्च पुनः पवित्रतां कामयमानोऽनुष्णोक्ताभिः फेनवर्जिताभिरद्भिरेकान्ते पूर्वाभिमुख उत्तराभिमुखो वा कुर्य्यात्। आचमनजलपरिमाणमाह मनुः—

'हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः।
वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः॥' २।६२

ब्राह्मणा हृदयगामिनीः, क्षत्रियाः कण्ठगामिनीः, वैश्या अन्त-

अयमर्थः।—'धर्ममधिकृत्य संशय उपस्थिते केन प्रकारेण तस्य छेदनं कर्त्तव्यमिति प्रश्नस्योत्तरे याज्ञवल्क्यः कथयति—वेदधर्म-शास्त्रज्ञाश्चत्वारो ब्राह्मणाः, त्रैविद्यमण्डली नाम या सभा सा सभा, अध्यात्मज्ञानसम्पन्नानां मध्ये अतीव निपुणो वेदधर्मशास्त्रज्ञश्च कश्चि-न्नरो वा यद् ब्रूते सोऽपि धर्म इत्युच्यते। किञ्च—

'ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः।
निषेकादि-श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः॥'२।१

अस्यार्थः—ब्राह्मणक्षत्रियवैश्यशूद्रा इति चत्वारो वर्णाः, तेषां प्रथम-मुक्तास्त्रयो वर्णा द्विजा उच्यन्ते। तेषां द्विजानां गर्भाधानादौर्द्धदैहिक-क्रियां यावत् सर्वाः क्रिया मन्त्रोच्चारणपूर्वकं सम्पाद्यन्ते।

तदा द्विजानामुपनयनविधिरासीत्। अधुना केवलं नाम-मात्रमुपनयनं सम्पाद्यते, परन्तु तादृङ्नियमो न पाल्यते। ब्राह्मण-कुमारस्य गर्भाधानमादिं कृत्वा जननं वाष्टमे वर्षे, क्षत्रियकुमाराणां गर्भादेकादशे, तथा गर्भाद्वि द्वादशे विशाञ्चोपनयनं शास्त्रानुमोदित-मिति। याज्ञवल्क्यः कथयति—

'गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्।
राज्ञामेकादशे सैके विशामेके यथाकुलम्॥'२।५

उपनयनात् परं गुरुः शिष्यं वेदमध्यापिपच्छौचाचारविषयमुपा-दिशच्च। याज्ञवल्क्यसंहितायां तस्य बहु प्रमाणं विद्यते। ततः प्रथमत्युपनीतबालकानां पालनीयनियमा अतीव कठोरा आसन्। कठोरनियमपालनात्तेषां भावि जीवनं सुचारुरूपेण घटितमभवत्।

अतो दृश्यते यद् द्विजा उपनयनादूर्द्ध्वं वेदेऽधिकारमलभन्त, वेदाङ्गानि चाध्यगीषत। नास्ति शास्त्रे शूद्रस्याधिकारः। अधुना धर्मशास्त्रे शूद्रस्याधिकारमधिकृत्यानल्पाः कथा उत्थाप्यन्ते। स्वयं मनुनोक्तम्—

'निषेकादि-श्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित् ॥'२।१६

गर्भाधानादिरन्त्येष्टिपर्य्यन्तो यस्य वर्णस्य मन्त्रैरनुष्ठानकलाप उक्तस्तस्य धर्म्मशास्त्रस्यास्याध्ययने श्रवणे चाधिकारो न त्वन्यस्य कस्यचित् स्त्रीशूद्रादेरित्यर्थः। तेषान्तु शास्त्रोक्त-कर्म्मानुष्ठानेऽधिकारोऽस्त्येव।

उपनयनात् परं द्विजाः सन्ध्याविधिं गुरोः सकाशात् सम्यगशिक्षन्त। अधुना तूपनीतबालक उपनयनादनन्तरं मासं यावदपि सन्ध्याक्रियां कर्त्तुं कष्टमनुभवति। तदा त्वा मरणात् सन्ध्यावन्दनमवश्यं पालनीयमासीत्। तथा च मनुः—

'गुरुः शिष्यं शिक्षयेत सन्ध्योपासनमेव च।'

इदानीन्तु ये खलु मानवाः सन्ध्यावन्दनादिकमपि कुर्वन्ति तेषां बहव आचमनं जानन्ति न वेति सन्देहमवगाहते मे मनः। यथाह्याचमनमधिकृत्य महर्षिर्मनुः—

'त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम्।
खानि चैव स्पृशेदद्भिरात्मानं शिर एव च ॥'

अयमर्थः—प्रथमं तावत् ब्राह्मादितीर्थेन जलगण्डूषत्रयं पिबेत्। ततोऽङ्गुष्ठमूलेनोष्ठाधरौ द्विर्मार्जयेत्। तदनन्तरं जलेन नासिकाचक्षुःकर्णस्थानि षट् छिद्राणि हृदयं शिरश्चाङ्गलिद्वारेण स्पृशेत्। इदमाचमनञ्च पुनः पवित्रतां कामयमानोऽनुष्णोकृताभिः फेनवर्जिताभिरद्भिरेकान्ते पूर्वाभिमुख उत्तराभिमुखो वा कुर्य्यात्। आचमनजलपरिमाणमाह मनुः—

'हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः।
वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः ॥' २।६२

ब्राह्मणा हृदयगामिनोः, क्षत्रियाः कण्ठगामिनोः, वैश्या अन्त-

रास्यप्रविष्टाः, शूद्रास्तु जिह्वौष्ठान्तेन स्पृष्टा अपो गृहीत्वा आचामियुः, तेन च पवित्रा भवेयुरित्यर्थः।

यज्ञसूत्रधारणस्य नियमस्तदासीत्। अधुना तु यज्ञसूत्रधारणस्य काचिद्रीतिर्नास्ति। अस्य यज्ञसूत्रधारणस्य नियमानुसारेण यज्ञसूत्रधारी कदाचिदुपवीती, कदाचित् प्राचीनावीती, कदाचिद्वा निवीती कथ्यते। यथा मनुः—

'उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः।
सव्ये प्राचीन आवीती निवीती कण्ठसज्जने॥' २।६३

कण्ठधृतयज्ञसूत्रमन्तरा दक्षिणबाहौ प्रविष्टे सति यत् संस्थानं भवति तदेव उपवीतम्। यस्य द्विजस्य तदस्ति स उपवीती। कण्ठधृतयज्ञसूत्रमन्तरा वामबाहौ प्रविष्टे यत् संस्थानं भवति तस्य प्राचीनावीतमिति संज्ञा भवति। तदस्ति यस्य द्विजस्य स प्राचीनावीती कथ्यते। कण्ठदेशान्मात्याकारेण विलम्बितं यज्ञसूत्रं निवीत्याख्यां भजते, यस्य विप्रस्य तदस्ति स निवीती इत्युच्यते।

ब्रह्मचारिण आर्यबालका ब्राह्ममुहूर्त्ते शय्यां विमुच्य स्नानादिकृत्यं सम्पादयामासुः। प्रातः सायञ्च ते गायत्रीमजपंस्तथा यथाविधि जुहुवुश्चाग्नौ। ततः स्वनामोल्लिख्य गुरुजनानभिवादयामासुरध्ययनफललाभाय च संयतचित्ता गुरुमसेवन्त। गुरुणाध्ययनार्थमाहूताध्यैषत, नान्यथा। गुरुपरिचर्य्यया समग्रां विद्यां लब्धुमलमभवन्। तदा ब्रह्मचारिणो भिक्षामचरन्। ते भिक्षालब्धं सर्वं गुरवे निवेदयामासुः। यथा योगियाज्ञवल्क्यः—

'आहूतश्चाप्यधीयीत लब्धमस्मै निवेदयेत्।
हितञ्चास्याचरेन्नित्यं मनोवाक्कायकर्म्मभिः॥' २।१८

भिक्षाचरणनियमो मनुना कथितो यथा—

'भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तमम्॥' २।४९

उपनयनादूर्द्ध ब्राह्मणक्षत्रियवैश्या यथाक्रमं 'भवति भिक्षां देही'ति भवत्पूर्वम्, 'भिक्षां भवति देही'ति भवन्मध्यम्, 'भिक्षां देहि भवती'ति भवच्छब्दोत्तरं भिक्षां याचेरन्। ब्रह्मचारिणः पुनर्यत्किञ्चिद् भिक्षां न भिक्षेरन्। उक्तञ्च—

'मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।
भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत्।' मनुः २।५०

अयमाशयः—ब्रह्मचारिणः प्रथमं मातरं, तदभावे निजां भगिनीं मातृस्वसारं वा भिक्षां याचेरन्। तासामभावे या हि एतान् ब्रह्मचारिणो नावमानयेत्तां भिक्षां भिक्षेरन्।

तदा ब्राह्मणस्य षड्भिः कर्म्मभिर्जीविकानिर्वाहः समजायत। यथाह महर्षिर्हारीतः—

'षट् कर्म्माणि निजान्याहुर्ब्राह्मणस्य महात्मनः।
तैरेव सततं यस्तु वर्त्तयेत् सुखमेधते॥
अध्यापनञ्चाध्ययनं याजनं यजनं तथा।
दानं प्रतिग्रहश्चेति षट् कर्म्माणीति चोच्यते॥'१।७।१८

उक्तमध्यापनञ्च पुनस्त्रिविधं परिकीर्त्तितम्। यथा—

'अध्यापनञ्च त्रिविधं धर्म्मार्थमृक्थकारणात्।
शुश्रूषाकरणञ्चेति त्रिविधं परिकीर्त्तितम्॥'१।१९ (हारीतः)

प्रथमं धर्म्मार्थम्, द्वितीयं धनाय, तृतीयं शुश्रूषालाभाय।

गुरुर्न यं कञ्चिज्जनं शिष्यमकार्षीत्। तदा गुरुः कृतज्ञं शुचिमद्रोहिणमाधिव्याधिरहितमसूयाशून्यं, मेधाविनं सेवाकुशलं सच्चरित्रं विद्यादातारं तथा धनदातारञ्चाध्यजोगपत्। तथा च महर्षिर्हारीतः—

"योग्यानध्यापयेच्छिष्यानयोग्यानपि वर्जयेत्" ॥१।२१

तदा दानग्रहणस्यापि रीतिरासीत्। प्रतिग्रहमधिकृत्य संहिताकर्त्तृभिः कथितम्—

"विदितात् प्रतिगृह्णीयाद् गृहे धर्मप्रसिद्धये॥"

पापशून्य इति ख्यातो लोके यो विद्यते, तस्य सकाशात् गृहे धर्म्मप्रसिद्धये प्रतिग्रहः कर्त्तव्यः। गृहस्थस्य सकाशात् प्रतिग्रहः कर्त्तव्य इत्यर्थः।

आसीत्तदा दानस्यापि रीतिः। यस्मै कस्मैचिद्दानं न प्रशस्तमासीत्। तथा च हारीतसंहितायाम्—

"स्मृतिहीनाय विप्राय श्रुतिहीने तथैव च।
दानं भोजनमन्यच्च दत्तं कुलविनाशनम्॥"१।२३ २४

आर्य्यकुमाराः पवित्रस्थाने उपविश्यानुदिनं संयतात्मानो वेदाभ्यासं चक्रुः। सदा धर्म्मशास्त्राणि चापठन्। उक्तञ्च महर्षिभिः—'धर्म्मशास्त्रञ्च तथा वेदवत् पठितव्यञ्च श्रोतव्यञ्च दिवानिशि।' न केवलं ते धर्म्मशास्त्राणि स्वयं वेदवदपठन् दिवारात्रं गुरोर्मुखादशृण्वंश्च। तथापि च ब्रह्मचारिणोऽधिकृत्य कथितं महर्षिणा हारीतेन—

"उपनीतो माणवको वसेद् गुरुकुलेषु च।
गुरोः कुले प्रियं कुर्य्यात् कर्म्मणा मनसा गिरा॥
ब्रह्मचर्य्यमधः शय्या तथा वह्नेरुपासना।
उदकुम्भान् गुरोर्दद्याद् गोग्रासञ्चेन्धनानि च॥
कुर्य्यादध्ययनञ्चैव ब्रह्मचारी यथाविधि।
विधिं त्यक्त्वा प्रकुर्वाणो न स्वाध्यायफलं लभेत्॥
यः कश्चित् कुरुते धर्मं विधिं हित्वा दुरात्मवान्।
न तत्फलमवाप्नोति कुर्वाणोऽपि विधिच्युतः॥
तस्माद्वेदव्रतानीह चरेत् स्वाध्यायसिद्धये।
शौचाचारमशेषन्तु शिक्षयेद् गुरुसन्निधौ॥
अजिनं दण्डकाष्ठञ्च मेखलाञ्चोपवीतकम्।
धारयेदप्रमत्तश्च ब्रह्मचारी समाहितः॥
छत्त्रकोपानहञ्चैव गन्धमाल्यादि वर्जयेत्।
नृत्यगीतमथालापं मैथुनञ्च विवर्जयेत्॥

हस्त्यश्वारोहणञ्चैव संत्यज्य संयतेन्द्रियः।
सन्ध्योपास्तिं प्रकुर्वीत ब्रह्मचारी व्रतस्थितः॥
अभिवाद्य गुरोः पादौ सन्ध्याकर्मावसानतः।
तथा योगं प्रकुर्वीत मातापित्रोश्च भक्तितः॥
एतेषां शासने तिष्ठेद् ब्रह्मचारी विमत्सरः।
अधीत्य च गुरोर्वेदान् वेदौ वा वेदमेव वा॥
गुरवे दक्षिणां दद्यात् संयमो ग्राममावसेत्।
इमं यो विधिमास्थाय त्यजेद्देहमतन्द्रितः।
नेह भूयोऽपि जायेत ब्रह्मचारी दृढ़व्रतः॥
यो ब्रह्मचारी विधिना समाहित-
श्चरेत् पृथिव्यां गुरुसेवने रतः।
सम्प्राप्य विद्यामतिदुर्लभां शिवां
फलञ्च तस्याः सुलभन्तु विन्दति॥" ३।१—६।८—१२।१५।१६

अस्यार्थः—द्विजबालका उपनीता गुरुकुले वासं कुर्य्युः। ब्रह्मचारिणो निम्नशय्यां विरचयेयुस्तथाग्नेरुपासनाञ्च कुर्य्युः। ते जलकुम्भाहरणं काष्ठाहरणं तथा गोग्रासदानञ्च कुर्य्युः। यथाविधि वेदाः पठनीयास्तैः, यतो विधिं त्यक्त्वा न कोऽप्यध्ययनफलं लभते। यो नरो दुःस्वभावत्वाद्विधिं विहाय वेदाध्ययनं करोति सोऽध्ययनस्य फलं लब्धुं न शक्नोति। विधिविरुद्धकर्म्मचारी जनो मङ्गलजनकपुण्यादेर्विच्युतो भवति। अतः स्वाध्यायसिद्धये वेदविहितव्रतानि कर्त्तव्यानि। गुरोरन्तिकमासाद्याशेषशौचाचारं शिक्षेत, समाहितस्तथा प्रमादरहितश्च भूत्वाजिनं दण्डकाष्ठं मेखलां यज्ञसूत्रञ्च धारयेत्। छत्रं पादुकां गन्धमाल्यादि नृत्यगीतं निरर्थकालापं तथा मैथुनञ्च यत्नेन वर्जयेत्। हस्त्यश्वारोहणं तैः सर्वथा वर्जनीयम्। सन्ध्योपासनासमापनान्ते गुरुचरणयुग्ममभिवाद्य भक्त्या पितरौ वन्दनीयौ। स मत्सररहित आचार्य्यस्य तथा पित्रोराज्ञां पालयेत्। गुरोः सकाशाद्वेदान् वेदौ वेदं वाधीत्य

गुरवे दक्षिणां दद्यात्। ततो ग्राममावसेत्। यो हि विधिमिममास्थाय प्राणान् त्यजेत् स ब्रह्मचारी पुनर्नेह जायते। यो हि ब्रह्मचारी समाहितो विधिपूर्वकं गुरोः सेवायां नियुक्तो भूत्वा पृथिव्यां विचरति, सोऽतिदुर्लभां शुभां विद्यां तथा तस्याः सुलभं फलञ्च विन्दति। कथितञ्च विष्णुसंहितायाम्—

"पूर्वां सन्ध्यां जपेत्तिष्ठन् पश्चिमामासीनः। कालद्वयमभिषेकाग्निकर्मकरणम्॥"२८।३।४

ब्रह्मचारी दण्डायमानः सन् प्रातःसन्ध्यां तथोपविष्टः सन् सायंसन्ध्याञ्च कुर्य्यात्। कालद्वयमेव स्नानं होमञ्च कुर्य्यात्। तथा—'गुरोः पूर्वोत्थानं चरमं संवेशनम्।'२८।१३ किञ्च—गुरावुपविष्टे स्वयमुपविशेत्, दण्डायमाने गुरौ स्वयं तिष्ठेत्, गच्छन्तं गुरुमनुव्रजेत्, आगच्छन्तं गुरु प्रेक्ष्य प्रत्युद्व्रजेत्। गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते तत्र न तिष्ठेत्। ततश्चोक्तम्—

"स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः।
स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्॥"२।१८२

ब्रह्मचारिणामन्नभोजनमधिकृत्य कथितमृषिणोशनसा—

"प्राङ्मुखोऽन्नानि भुञ्जीत दक्षिणामुख एव च।
नाद्यादुदङ्मुखो नित्यं विधिपूर्वं सनातने॥
प्रक्षाल्य पाणी पादौ च भुञ्जानो द्विरुपस्पृशेत्।
शुचौ देशे समासीनो भुक्तान्ते द्विरुपस्पृशेत्॥"१।६२।६३

प्रत्यहं पूर्वाभिमुखो दक्षिणाभिमुखो वा भूत्वा चिरप्रचलित-नियमानुसारेणान्नभोजनं कुर्य्यात्। उत्तराभिमुखस्तु नाद्यात्। हस्तपादं प्रक्षाल्य यथास्थाने उपविष्टो भोजनात् प्राग् द्विराचमनं, तथा भोजनान्ते द्विराचमनं कुर्य्यात्। अथाङ्गिरसा महर्षिणोक्तम्—

"सूतकेषु यदा विप्रो ब्रह्मचारी जितेन्द्रियः।
पिबेत् पानीयमज्ञानाद्भुङ्क्ते भक्तमथापि वा॥

उद्गीर्य्याचम्य उदकमवतीर्य्य उपस्पृशेत् ।

एवं हि समुदाचारो वरुणेनाभिमन्त्रितः ।"१।५८।६०

जितेन्द्रियो ब्राह्मणो ब्रह्मचारी चेदशुचि-नरस्य जलमन्नं वा भुङ्क्ते, तदा पीतं भुक्तञ्च वस्तु उद्गीर्य्याचमनं कृत्वा जलेऽवगाह्य वारुणमन्त्रं जप्त्वा च निजाधिकारं लभते। महर्षि-संवर्त्तेनोक्तम्—'निवेद्य गुरवेऽश्नीयात् प्राङ्मुखो वाग्यतः शुचिः।'१।१२ किञ्च—

"सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।

नान्तरा भोजनं कुर्य्यादग्निहोत्रसमो विधिः ॥

आचम्यैव तु भुञ्जीत भुक्त्वा चोपस्पृशेद्द्विजः ।

अनाचम्य तु योऽश्नीयात् प्रायश्चित्तीयते तु सः ॥

अनाचान्तः पिबेद् यस्तु योऽपि वा भक्षयेद्द्विजः ।

गायत्र्यष्टसहस्रन्तु जपं कृत्वा विशुध्यति ॥

अकृत्वा पादशौचन्तु तिष्ठन् मुक्तशिखोऽपि वा ।

विना यज्ञोपवीतेन आचान्तोऽप्यशुचिर्द्विजः ।"१२।१५

द्विजातीनां दिवा नक्तञ्चाशनं कर्त्तव्यमन्तरा भोजनं न कार्य्यम्। भोजनात् प्राक्, तथा भोजनात् परञ्चाचमनं करणीयम्। यो द्विज आचमनमकृत्वैव अश्नीयात् स प्रायश्चित्तं कुर्य्यात्। आचमनमकृत्वा यो द्विजः पिबेद् भक्षयेद्वा सोऽष्टसहस्रं जपं कृत्वा शुद्धो भवति। पादप्रक्षालनमकृत्वा दण्डायमानो मुक्तशिखो यज्ञोपवीतं विहाय आचामति यः, स कस्मिन्नपि कार्य्ये शुचिर्न भवतीति भावः।

अस्मिन् निबन्धे मया समासतो ब्रह्मचर्य्यविषयमधिकृत्यालोचितम्। न पुनर्विस्तरतः। यथा यथा मया धर्म्मशास्त्राणि आलोच्यन्ते तथा तथा धर्म्मशास्त्रगतब्रह्मचर्य्यं मां मोहयति। परन्तु अस्य प्रबन्धस्य विस्तारभयान्नालेखि विशेषः।

# किं कर्त्तव्यं गैर्वाणाभिज्ञैरिदानीम्

[ निबन्धकः—महोपाध्याय-श्रीकृष्णशङ्करशास्त्री ]

वेदादिशास्त्रविहितकर्माचरणबद्धश्रद्धानामप्यनवरतमैहिकं स्रक्-चन्दनादिसुखमामुष्मिकं स्वर्गादिसुखं वा तृणाय मत्वा तुरीये मोक्ष-नामनि परमपुरुषार्थे परं मनो ददतामतिपावनचरितानां महर्षि-वर्याणां बहुलबहुलानां महात्मनां जनयित्री भारतजननी कष्टं कृपणेव विगतसंस्कारेव चात्मानं बहिः प्रकटयितुमप्रगल्भा किञ्चिदिव शोकोपहतचेतना समालक्ष्यते। आन्वीक्षिक्यादिविद्यापारगैर्नीति-शास्त्रविशारदैर्लब्धविविधदेशभाषाचारविषयक-विज्ञानैर्मन्त्रिवर्य्यैर्निष्पक्ष-पातमुपदिष्टेन सार्वभौमेण राजन्वती पुनरियं पुराणवसुधा केनापि कारणेनावशेव क्षुधादिपीड़या संरब्धेव भूतावेशवशात् कोपाविष्टे-वाकृत्यदर्शनान्मूर्च्छितेव पातित्यहेतेः स्वब्धेवातर्कितोपनतादनिष्टा-द्दीनेव च शरणान्तराभावान्न केवलं भारतीयानां किन्तु समेषामपि देशान्तरीयाणां चिन्तकानां मनांसि बहुधा सन्तापयति। वेदा-पौरुषेयत्वनिरासकान्यत एव श्रुतेरनित्यतासमर्थनपर्यवसायीन्यत एव च कृतजैमिनीयतत्त्वसिद्धान्तखण्डनानि कुयुक्तिप्रयुक्तानि चार्वाक-वादसहोदराणि कु-शेमुषीविलसितानि शिष्टानपि कर्मिणः आचार-विमुखान् कुर्वन्ति। कति कति सन्ति तादृशा भारते लब्धजन्मानः स्वभाषाराज्यजनाभिमानरहिता मानुषापसदाः, ये हि नास्तिकभाषि-तानि वेदवाक्यानीवानुपूर्वीविशिष्टं मनसि धारयन्तः, वेदवाक्यान्यपि पौरुषेयत्वात् स्खलितप्रचुराण्युच्चाशयशून्यानि वृथा गणयन्तः, शिष्टान् कर्मिणो वेदाभ्यासजड़ा इति भर्त्सयन्तो जनन्या वसुधाया महान्तं क्लेशजातं वर्धयन्त्यश्च हन्त! सन्ततमन्तःसारशून्या दूषयन्ति परुष-

मलिनवाक्यजालैर्मनांसि सुपथगामिनामपि ; उत्पादयन्ति च ग्रन्थं मनस्विनामपि ।

अयं हि समुचितः काल उपदेशस्य पण्डितचिन्तकानां सतां संस्कृतसाहित्यपरिषत्सभ्यपदभाजाम् । पथानेन गमने ह्ययं दोषः समुदियात्तस्मादमुकेन पथा परं गमनं श्रेयसे इति समुपदिश्यन्ते युवानोऽनुकरणभ्रान्तचित्तास्तर्ह्येव स्यान्मन्यामहे समुद्बोधः प्राक्तनस्य भारतीयसंस्कारस्य ।

बहुसमादेव कालात्सर्वतो भारतं लब्धप्रचाराया अनादि-निधनाया वैदिक-लौकिक-भेदेन द्विधा विभक्ताया: सुरभारत्याः समुचितं पोषणं विना को नामाभ्युपायो भारताभ्युदयस्य । आसेतु-हिमालयं विविधाभिर्भाषाभिर्वेषादिभिराचारैश्चात्यन्तं भिन्नानामखिलानामपि जनानामभ्युदयाधारभूत-तत्त्वसंरक्षणमेव प्रथमकर्त्तव्यं देशाभिमानपरिपूरितान्तरङ्गाणामित्यत्र नास्ति विस्मयलेशोऽपि । तत्तद्देशेषु कोणे कस्मिंश्चित् केषाञ्चित्पण्डितानां समवायेन परं न तादृशं किमपि कर्त्तुं शक्यते, यदि भारतीयेष्वेकैकस्यापि चित्तं स्वकीयसंस्कारोद्बोधविजृम्भितं कुर्य्यात् । 'कलौ संख्याबलं बल'मिति भणितिर्हि सर्वत्रापि संख्याबलाधिक्य एव विजयसिद्धिं संसूचयति । स्थितावेतादृश्यां किमिति पण्डितैरौदासीन्येन कालो नीयते, किमिति च देवभाषाभिमानिभिर्जीवन्मृतव आस्थीयते ? बहवः किल पाषण्डाः संस्कृतकान्तारं दुर्गममपि महता प्रयासेन प्रविश्य तस्मात् सारभूतं सर्वं गृहीत्वा वञ्चयन्त्यविज्ञातलोकवृत्तान्तान् । इदानीमिकमेवास्ते कर्त्तव्यं, येन क्रमेण सुरभारत्यास्तथा च भारतजनन्यास्तत्सन्तानानाञ्च मङ्गलावाप्तिर्नातिदूरे भाविनी । तत्तु कर्त्तव्यं—'संस्कृतविश्वविद्यालय (Sanskrit University) स्थापनं नाम । सत्यं सन्ति बहूनि संस्कृतविद्यामन्दिराणि (Sanskrit Colleges) कलिकातायां, वाराणस्यां, गोश्रीवर्धमानपुरादिसामन्तराज्येषु चोत्तरोत्तरमभिवृद्धि-

भाञ्जि। तथापि विश्वविद्यालयस्यैकस्यात्यभावो महतामुपजनयति सन्तापं पण्डितानाम्। केन पुनरङ्गेन हीना पावनपुण्यप्रथा गैर्वाणी। अतिगहनानि विचारशक्त्युत्पादकानि शास्त्ररत्नान्यज्ञानतमोनिवारकाणि विलसन्ति तस्याम्। सहृदयमनोरञ्जकानि सकललोकसमादृतानि वर्त्तन्ते काव्यानि पराश्शतानि। आयुर्दैर्घ्यसम्पादनमार्गोपदेशपराणि सुखजीवितमधिकृत्य सुष्ठूपदिशन्ति सन्त्यायुर्वेदग्रन्थरत्नानि। निर्दोषं राज्यभरणक्रमं सुविशदं प्रतिपादयन्ति सन्त्यर्थशास्त्राणि नैकविधानि भूभरणधुरन्धराणां पठनाय। महाप्रासादादिनिर्मितिप्रकारोपदेशदानक्षमाणि मयमतादीनि वास्तुविद्याप्रतिपादनपराणि वर्त्तन्ते बहूनि। विशिष्य चाध्यात्मिकतत्त्वप्रकाशनतत्पराणि भाषान्तरासाधारणानि सन्ति वेदान्तनामभाञ्जि। शोचनीयमिदं, यदेतादृश्या सुरभारत्या समुचितं न लभ्यते प्रोत्साहनं प्रभुभ्यो राजभ्यो महाराजेभ्यः सम्राड्भ्यश्चेति। अतिक्रामति कालो यत्र निमेषमात्रमपि विलम्बो दोषाय, यत्परिहारो देशभाषाप्रचारणसाध्यः।

अयि भोः! मान्याः संस्कृतसाहित्यपरिषत्सामाजिका अन्ये चैतद्वाचका महाभागाः! किञ्चिदिवास्मिन् विषये विचारगतिं प्रवर्त्तयन्तु संस्कृतविश्वविद्यालयस्थापनमावश्यकं न वेति।

को हि पण्डितो देशभाषाभिमानी तत्र विप्रतिपद्यते, यत्र प्रतिपत्तिप्रदर्शनेन न केवलं स्वस्य स्वजनस्य भारतस्य, किन्तु सर्वस्यापि लोकस्य कल्याणाभिवृद्धिर्हस्तगता निश्चप्रचम्। विषयं चीममधिकृत्य महतां मतानि निपुणं धीरं चेतत्पत्रिकाद्वारा यदि प्रकाश्येत, तर्हि महान् स्यादुपकारः। यथाधिषणमत्र यतितुं सर्वदा सन्नद्धा वयमिति साञ्जलिबन्धं निवेदयामः। तत्र महाभागानामाज्ञामवगन्तुकामाः प्रतिपालयामश्च।

पत्रिकापीयं सुमधुरैरेतद्विषयकैरासुखवचनैर्वाचकवृन्दानां श्रद्धामत्र समाकर्षेदिति च विश्वसिमः॥

# शिवाजि-चरितम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—श्रीकालिदासविद्याविनोदः ]

महामोह हन्त्री महानन्द-दात्री
जगज्जीवसङ्घेष्वमोघासि शक्तिः ।
त्वमेवेश्वरी चिन्मयी सर्वरूपा
नमस्ते जगद्धात्रि दुर्गे भवानि ॥ १

भवानी भवानी भवानीति वाणी-
मुदारामुदारा मुदा ये जपन्ति ।
न रोगो न शोको न भीतिर्न दुःखं
कदाचित् कथञ्चित् कुतश्चिज्जनानाम् ॥ २

सदा हिन्दवो मन्त्रमिनं जपन्तो
न किं कर्म्म वा साधयन्ति स्म पूर्वम् ।
महाशक्तिमद्यास्मरन्तो वयं त्वां
पराधीनता-शृङ्खलाबद्धदेहाः ॥ ३

त्वमेवेश्वरस्य क्रियाशक्तिरूपा
विना त्वां शिवः स्याच्छवो वा न चान्यः ।
शिवाजेर्हृदि त्वं विराजस्यमोघा
समग्रस्य हिन्दोः स्थिरा मानसे स्याः ॥ ४

यथा रामचन्द्रस्तवाराध्य-पादं
समाराध्य लब्ध्वा तवैव प्रसादम् ।
महाशक्तिशाली स्वसैन्यैः समेत-
स्त्रिलोकैकवीरं दशास्यं जघान ॥ ५

भाञ्जि। तथापि विश्वविद्यालयस्यैकस्याल्यभावो महतामुपजनयति सन्तापं पण्डितानाम्। केन पुनरङ्गेन हीना पावनपुण्यप्रथा गैर्वाणी। अतिगहनानि विचारशक्त्युत्पादकानि शास्त्ररत्नान्यज्ञानतमो-निवारकाणि विलसन्ति तस्याम्। सहृदयमनोरञ्जकानि सकललोक-समादृतानि वर्त्तन्ते काव्यानि परःशतानि। आयुर्दैर्घ्यसम्पादनमार्गो-पदेशपराणि सुखजीवितमधिकृत्य सुष्टूपदिशन्ति सन्त्यायुर्वेदग्रन्थ-रत्नानि। निर्दोषं राज्यभरणक्रमं सुविशदं प्रतिपादयन्ति सन्त्यर्थ-शास्त्राणि नैकविधानि भूभरणधुरन्धराणां पठनाय। महाप्रासादादि-निर्मितिप्रकारोपदेशदानक्षमाणि मयमतादीनि वास्तुविद्याप्रतिपादन-पराणि वर्त्तन्ते बहूनि। विशेषश्चाध्यात्मिकतत्त्वप्रकाशनतत्पराणि भाषान्तरासाधारणानि सन्ति वेदान्तनामभाञ्जि। शोचनीयमिदं, यदेतादृश्या सुरभारत्या समुचितं न लभ्यते प्रोत्साहनं प्रभुभ्यो राजभ्यो महाराजेभ्यः सम्राड्भ्यश्चेति। अतिक्रामति कालो यत्र निमेषमात्रमपि विलम्बो दोषाय, यत्परिहारो देवभाषाप्रचारणसाध्यः।

अयि भो! मान्याः संस्कृतसाहित्यपरिषत्सामाजिका अन्ये चैत-दङ्कवाचका महाभागाः! किञ्चिदिवास्मिन् विषये विचारगतिं प्रवर्त्त-यन्तु संस्कृतविश्वविद्यालयस्थापनमावश्यकं न वेति।

को हि पण्डितो देशभाषाभिमानी तत्र विप्रतिपद्यते, यत्र प्रति-पत्तिप्रदर्शनेन न केवलं स्वस्य स्वजनस्य भारतस्य, किन्तु सर्वस्यापि लोकस्य कल्याणाभिवृद्धिर्हस्तगता निष्प्रपञ्चम्। विषयं हीममधिकृत्य महतां मतानि निपुणं धीरं चैतत्पत्रिकाद्वारा यदि प्रकाश्येत, तर्हि महान् स्यादुपकारः। यथाधिषणमत्र यतितुं सर्वदा सन्नद्धा वय-मिति साञ्जलिबन्धं निवेदयामः। तत्र महाभागानामाशयमवगन्तु-कामाः प्रतिपालयामश्च।

पत्रिकापीयं सुमधुरैरेतद्विषयकैरामुखवचनैर्वाचकवृन्दानां श्रद्धा-मत्र समाकर्षेदिति च विश्वसिमः॥

तथा देहि शक्तिं महाशक्तिरूपे
यथा म्लेच्छसैन्यान् समग्रान् हनाम ।
वयं भारते हिन्दुराज्यं विधाय
भवान्यद्य सर्वे सुखं त्वां भजामः ॥ ६

चितिस्त्वं मतिस्त्वं जगज्जीवसङ्घा-
नधिष्ठाय तिष्ठस्यमोघ-प्रभावा ।
जगत्पालकं विष्णुमाक्रम्य तिष्ठ-
न्त्यमुं नीतवत्यर्णवे गाढ़निद्राम् ॥ ७

स्तुता ब्रह्मणा त्वं विमुच्याथ विष्णुं
यथा शत्रुनाशे नियुक्तं चकर्थ ।
तथा भारतीयानिमान् गाढ़निद्रान्
प्रवोध्य स्वयं शत्रुनाशे नियुङ्क्ष्व ॥ ८

त्वमध्यात्मविद्यास्वरूपा स्थिताऽसि
पुरा भारते कर्म्मशक्तिस्त्वमासीः ।
इदानीं शिवे कर्म्मणाध्यात्मभावं
निरस्याम्बिके शत्रुनाशं विधेहि ॥ ९

त्वमेवासि दुर्गे जगद्दुःख-हन्त्री
जगत्तो बहिर्हिन्दवो भारते किम् ।
सुखी म्लेच्छसङ्घः स्वदेशे विदेशे
सदा हिन्दवो दुःखदुःखेन दग्धाः ॥ १०

अवोचस्त्वमार्य्यान् ऋषीन् पूर्वमेवं
यदा दानवाः पीड़यिष्यन्ति युष्मान् ।
तदाहं समग्रान् हनिष्यामि दैत्यान्
यथा शुम्भनाशोऽद्य दृष्टो भवद्भिः ॥ ११

तदेतत् स्वकीयं वचो रक्ष मातः
समाविर्भवन्ती भुजे सेवकानाम् ।

महादैत्यरूपानिमान् म्लेच्छसङ्घान्
　　निहत्याद्य वेदोक्त कर्म्माणि रक्ष ॥ १२
वयं कातरा पामरा वा भवेम
　　न ते वाक्यमम्ब ! क्वचिद्भावि मिथ्या ।
अतो हिन्दुराज्यं शुभं स्यास्यतीदं
　　न लोपं गमिष्यत्यदो हिन्दु-नाम ॥ १३
त्वमद्यप्रभृत्येव चेद् भारतेऽस्मिन्
　　भवानीगृहान्तश्चिरं सुप्रसन्ना ।
विराजस्यमोघप्रभावा हि दुर्गे !
　　वयं म्लेच्छसैन्यान् समस्तान् जयेम ॥ १४
जयाय प्रयत्नाः स्मरन्तीह चेत्त्वां
　　तथा नामधेयं तवैवालपन्ति ।
विपद्विघ्नपातो न तेषां कदाचित्
　　कथञ्चित् कुतश्चिद् रणे दुर्गमेऽपि ॥ १५
त्वदाशीः-प्रसादं भजन्तो व्रजन्तो
　　लभन्ते मनस्कामनां सर्वरूपाम् ।
कियान् शत्रुनाशः कियान् राज्यलाभः
　　समस्ता करस्था न सम्पत् किमेषाम् ॥ १६
तदा हिन्दवः सर्व एवं विदित्वा
　　भवानीगृहान्तः समेता बभूवुः ।
समासाद्य सर्वे भवानीप्रसादम्
　　अजेयाः सपत्नैर्बलिष्ठाश्च जाताः ॥ १७
ततो हिन्दुभिस्ते जिता म्लेच्छसैन्या
　　बभूवुर्विनष्टा इतो दाक्षिणात्यात् ।
तदा भारतं हिन्दुसाम्राज्यमासीद्
　　बलिष्ठं गरिष्ठं स्वधर्म्माढ्यमार्य्यम् ॥ १८

तथा देहि शक्तिं महाशक्तिरूपे
यथा म्लेच्छसैन्यान् समग्रान् हनाम ।
वयं भारते हिन्दुराज्यं विधाय
भवान्यद्य सर्वे सुखं त्वां भजामः ॥ ६

चितिस्त्वं मतिस्त्वं जगज्जीवसङ्घा-
नधिष्ठाय तिष्ठस्यमोघ-प्रभावा ।
जगत्पालकं विष्णुमाक्रम्य तिष्ठ-
न्त्यमुं नीतवत्यर्णवे गाढ़निद्राम् ॥ ७

स्तुता ब्रह्मणा त्वं विमुच्याथ विष्णुं
यथा शत्रुनाशे नियुक्तं चकर्थ ।
तथा भारतीयानिमान् गाढ़निद्रान्
प्रबोध्य स्वयं शत्रुनाशे नियुङ्क्ष्व ॥ ८

त्वमध्यात्मविद्यास्वरूपा स्थिताऽसि
पुरा भारते कर्मशक्तिस्त्वमासीः ।
इदानीं शिवे कर्मणाध्यात्मभावं
निरस्याम्बिके शत्रुनाशं विधेहि ॥ ९

त्वमेवासि दुर्गे जगद्दुःख-हन्त्री
जगत्तो वहिर्हिन्दवो भारते किम् ।
सुखी म्लेच्छसङ्घः स्वदेशे विदेशे
सदा हिन्दवो दुःखदुःखेन दग्धाः ॥ १०

अवोचस्त्वमार्यान् ऋषीन् पूर्वमेवं
यदा दानवाः पीड़यिष्यन्ति युष्मान् ।
तदाहं समग्रान् हनिष्यामि दैत्यान्
यथा शुम्भनाशोऽद्य दृष्टो भवद्भिः ॥ ११

तदेतत् स्वकीयं वचो रक्ष मातः
समाविर्भवन्ती भुजे सेवकानाम् ।

महादैत्यरूपानिमान् म्लेच्छसङ्घान्
निहत्याद्य वेदोक्त कर्म्माणि रक्ष ॥ १२
वयं कातरा पामरा वा भवेम
न ते वाक्यमम्ब ! क्वचिद्भावि मिथ्या ।
अतो हिन्दुराज्यं शुभं शाश्वतीदं
न लोपं गमिष्यत्यदो हिन्दु-नाम ॥ १३
त्वमद्यप्रभृत्येव चेद् भारतेऽस्मिन्
भवानीष्टदात्रस्थिरं सुप्रसन्ना ।
विराजस्यमोघप्रभावा हि दुर्गे !
वयं म्लेच्छसैन्यान् समस्तान् जयेम ॥ १४
जयाय प्रयत्ताः स्मरन्तीह चेत्त्वां
तथा नामधेयं तवैवालपन्ति ।
विपद्विघ्नपातो न तेषां कदाचित्
कथञ्चित् कुतश्चिद् रणे दुर्गमेऽपि ॥ १५
त्वदाशीः-प्रसादं भजन्तो व्रजन्तो
लभन्ते मनस्कामनां सर्वरूपाम् ।
कियान् शत्रुनाशः कियान् राज्यलाभः
समस्ता करस्था न सम्पत् किमेषाम् ॥ १६
तदा हिन्दवः सर्व एवं विदित्वा
भवानीष्टदात्रः समेता बभूवुः ।
समासाद्य सर्वे भवानीप्रसादम्
अजेयाः सपत्नैर्बलिष्ठाश्च जाताः ॥ १७
ततो हिन्दुभिस्ते जिता म्लेच्छसैन्या
बभूवुर्विनष्टा इतो दाक्षिणात्यात् ।
तदा भारतं हिन्दुसाम्राज्यमासीद्
बलिष्ठं गरिष्ठं स्वधर्म्माढ्यमार्य्यम् ॥ १८

पराधीनता-दुःखमेवं यथा नो
भवेदम्ब भूयस्तथा त्वं विधेहि ।
यदन्यत् सुदुःखं तवास्ते स्वहस्ते
तदेवाथ दत्त्वा सुशिक्षां प्रदेहि ॥ १९

इमे भारतीयाः सुताश्चेत्तवाम्ब !
त्वमेतान् विनिद्रान् न निद्रापयाद्य ।
स्वयं शाधि चास्मान् न दैत्यादिवर्गैः
पदाघ्रातदुःखं स्वयं त्वं विधेहि ॥ २०

न शारीर-पीड़ा भवेद् दुःखदात्री
परं धर्म्म-पीड़ा न भूयान्न भूयात् ।
वयं दैत्यतो भीतभीताः समस्ताः
सदा धर्म्मनाशान्न मृत्योः कदाचित् ॥ २१

अयं स्थूलदेहः सदायाति याति
स्थिरो वा न चायं कदाचित् कथञ्चित् ।
मुनीनां नृपानाञ्च देहो न नित्य-
स्ततस्तस्य नाशे कियत्यस्ति चिन्ता ॥ २२

शुभं कर्म कृत्वा स्वधर्मे स्थितानां
भवेदूर्द्ध्वतो ब्रह्मलोके प्रतिष्ठा ।
तदात्यन्तदुःखस्य हानिः पुमर्थो
मृतानां हि पञ्चाग्नि-विद्या-प्रसिद्धिः ॥ २३

त्वमेवासि विद्या परा मोक्षदात्री
त्वमेवापरा साङ्गवेदादिरूपा ।
त्वमेवेश्वरी भोक्तृ-शक्तिस्वरूपा
सुखं सर्वथास्मभ्यमद्य प्रदेहि ॥ २४

वयं शान्तिमादौ न याचामहे त्वां
न वा मुक्तिमध्यात्मबोधादिदानीम् ।

पुनर्म्लेच्छसैन्यैरनाक्राम्यमेतद्
यथा भारतं स्यात् तथा त्वं विधेहि ॥ २५
पुनर्भारतं सामगानैरुपेतं
पुनर्योगदानक्रियाभिः समेतम् ।
पुनर्ब्रह्मचर्य्यादिसंस्था यथा स्याद्
जगन्मङ्गलाय त्वमेवं विधेहि ॥ २६
तपो-विघ्नहीनं वनं तापसानां
तपस्यन्तु विप्रा वनस्थाः समन्तात् ।
तथा क्षत्र वैश्यौ स्वकर्म्मप्रवृत्तौ
स्वधर्म्मं भजेतां कदाचिन्न दास्यम् ॥ २७
सदा भारते वर्द्धतां ज्ञानचर्चा
सदा दानयज्ञोत्सवो हिन्दुगेहे ।
तथा धर्म्महानिः कदाचिन्न भूयात्
सदा देवताः सुप्रसन्ना भवन्तु ॥ २८
वरं देहि मातः प्रसन्ना सती त्वं
सति त्वं स्वयं भारते यत् सतीत्वम् ।
प्रदर्श्याम्बिकेऽग्निच्चयो यच्चरित्रं
लभन्तां रमण्यः यदा तत्पवित्रम् ॥ २९
इति विविधविधानैः पूजयित्वा भवानी-
मभिमतवरलाभाद् हृष्टचित्तः शिवाजिः ।
मिलितप्रकृतिपुञ्जः सिंहवत् सिंहदुर्गे
चिरमलभत सुस्थां हिन्दुसाम्राज्यलक्ष्मीम् ॥ ३०

इति पञ्चमः सर्गः ।

---

# विजातीयकाव्यमिश्रितभेदविचारः

[ निबन्धकः—विद्यामार्त्तण्डः श्रीसीतारामशास्त्री ]

"सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः ।
अन्योऽन्ययोगादेवं स्याद्भेदसंख्या तु भूयसी ॥"

( का० प्र० उ०५ सू०४७ )

अधुना विजातीयकाव्यमिश्रणभेदा वक्तव्याः। अर्थात् यथा ध्वन्यादिकाव्यानां शुद्धभेदाः स्वस्वसजातीयभेदैः सहैकैकस्मिन् काव्ये मिलित्वा मिश्रितभेदानुत्पादयन्ति, तथैव सर्वे ते स्वस्वविजातीयैस्तत्तत्काव्यभेदैः सह समानकाव्येषु मिश्रणं कृत्वा विविधानपूर्वापूर्वमिश्रितभेदानुत्पादयन्ति। यथा—ध्वनिना ध्वनेर्योगस्तथा मध्यमावराभ्यामपि तस्य भवति। यावन्तोऽपि पूर्वोक्ताः काव्यभेदास्तेषु प्रत्येकं भेदः प्रत्येकभेदेन साकं मिश्रणं कर्त्तुं शक्नोति, मिश्रितेष्वपि च मिश्रितैः सह मिश्रणेन काव्यानामनन्ता एव भेदा जायन्ते, इति संक्षिप्तोऽर्थः। एतदतिविस्तरेण काव्यभेदकथनस्य फलं तु 'एकोऽप्यर्थो नानाकविभिर्नानाकाव्यैरुच्यमानो नव नव एव प्रतिभाति, न तु चर्वितचर्वणमिव भवति' इति। तदेवं प्रपञ्चातिशयेन काव्यभेदवर्णनं कवीनां महदुपकारकं समुदेति।

तदेवं चतुर्थपञ्चमोल्लासोक्तव्यवस्थानुसारेण—

(१) ध्वनिना ध्वनेर्योगः—"कणपाहुणि आदे अर०" इत्यत्र,

(२) गुणीभूतव्यङ्ग्येन ध्वनेर्योगः—"अयं स रसनोत्कर्षी०" ( का० अ० उ० ५श्लो० ११७ ) इत्यत्र,

(३) एवमवरकाव्येन च ध्वनेर्योगः—"जनस्थाने भ्रान्तम्०" (का० प्र० उ० ५श्लो० ) इत्यत्रोपादेयः। इदमत्राकूतम् यथा—"अयं स

रसनोत्कर्षौ" इति पूर्वोक्तोदाहरणे करुणरसमादाय ध्वनित्वं, तत्रैः शृङ्गाररसस्य गौणत्वमादाय गुणीभूतव्यङ्ग्यत्वं च भवति, तथैव "जन स्थाने भ्रान्तमित्यादौ वाच्योपमामादाय अवरकाव्यत्वं व्यङ्ग्योपमा मादाय च ध्वनित्वमित्युभयोः काव्ययोरेकस्मिन् पद्ये संसृष्टिरिति यद्याशङ्कते—एक एवार्थोऽत्र व्यङ्ग्यो वाच्यश्चेति कस्तयोः संसृष्टौ प्रयो जनम्? वैचित्र्यमिति गृहाण। एवमेकस्मिन्नेव काव्ये विभिन्नबुद्ध्या श्रयणेन उत्तममध्यमाधमकाव्यत्वानि, तेषां च यथोपयोगं संसृष्टि सङ्करैर्योगा इति न सहृदयधियां किमप्यत्र दुःसम्भाव्यमिति विरमामः।

अपरञ्च नायमस्माकमभिमानविषयोऽर्थो यदुपरि विजातीयकाव्य योगे यदस्माभिरुक्तं तदविकलमेव व्याख्या-शिरसि दत्तमूलसूत्रा क्षरानुरूपमेव, अपि तु पदार्थस्वाभाव्यानुरोध्येव।

किञ्च यद्यपि गोविन्दठक्कुराणां टीकाक्षराणि किञ्चित् संवदन्ति, पूर्वोक्तव्याख्यापक्षे वक्तुरभिप्रायस्तु तदनुकूलोऽन्यथा वास्तीत्यत्र सर्वथा-ऽपि न निश्चिनुमः। यथा—"तेन ध्वनिना गुणीभूतव्यङ्ग्येन वाच्या-लङ्कारेण च ध्वनेर्योगः" इति तदीयपङ्क्तिः। अत्र 'ध्वनिना गुणीभूतव्यङ्ग्येन' इति तृतीयान्तपदद्वयेन सजातीयविजातीयकाव्यद्वय-योगे सिद्धे वाच्यालङ्कारेण चेति चोपपदेन वाच्यालङ्कारशब्देन परिशेषा-दवरकाव्यसंग्रहमपहाय गत्यन्तरविरहान्नार्थान्तरमवलम्बितुं शक्यत इति प्रवचनविदामेव ध्येयम्।

न च 'वाच्यालङ्कारेण' इति पदं 'गुणीभूतव्यङ्ग्ये' इत्यत्र विशेषणं, च शब्दस्तु ध्वनिसमुच्चायक इति नात्रैतत्पदस्यावरकाव्यपरत्वमिति वाच्यम्। वाच्यालङ्कारभिन्नानां गुणीभूतव्यङ्ग्यानां सजातीयसङ्कीर्ण-भेदेषूपयोगेऽपि विजातीयसंकीर्णभेदप्रपञ्चे परित्यागे कारणानुपलम्भात्। (सजातीयसङ्कीर्णभेदेषु वाच्यालङ्कारभिन्ना अप्युपादीयन्ते, इदानीं तु विजातीयसङ्कीर्णभेदप्रपञ्चे ते परित्यज्यन्त इत्यत्र कारणं न पश्याम

इति भावः। सजातीयसङ्कीर्णभेदेषु येषामेव चमत्कारजनकत्वं त एवेदानीं न चमत्कारं जनयिष्यन्तीत्याश्चर्यमित्याकूतम्। )

न च वाच्यालङ्कारत्वेन वस्तुव्यङ्ग्यालङ्कारवद्भेदानामेव व्यावृत्तौ तात्पर्यं, न तु तद्रहित-यावद्भेदानामिति वक्तव्यम्। वस्तुव्यङ्ग्यालङ्काराणां गुणीभावासम्भवेन गुणीभूतव्यङ्ग्यपदेन हेयार्थस्य परित्यागेन तादृशविशेषणस्य वैयर्थ्यापत्तेः।

सूत्रार्थनिरूपणोपयोगि-व्यङ्ग्यार्थप्रपञ्चः।

व्यङ्ग्योऽर्थस्तावत्सप्तविधः—(१) रसादिरूपः ( असंलक्ष्यक्रमः ) (२) वस्तुव्यङ्ग्यो वस्तुरूपः (३) शब्दव्यङ्ग्यो वस्तुरूपः (४) अलङ्कारव्यङ्ग्यो वस्तुरूपः (५) वस्तुव्यङ्ग्योऽलङ्कारः (६) शब्दव्यङ्ग्योऽलङ्कारः (७) अलङ्कारव्यङ्ग्योऽलङ्कारश्चेति। तत्रैते सर्वेऽपि एकपञ्चाशत्संख्याकेषु ध्वनिभेदेष्वन्वीक्षणीयाः। यथा—प्रथमो रसादिरूपो व्यङ्ग्यः पञ्चमभेदमारभ्य दशमभेदपर्यन्तेषु षट्सु भेदेषु, द्वितीयो वस्तुव्यङ्ग्यो वस्तुरूपो ध्वनिः पञ्चदशभेदमारभ्य सप्तदशभेदपर्यन्तेषु सप्तविंशमारभ्यैकोनत्रिंशपर्यन्तेषु एकोनचत्वारिंशमारभ्यैकचत्वारिंशपर्यन्तेषु च नवसु भेदेषु, शब्दव्यङ्ग्यो वस्तुरूपस्तृतीयः प्रथममारभ्य चतुर्थपर्यन्तेषु एकादशद्वादशयोश्च षट्सु भेदेषु, चतुर्थोऽलङ्कारव्यङ्ग्यो वस्तुरूपो ध्वनिरेकविंशमारभ्य त्रयोविंशपर्यन्तेषु त्रयस्त्रिंशमारभ्य पञ्चत्रिंशपर्यन्तेषु पञ्चचत्वारिंशमारभ्य सप्तचत्वारिंशपर्यन्तेषु च नवसु भेदेषु, पञ्चमो वस्तुव्यङ्ग्यालङ्कारोऽष्टादशभेदमारभ्य विंशतितमभेदपर्यन्तेषु त्रिंशत्तमभेदमारभ्य द्वात्रिंशत्तमभेदपर्यन्तेषु द्वाचत्वारिंशभेदमारभ्य चतुश्चत्वारिंशभेदपर्यन्तेषु एकपञ्चाशत्तमे च दशसु भेदेषु, षष्ठः शब्दव्यङ्ग्योऽलङ्कारस्त्रयोदशचतुर्दशयोर्द्वयोः, सप्तमोऽलङ्कारव्यङ्ग्योऽलङ्कारश्च चतुर्विंशभेदमारभ्य षड्विंशभेदपर्यन्तेषु षट्त्रिंशत्तममारभ्याष्टत्रिंशत्तमभेदपर्यन्तेषु अष्टचत्वारिंशभेदमारभ्य पञ्चाशत्तमभेदपर्यन्तेषु च नवसु भेदेषु वर्त्तन्ते इति।

एवं यावन्त्यपि ध्वनिगुणीभूतव्यङ्ग्यकाव्यानि, तदीयानि संकीर्णा-न्यसङ्कीर्णानि च प्रभेद-काव्यानि एतैरेव व्यङ्ग्यभेदैराकलितानि यथा-यथं विवेक्तव्यानि, द्रष्टव्यानि च। इह वस्तुव्यङ्ग्यालङ्कारेषु नागेश-मतानुसारेण शब्दार्थोभयशक्तिमूलमेकपञ्चाशत्तमभेदमादाय ते (वस्तु-व्यङ्ग्यालङ्काराः) द्वयेव परिगणितास्तेन एकचत्वारिंशद्भेदा गुणीभूत-व्यङ्ग्यानाम्। इतरेषां नये तु द्वाचत्वारिंशदेव भेदा इति मन्तव्यम्। "वस्तुनाऽलङ्कार एवात्र व्यङ्ग्यो भवति नार्थशक्तिमूल इव वस्त्वपि" इतीह नागेशमतम्।

सूत्रार्थः—

इह विजातीयकाव्यमिश्रणप्रस्तावे यावद्भिरपि गुणीभूतव्यङ्ग्यैः सह ध्वनेर्योगः, इति मतिमाश्रित्य तावत् सूत्रार्थो विविच्यते।

सूत्रम्—"सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः।" इति

वृत्तिः—'तैरेव अलङ्कारैरलङ्कारयुक्तैश्च तैः' इति।

(क) तत्र सालङ्कारैरिति आवृत्त्या एकशेषेण वा द्विः पठ्यते, सालङ्कारैः सालङ्कारैरिति। तत्र च प्रथमपदमादाय तैरेवालङ्कारै-रित्यर्थः, द्वितीयपदावलम्बनेन च अलङ्कारयुक्तैश्च तैरित्यर्थो वृत्तौ कृतः। तत्र द्वावलङ्कारशब्दौ, एकश्च तच्छब्दः। तदिह प्रथमा-लङ्कारशब्देन रसादिरूपालङ्काराणां, द्वितीयालङ्कारशब्देन शब्दव्यङ्ग्या-लङ्कारस्य अलङ्कारव्यङ्ग्यालङ्कारस्य च ग्रहणम्। एवं तच्छब्देन अव-शिष्टानां शब्दवस्त्वलङ्कारव्यङ्ग्यवस्तूनां परिग्रहः। तथा च त्रिभिः शब्दैः पूर्वोक्तरीत्या द्वाचत्वारिंशद्भेदानां गुणीभूतव्यङ्ग्यानां संग्रहो नवानाञ्च ध्वनिमात्रविषयाणां वस्तुव्यङ्ग्यालङ्काराणां वर्जनं सम्पद्यते। विनैव गुणीभूतव्यङ्ग्यशब्देन विशेषणमाहात्म्येन उपादेयोपादानेन वर्ज्यवर्जनेन च तदर्थो ( गुणीभूतव्यङ्ग्यशब्दार्थो )ऽवसितो भवतीति तटस्थलक्षणया ध्वनौ योगाद्यं गुणीभूतव्यङ्ग्यकाव्यस्य बोध इति सूत्र-कारस्य रचनापाण्डित्यं वा "सगुणीभूतव्यङ्ग्यैः सालङ्कारैः सहजभेदैः

स्वैः” इति ध्वनिकारशब्दानुसरणं वा अन्यद्वेति सुधीभिराकलनीयम्। मिश्रणं च ध्वनिगुणीभूतव्यङ्ग्ययोः संसृष्टिसङ्करैश्चतुर्भिः प्रकारैर्भवतीत्यत्र न किञ्चिद्वक्तव्यमस्ति।

(ख) अथ सूत्रावलम्बनीभूतध्वनिवाक्यस्य कथञ्चित्(१) नागेशकृतव्याख्यायाश्च संवादेन गुणीभूतव्यङ्ग्यविशेषैरेव ध्वनेर्योग इत्यभिप्रायेण व्याख्यानम्—तत्र सूत्रं तदीया वृत्तिश्च पूर्वं प्रादर्शिषाताम्, ध्वनिकारवाक्यन्तु—

"स-गुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः।

सङ्करसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा" ॥ इति।

तत्रैतस्मिन् ध्वनिवाक्ये तावद् गुणीभूतव्यङ्ग्यैरिति प्रधानं पदं कण्ठोक्तमिव, प्रकृत मम्मटसूत्रे तत्स्थानं तैरिति सर्वनाम्नाऽऽकलितम्। सालङ्कारैरिति पदमुभयत्र समानाक्षरमेव। सह प्रभेदैः स्वैरित्येष भागो विशिष्यपदार्थप्रपञ्चनमात्रपरत्वेन नातिरिक्तं कञ्चिद्विशेषमाधत्ते विजातीयसंमिश्रणविचारे। अन्यदपि यत्किञ्चिदुभयोः समानमेवार्थतः। एवं चकारोऽपि प्रकृतसूत्रस्थः 'ध्वनिना ध्वनेर्योगः, तैश्च पूर्वोक्तैर्गुणीभूतव्यङ्ग्यैर्ध्वनेर्योगः' इति पूर्वोक्तमेव स्मारयति, न त्वर्थान्तरं वदति। तदित्थमाश्रयाश्रितयोरुभयोरपि वाक्ययोः सम्यक्शब्दार्थालोचने जाते किं पर्यवस्यतीति समीचीनावधानेन द्रष्टव्यम्।

यथा—अवलम्बनीयवाक्ये तावद् योजनाद्वयं प्रतिभाति—

पुनरपि पुनश्च स ध्वनिः स्वैः प्रभेदैः सह सालङ्कारैर्गुणीभूतव्यङ्ग्यैः सङ्करसंसृष्टिभ्यां बहुधोद्द्योतते आविर्भवतीत्येका।

अपरा च सालङ्कारैः स्वैः प्रभेदैः सह गुणीभूतव्यङ्ग्यैर्बहुधोद्द्योतत इति।

---

(१) 'अलङ्कारयुक्तैश्च तैरि'त्यत्र तैरित्यनेन वस्तुमात्ररूपगुणीभूतव्यङ्ग्यैरित्यर्थो गृहीतो नागेशैः, स तु ध्वनिकारवाक्यासहकारित्वात्त्यज्यत इति कथञ्चित्पदस्वारस्यम्।

अत्रोभयोर्योजनयोर्मम्मटस्य प्रथम एवाग्रह इति सुस्पष्टमेव, अन्यथा प्रभेदैरित्यादिना सह सालङ्कारैरित्यस्यापि परित्याग एव तत्सूत्र अभविष्यत्।

किञ्च स्वप्रभेदेषु सालङ्कारत्वविशेषणे कृते स्वैः प्रभेदैः सहेति तृतीयायाः "सहयुक्तेऽप्रधाने" इति पाणिन्यनुशासनवशादप्रामाख्य-सूचकत्वेन 'ध्वनौ गुणीभूतव्यङ्ग्यानां स्वातन्त्र्येण योगः, तैश्च सह अप्रधानानां सालङ्कारस्वप्रभेदानामपि योग इत्यर्थावसितौ ध्वनि-वाक्यीयस्य महतो भागस्य प्रधानीभूतार्थान्तर्भावेण वैयर्थ्यमेवापद्येत। अत एव मम्मटैः स्वैः प्रभेदैरित्यस्य त्यागेऽपि सालङ्कारैरित्युपादायि। तस्मात्प्रथमैव योजना संवादिनी सर्वैरपि व्याख्यानकुशलैराश्रयेति नासम्भावनीयमतितराम्।

एवञ्च सालङ्कारत्वस्य गुणीभूतव्यङ्ग्येषु विशेषणत्वेन ध्वनौ विजातीय-संमिश्रणे निरलङ्काराणां गुणीभूतव्यङ्ग्यानां व्यावृत्तिरेव परिणताऽवशिष्यते। तत्रापि 'अलङ्कारयुक्तैश्च तैः' इत्यत्र नागेशादिमतेन वाच्यालङ्कारपरिग्रहे द्वाचत्वारिंशद्भेदेषु सर्वात्मनाऽपि समासतश्चतु-र्विंशतिभेदानामेव मिश्रणमायाति। चत्वारोऽविवक्षितवाच्याश्चत्वारः शब्दशक्तिमूला नव वस्तुव्यङ्ग्यवस्त्वेव एकश्चोभयशक्तिमूलः सङ्कलनया-ऽष्टादशभेदा वाच्यालङ्कारहीनाः परित्यज्यन्त एव। इति निष्पन्नं सर्वप्रधानाचार्यवाक्यानामेकवाक्यतया गुणीभूतव्यङ्ग्यविशेषैरेव ध्वने-र्योग इति।

इदं चात्र चिन्त्यं काव्यानां भूयस्त्वं कामयमानानां विदुषां, यदनयोः कोऽर्थ उपादेयः—सर्वैर्वा गुणीभूतव्यङ्ग्यैर्ध्वनेर्योगः, कैश्चिदेव वेति।

यद्यत्र कैश्चिदेवेति वदामः, किं कारणं केषांचित्परित्यागे ? अ-चमत्कारित्वमिति चेत्, ये पुनर्ध्वनौ ध्वनित्वमुपगता गुणत्वावस्थायां च गुणीभूतव्यङ्ग्यत्वप्राप्ताः सजातीयमिश्रणे चैवं चमत्कारवशादुपयुक्ताः,

इदानीं तु भूयस्त्वकामनायामपि विजातीयसंमिश्रणे न चमत्कारिण इति महती विनष्टिः।

तस्मात्प्रथममेव व्याख्यानमस्माकं सम्मतम्। भवेच्चेदपि परेषां वर्त्तमानानां विदुषामिति सम्प्रति विरमामस्तावत्साहित्यशास्त्रविदां मतश्रवणश्रवणाः। ओं तत्सत्।

---

## भैमीवरुणदूतीसंवादः *

[ निबन्धकः—श्रीयोगीन्द्रनाथविद्याचुञ्चुः ]

भैमी—का त्वं मध्यवयाः सुनिर्मलतरस्निग्धोज्ज्वलप्रेक्षणे
कस्माद्वा पुररक्षि-रक्षितमिदं गेहं गता निर्भयम्।
दूती—सौजन्यामरदौत्यकार्य्यमधुना ह्यस्त्वमाप्ता वरात्
कन्यान्तःपुरमागतास्मि सुरभे त्वं काद्यतः कथ्यताम् ॥१
भै—मां जानीहि सुतां नृपस्य दमयन्त्याख्यां व्रतालम्बिनी-
मुद्देश्यं तव किं पदाम्बुजरजःपातस्य मे कुट्टिमे।
दू—दिक्पातुर्वरुणात्त्वदीयनिलयं प्राप्तास्मि चन्द्रानने
सन्दिष्टं त्वयि यत्तवैव सविधे वक्तव्यमेतच्छृणु ॥२
भै—सौभाग्यं मम पूर्वपूरुषतपःसूतं सुरानुग्रहात्
सुव्यक्तं परिलक्षितं तदधुना सन्देशवार्त्तां वद।
दू—यः पाशी दिगधीश्वरस्तव कथां वावद्यते केवलं
त्यक्ताहारसुषुप्तिरेष भजते रिक्तास्पदं चिन्तितः ॥३
भै—पूर्वं वा ननु साम्प्रतं किमपि मे नानुष्ठितं विप्रियं
प्रेष्ठं वा सलिलेश्वरस्य तदहो मच्चिन्तने का रतिः।

---

* प्रकाशकः—श्रीहरिपदभारतीभट्टाचार्य्यः।

दू—श्रुत्वा ते सुरराजरञ्जितसभास्थस्यामशेषान् गुणान्
　रूपस्याप्रतिमं बिभर्त्ति हृदयेऽशान्तिं मनो नोदयात् ॥४

भै—वाताधिक्यवशात् किमेष वरुणो जातः प्रमत्तोऽधुना
　वार्द्धक्ये पुनरेव यौवनवती-पाणिग्रहं वाञ्छति ।

दू—भोगाशा न कदापि शाम्यति शुभे भोगैः पुनर्वर्द्धते
　यज्ञादौ त्रिदशैः पयोदधिघृतं तेजःप्रदं भुज्यते ॥५

भै—देवेभ्योऽधिकसद्गुणैर्नरकुलं प्रायेण धर्मक्रियं
　वानप्रस्थ्यमुरीकरोति बहुशः पञ्चाशता वत्सरैः ।

दू—एभिः किं विफलैर्वचोभिरिह मे दूत्याः समालोचितैः
　सन्दिष्टे विषये कुरुष्व ललिते चित्तं प्रतिष्ठापितम् ॥६

भै—सिद्धान्तं गतमेव दार्ढ्यमचिरात् चैत्रे मदीयात्मनि
　मूलं प्लक्षतरोर्यथाद्रिशिखरे नोन्मूल्यते केनचित् ।

दू—त्वं बाला परिलक्ष्यसे वपुषि ते कौमारबाल्यध्वजा
　तारुण्यं नहि तत्कथं प्रभवति स्वार्थावबोधो हृदि ॥७

भै—नो मन्ये वरुणस्य तेऽसमशरम्लानस्य बालां प्रति
　दूतीप्रेरणकार्य्यमार्य्यमधुना बालः स एव स्फुटम् ।

दू—यः कन्दर्पशरैरलौह-घटितैर्बद्धोऽपि मर्माहतः
　प्राशयेत् स हि मूढ़-बालक इवाकार्य्यं तनोति स्वयम् ॥८

भै—वाढ़ं ते वचनं यथैव न तथा कार्य्यं मया लक्ष्यते
　मां बालामवलोक्य केन विविधं दौत्योचितं जल्पसि ।

दू—सोऽस्माकं प्रभुरप्पतिर्वयमलं वश्या भजामः कृपां
　जीवामः कथमेव चेत् क्षणमिह प्रोल्लङ्घ्यते तद्वचः ॥९

भै—तादृङ् मे प्रभुरस्ति तस्य वशगा सर्वात्मनाहं सदा
　यावज्जीवमियं विधास्यति गिरं मौलौ प्रतिष्ठापिताम् ।

दू—यावज्जीवमहो प्रभुर्न भवति स्त्रीणां क्वचित् कश्चन
　कौमारे जनकस्ततो हि दयितस्तस्मिन् मृते दारकः ॥१०

भै—याद्यं मध्यवयो यतस्तनुभृतामाद्यन्तकालो वृथा
तारुण्यं प्रकटीकरोति क्षतितां धर्म्यं प्रबोधं बलम् ।
दू—याल्वेतद् विफलैः क्षतं हि गदितैर्वाग्जालपुष्टैर्हितं
श्रोतव्यं यदि तच्छृणु प्रियवचो नोपेक्ष्यतां दिक्पतिः ॥११
भै—सत्यं तच्चिरसिद्धमेव वचनं यादृक् प्रभू राजते
तद्भृत्यादर एव तादृशगुणाचारा भवन्तीह यत् ।
दू—केनास्मि भ्रमरे गुणेन पयसां भर्त्तुः समालिङ्गिता
यत्त्वं मां दयिते सुरम्यवचनैः प्रीणासि सद्योऽतिथिम् ॥१२
भै—प्राग् दौत्यं कथितं ममैव पुरतो यत्नस्तदर्थं क्षत-
श्चातिथ्यं कथमुच्यते तव गिरा कापव्यमुज्जृम्भितम् ।
दू—हृद्भावः सुरुचे सुधोभिरनिशं सम्पोष्यते केवलं
गौणीभूतमिदं त्वयात्र निपुणं निर्द्धार्यतामन्तिमम् ॥१३
भै—किं पक्षद्वयसंश्रयेण मनसा त्वेकः प्रतिष्ठाप्यतां
दूतीभिर्न हि लभ्यतेऽतिथिसमा पूजा गृहस्थाङ्गणे ।
दू—दौत्ये कर्म्मणि योजिता क्व नु सती साफल्यलाभार्थिनी
दक्षा स्यादविरोधिवाक्यकथने स्वल्पाक्षरे कामिनी ॥१४
भै—मादृक् का तरुणी भवादृशगिरं मन्येत साधूक्तिकै-
र्या साध्वीं सरणीं समाश्रितवती जित्वा हि कामं रिपुम् ।
दू—मन्ये ते रुचिभेदकारणतया द्राक्षापि निम्बायते
या माला सुरवृक्षपुष्परचिता नागायते साधुना ॥१५
भै—धातास्मिन् भजते प्रतीपनयने निन्दार्हतां नापरो
जीवानां विदधाति मानसगतिं बोधं प्रभिन्नां रुचिम् ।
दू—नैकः स्यादपराधभाक् खलु विधिविज्ञत्वकोट्याश्रितः
संस्कारो दृढतां प्रयाति सुहृदां सङ्गे च शिक्षागमे ॥१६
भै—व्याघ्रश्चेत्परिवर्द्धितो ननु भवेदन्नादिभिस्तद्गृहे
त्यक्त्वा किं पिशितप्रियत्वमचिरादश्नाति पत्रं तृणम् ।

दू—व्याघ्राश्वैः किमिवास्ति मे फलमहो पत्रैस्तृणैर्वा शुभे
यत्कार्य्यार्थमहं समागतवती तच्चिन्तनं मे तपः ॥१७
भै—यं चित्ते विनिवेश्य मुद्रितदृशा नीरन्ध्रचिन्तान्विता
हित्वा तत्कथनप्रसङ्गमपरं काङ्क्षामि नो शर्म्मदम्।
दू—पाशी चेत् परिणीयते जलपतिः स्वर्गः करस्थो भवेत्
तद्वर्णत्रयमेव तुल्यमनिशं सेविष्यते त्वत्पदम् ॥१८
भै—पाशित्वेन विभीषिका जड़पति-प्रोक्त्या च मूढ़ेशता
चाव्यक्तं समुदीरितं सुनिपुणे 'ड'त्वस्य 'ल'त्वागमात्।
दू—त्वं कन्या नृपतेः सुशिक्षितमतिर्जय्या न मादृग्जनैः
कल्याणं भवताच्चिराय दिश मां गन्तुं स्वदेशं शुभे ॥१९

स्वर्भानुनाक्रान्तनिशेशमन्दभा-
सुखश्रिया सा वरुणस्य दूतिका।
भीमात्मजा-तर्क्कजित-स्वगौरवा
ततः प्रतस्थे प्रभुणाश्रितां पुरीम् ॥२०

---

## परिषत्सन्देशः

**'पत्रा'ध्यक्षाणामध्यसङ्कटः**—सभाजनीयाः पाठकसमाज-पतयः! अद्यास्मिन् नववर्षप्रारम्भे सम्भूतं सम्भवत् सम्भविष्यच्च किञ्चिद्दौर्बल्यमस्मदीयमुपादीयते पुरतः पारतन्त्र्यदुःखमनुभवतां भवताम्। यथामति प्रतीकारोऽपि ज्ञातश्चेदस्मिन्नेव पत्रे विज्ञापितः सकृतज्ञताकं सानन्दं सम्भ्रममकालहीनमवलम्बिष्यते 'पत्र'-परिचालकैः। अद्यत्वे शक्तिमतां निबन्धलेखकानां छन्दोऽनुवर्त्तन-मन्यतमां कर्त्तव्यपदवीमध्यास्ते वार्त्तावहप्रवर्त्तकानाम्। ततश्च

श्रद्धेयवचनानां तथाभूतानां केषाञ्चन निबन्धकर्त्तॄणामनवसित-प्रेषिता अपि निबन्धा वैयक्तिकप्रत्ययेन प्रत्ययमगत्येव स्वीकुर्वद्भिः परिचालकैः स्वशेषचिह्नाङ्कितं प्रकाशयितुमारभ्यन्ते। ततश्च निबन्धक-बन्धु-महत्तमानां तेषामात्मकर्मबाहुल्येन वा, गौरवबोधविरहाद् वा अज्ञातकारणान्तराद् वा सनिर्बन्धं सानुनयं सानिष्टशङ्कं लिपितो लिप्यन्तरं प्रेषयद्भिरपि नैवासाद्यन्ते तदन्तिमांशाः प्रकाशयितुम्। ततश्च क्रमशःप्रकाश्यनिबन्धैरपि प्रतिसञ्चिकमस्माभिर्न पार्य्यते पत्रिकामिमामलंकर्त्तुम्।

इत्थञ्च व्यापारव्यतिकरे यद्यस्माभिरादावेवानवसितास्तथाविधा निबन्धा न प्रकाश्येरन्निति ते विज्ञाप्यन्ते, यदि वा प्रकाश्यमानाश्च प्रतिसञ्चिकमलब्धा निबन्धा नैव समाद्रियन्ते, तदा झटित्येव ते विमनायेरन्। विरक्तेभ्यस्तेभ्यः पुनर्निबन्धावाप्तिर्दूरपराहतेत्यु भयतः-पाशा रज्जुः कथङ्कारमवमुच्यतामामुच्यतां वा प्राच्यदेशवासिभिः पत्रिकापरिचालकैरिति। एवमेव केचिन्निबन्धा एकसञ्चिकं द्विसञ्चिकं वा प्रकाशितात्मानोऽकाल एव समाधिमधिगच्छन्तः समुद्वेजयन्ति भवतः पाठकमहाभागान्, तेन च क्लेपयन्त्यस्मानपि सुधीसमाजेष्विति शम्।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| June, 1929. | १८५१ शकीये ज्यैष्ठे १२श-वर्षस्य २य-संख्या | Vol. XII. No 2. |
|---|---|---|

## ईश-स्तुतिः

[ निबन्धकः—श्रीरामस्वामी शास्त्री अलवरप्रान्तीयः ]

हे विश्वसार ! भवसागरपारदायिन् !
भक्तार्त्तिनाश-कुशल ! भ्रमनाशकारिन् ! ।
सर्वेश्वराखिलहृदन्तर-वास ! शौरे !
मामुद्धर प्रखरवेग-भवप्रवाहात् ॥ १

जानामि नैव कथमच्युत ! ते कृपा स्यात्
कुत्रासि केन विधिना नयनाध्वनि स्याः ।
किं ते स्वरूपमपि येन समस्तविश्वं
व्याप्नोषि शिक्षणकृतौ गुरुरेव मे त्वम् ॥ २

पार्श्वस्थवस्तुनिचया अनिशं हि देव !
स्वामि-च्युतं समवलोक्य समाक्षिपन्ति ।
मामित्यशेषभयनाशन ! नाथवृत्त्या
तान् दुर्निवारचरितान् द्रुतमुन्मथ त्वम् ॥ ३

येन प्रशान्तिमुपयाति चलं मनो मे
बाह्यप्रसक्तिविरतं कुरु नाथ तद् द्राक् ।
आमोद-दुःख-भय-मोह-विकारहेतु-
र्यस्मात् प्रपीडयति तद् बहुधा हरे ! माम् ॥४

संसारघोरजलधौ नरदेहनावा
संक्रीडतामतलगर्भनिमज्जनाथम् ।
वात्या नितान्तपरुषा भ्रमदा कृता स्त्री
तस्याः प्रपालय हृषीकपते ! सदा माम् ॥५

मात्रादिबन्धुविषया शुभकारिणो ये
मत्पिण्डपोषणपराः खलु संसजन्ति ।
तत्त्वार्थतस्तु सकला मम वैरभाजो
मिथ्याममत्वमतिसञ्चयकारिणस्ते ॥६

धर्मस्य स्थिरतां विधाय दुरितस्योन्मूलनात् कातॄस्ततः
शान्तिस्थापकमेव सर्वजगतस्त्वां साधवो जानते ।
किन्त्वस्मिन् समये निरीक्ष्य धनिनां दुर्नीतिसम्पीडनाद्-
दीनग्लानिदशां विलुप्तचरितं मन्ये विभो ! त्वामहम् ॥७

पदविदलिताद्रोषस्फीतादहेर्भयवत्तरः
कुलिशपतनप्रोद्भूताग्नेरतीव विदाहकृत् ।
कटुविषसमाहारात् प्राणप्रणाशकृतौ कृतौ
खलजन इति त्राहि प्रेष्ठानिशं तत एव माम् ॥८

यदि कपटिनं मन्यन्ते मां जनास्तत एव च
प्रजहति सुखालापं तीव्रोपहासपरायणाः ।
जगदधिपते ! तेभ्यश्चित्तं निवर्त्तय सन्ततं
स्वपदरसिकश्चेर्ष्याहीनं विधेहि सहर्षकम् ॥९

धनचयकृतलब्धप्राणिसङ्घर्षभौमे
नयकृतिकृतहेलोद्दामभूपालखिन्ने ।

अवमतमुनिवाक्योच्छृङ्खलब्रह्मबन्धो
परमशरणमीश ! त्वं हि मेऽस्मिन् कुकाले ॥१०
क्षणध्वंसिन्यस्मिन् मरुजल-नभोहर्म्यतुलिते
महामायाशक्त्या धृतवितथरूपे सुविषमे ।
अहो ! लोकाः सर्वे धनतनयजायापरिवृता
जगत्यज्ञानान्धा जहति पितरं त्वामपि शिवम् ॥११
तेषां जनानामपनीय मोहं
स्वकीय-कारुण्य-नियोजितेन ।
शुभं विधेयं परमेश ! तूर्णं
नोपेक्षते क्वापि विभुर्दरिद्रान् ॥१२
सुभीषणं ज्ञानविवेकनाशनं
संसारचक्रानिशवर्त्तनञ्च ।
अज्ञानमात्मावरकं सकार्य्यं
विभो ! समुन्मूलय सत्वरं मे ॥१३

---

## संस्कृताध्यापनपद्धतिः

[ निबन्धकः—श्रीहरदत्तशर्मा ]

समयस्य परिवर्तनशीलत्वाद् जगत्यस्मिन् सर्वेष्वपि वस्तुष्वनवरतं जायमानं परिवर्तनं दरीदृश्यते। न चैतदशुभोदर्कं, प्रत्युत कल्याणोदर्कमेव। निश्चलं प्रवाहहीनं जलमेकत्र स्थितं ध्रुवं दुर्गन्धकीटादियुक्तं सदस्वादु परिहेयं च जायते, तदेव च यदा प्रवहति तदा स्वादु ग्राह्यं च भवति। अतो वस्तुनः स्तम्भो वृद्धिरोधपरिकल्पकः। एतादृश्येव च सरणिर्दृश्यते संस्कृतभाषाध्ययनेऽध्यापने वा। काव्यनाटकादिषु, न्यायमीमांसादिषु, अथवा सर्वेष्वपि शास्त्रेषु टीकाकृदेव

येन प्रशान्तिमुपयाति चलं मनो मे
बाह्यप्रसक्तिविरतं कुरु नाथ तद् द्राक् ।
आमोद-दुःख-भय-मोह-विकारहेतु-
र्यस्मात् प्रपीडयति तद् बहुधा हरे ! माम् ॥४

संसारघोरजलधौ नरदेहनावा
संक्रीडतामतलगर्भनिमज्जनाथम् ।
वात्या नितान्तपरुषा भ्रमदा कृता स्त्री
तस्याः प्रपालय हृषीकपते ! सदा माम् ॥५

मात्रादिबन्धुविषया शुभकारिणो ये
मत्पिण्डपोषणपराः खलु संसजन्ति ।
तत्स्वार्थतस्तु सकला मम वैरभाजो
मिथ्याममत्वमतिसञ्चयकारिणस्ते ॥६

धर्मस्य स्थिरतां विधाय दुरितस्योन्मूलनात् कार्त्स्न्यतः
शान्तिस्थापकमेव सर्वजगतस्त्वां साधवो जानते ।
किन्त्वस्मिन् समये निरीक्ष्य धनिनां दुर्नीतिसम्पीडनाद्-
दीनग्लानिदशां विलुप्तचरितं मन्ये विभो ! त्वामहम् ॥७

पदविदलिताद्दीप्तस्फीतादहेर्भयवत्तरः
कुलिशपतनप्रोद्भूताग्नेरतीव विदाहकृत् ।
कटुविषसमाहारात् प्राणप्रणाशकृतो कृतो
खलजन इति त्राहि प्रेष्ठानिशं तत एव माम् ॥८

यदि कपटिनं मन्यन्ते मां जनास्तत एव च
प्रजहति सुखालापं तीव्रोपहासपरायणाः ।
जगदधिपते ! तेभ्यश्चित्तं निवर्त्तय सन्ततं
स्वपदरसिकश्चेर्ष्याहीनं विधेहि सहर्षकम् ॥९

धनचयकृतलक्ष्यप्राणिसङ्घर्षभीमे
नयकृतिकृतहेलोद्दामभूपालखिन्ने ।

अवमतमुनिवाक्योच्छृङ्खलब्रह्मबन्धौ
परमशरणमीश ! त्वं हि मेऽस्मिन् कुकाले ॥१०

क्षणध्वंसिन्यस्मिन् मरुजल-नभोहर्म्यं तुलिते
महामायाशक्त्या धृतवितथरूपे सुविषमे ।
अहो ! लोकाः सर्वे धनतनयजायापरिवृता
जगत्यज्ञानान्धा जहति पितरं त्वामपि शिवम् ॥११

तेषां जनानामपनीय मोहं
स्वकीय-कारुण्य-नियोजितेन ।
शुभं विधेयं परमेश ! तूर्णं
नोपेक्षते क्वापि विभुर्दरिद्रान् ॥१२

सुभीषणं ज्ञानविवेकनाशनं
संसारचक्रानिशवर्त्तनञ्च ।
अज्ञानमात्मावरकं सकार्य्यं
विभो ! समुन्मूलय सत्वरं मे ॥१३

---

# संस्कृताध्यापनपद्धतिः

[ निबन्धकः—श्रीहरदत्तशर्मा ]

समयस्य परिवर्तनशीलत्वाद् जगत्यस्मिन् सर्वेष्वपि वस्तुष्वनवरतं जायमानं परिवर्तनं दरीदृश्यते । न चैतदशुभोदर्कं, प्रत्युत कल्याणोदर्कमेव । निश्चलं प्रवाहहीनं जलमेकत्र स्थितं ध्रुवं दुर्गन्धकीटादियुक्तं सदस्वादु परिहेयं च जायते, तदेव च यदा प्रवहति तदा स्वादु ग्राह्यं च भवति । अतो वस्तुनः स्तम्भो वृद्धिरोधपरिकल्पकः । एतादृश्येव च सरणिर्दृश्यते संस्कृतभाषाध्ययनेऽध्यापने वा । काव्य-नाटकादिषु, न्यायमीमांसादिषु, अथवा सर्वेष्वपि शास्त्रेषु टीकाकृदेव

रणम्। लौकिकश्चायमाभाणः 'टीका गुरूणां गुरुः'। फलं चैतस्य ानद्धे रोधः। बहोः कालात् तामेव प्राचीनपद्धतिमनुसरतां मल्लि- ाथादिकृत-व्याख्यानमवलम्बमानानां चास्माकं—कविः को भावः, । च किमुपयुक्तोऽन्यथा वा, टीकाकृत् किं तदर्थप्रतिपादनसमर्थोऽ- समर्थो वा, अन्येन केनापि संस्कृतकविना स्वयं वा तेनैवान्यत्र कुत्रापि ादृश एव भावः प्रतिपादितो न वा, यदि प्रतिपादितस्तर्हि कया देशेत्यादि स्वाधीना विचारसरणिर्न लभते स्थानं संस्कृताध्ययनेऽध्या- ने वा। परिणामतश्च तस्य बहुशष्टीकाकृतां ग्रन्थमूलस्य च भूयान् ेदोऽन्यथा व्याख्यानं च दृश्यते। न चैतत् स्मर्यते यत्—

'पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम्।'

इति कालिदासवचो न मुधा। अतो मल्लिनाथेनेत्थं व्याख्यायते, अमुको विद्वानेवं प्रतिपादितवानित्यादि न सर्वदा वेदवाक्यमिवाङ्गी- कर्तव्यम्। वस्तुतो विना गुणदोषपरीक्षया, विना च सूक्ष्मविचारं न कस्यापि वचनमङ्गीकार्यं, भवतु स यादृशस्तादृशो वा महान् पण्डितः। एतदेवास्माभिरिहोदाह्रियते। माघस्य शिशुपालवधे एका- दशे सर्गे प्रथमोऽयं श्लोकः—

श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः
सततमृषभहीनं भिन्नकीकृत्य षड्जम्।
प्रणिजगदुरकाकुश्रावकस्निग्धकण्ठाः
परिणतिमिति रात्रेर्मागधा माधवाय॥

निशावसाने सङ्गीतकेन चारणाः श्रीकृष्णं प्रतिबोधितवन्तः, इत्ययमस्य संक्षेपतोऽर्थः। तच्च सङ्गीतं कीदृशमासीदिति मल्लिनाथः स्वव्याख्याने सर्वमाकुलीकृतवान्। अत्र खलु चरणयोः प्रथमयोः 'पञ्चमं' 'षड्जम्' इति स्वरवाचकं पदद्वयं द्वितीयान्तं दृश्यते। अतः 'श्रुतिसमधिकम्' इति पञ्चमस्य विशेषणमुत षड्जस्येति मल्लिनाथो न निश्चयमगमत्—स

चैवं प्रतिपादयति—"श्रुतिसमधिकमिति षड्जविशेषणं पञ्चमविशेषणं वा, उभयोरपि तथात्वात् ।"

श्रुतयो हि नाम द्वाविंशतिः, विभक्ताश्चैवं ताः सप्तसु स्वरेषु—

"चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः ।
द्वे द्वे निषादगान्धारौ त्रीँस्त्रीनृषभधैवतौ ॥"

षड्जमध्यमपञ्चमानां चतुः-श्रुतित्वम्, अवशिष्टानां चैकया श्रुत्या द्वाभ्यां वा हीनत्वम् । एतदवलम्ब्यैव मल्लिनाथ उभयोः षड्ज-पञ्चमयोः श्रुतिसमधिकत्वं मन्यते । 'भिन्नकीकृत्य' इत्यस्य चार्थो मल्लिनाथमते 'तत्कालनिषिद्धस्वरासंकीर्णं कृत्वा', 'पीडयन्तः' इत्यस्य च 'परित्यजन्तः' इति । एवं तेन सर्वमाकुलीकृतम् । काव्यानुशासनकृद्धेमचन्द्राचार्यस्तु पद्यमिदं गीतिविरुद्धदोषोदाहरणत्वेनोपन्यस्तवान् । तन्मते 'पीडयन्तः' इत्यस्यार्थः 'श्रुतिह्रासेनाल्पीकुर्वन्तः', 'भिन्नकीकृत्य षड्जम्' इत्यस्य च 'भिन्नषड्जं कृत्वा' इति । भिन्नषड्जो हि षड्जोदीच्यवत्याख्याया जातेरेको रागः । 'तस्यां च पञ्चमस्य ऋषभवदसम्भव एव, दूरे पुनः श्रुतिसमधिकत्वम् । अत इदं माघकवेर्गीतिविरुद्धं पद्यम्', इति हेमचन्द्रः प्रत्याख्यातवान् ।

उभयोरप्यत्र मल्लिनाथहेमचन्द्रयोर्व्याख्यानमसाधु । तत्त्वमेतस्य हि नोभाभ्यामप्यधिगतमिति प्रतिभाति । भिन्नषड्जलक्षणं हि—

'धांशस्तु धैवतन्यासः पञ्चमर्षभवर्जितः ।
षड्जोदीच्यवतीजातेर्भिन्नषड्ज उदाहृतः ॥'

भिन्नषड्जाख्ये रागे धैवतस्यांश एव प्रयोक्तव्य इति लक्षणे स्फुटम् । स च धांशः कोमलो धैवत इत्याधुनिकैः कथ्यते । पञ्चमानन्तरं धैवतो भवतीति विश्वेषां सङ्गीतशास्त्रविदां विदितम् । वीणायास्तन्त्रीपीडनेन स्वर आधिक्यं प्रतिपादयति, नाल्पीकरणं न वा परित्यागम् । पञ्चमश्चतुःश्रुतिस्तदनन्तरो धैवतश्च त्रिश्रुतिः । यदि पञ्चमस्वरे वीणातन्त्री एकश्रुतिपर्यन्तं पीड्यते, तर्हि पञ्चमे धैवतस्यैका श्रुतिरायाति,

धांशः कोमलो धैवतो वा प्रतिपद्यते। स च धांशः (कोमलो धैवतः) भिन्नषड्जस्य प्राणाः, अतः षोडनमिति सङ्गीतशास्त्रस्य पारिभाषिकः शब्दः, हिन्दीभाषायां 'मोंड़' इत्युच्यते। एवं कृते हि रागे वैलक्षण्यं प्रतिपद्यते। अतो न महाकवेः कश्चिद् दोषः, प्रत्युत टीकाकृतोः।

अपरञ्च बहुशः शब्दानामर्थकल्पनेऽन्येषां कवीनाम्, अन्यत्र वा तस्यैव कवेः समानार्थवाक्योद्धरणमतीवोपयोगि। पाश्चात्त्यैर्विद्वद्भिः—

'छाया हि भूमेः शशिनो मलत्वे-
नारोपिता शुद्धिमतः प्रजाभिः।'

इति कालिदासवचनं चन्द्रोपरागपरत्वेन व्याख्यायते। किन्तु छायाशब्दः प्रतिबिम्बार्थक इति।

'छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा।' इति

'अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च संजगदिरे भूमेश्च बिम्बं परे।'

इति चोद्धरणाभ्यां स्फुटम्।

एवमेवेतिहासिकीषु कथासु सूक्ष्मो विवेकोऽपेक्षणीयः। 'अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना' इत्यत्र मल्लिनाथो न्यासं काशिकाख्य-सूत्रव्याख्यानग्रन्थविशेषं ब्रूते। स्वर्गीयस्तारानाथवाचस्पतिरपि स्वरचितायां सरलाख्यायां सिद्धान्तकौमुदीव्याख्यायां काशिकाव्याख्यानकर्तारं पदमञ्जरीरचयितारं हरदत्तमेव न्यासकारं मन्यते स्म। किन्तु पदमञ्जर्यां हरदत्तेन स्वयं माघस्य त्रयः श्लोका उद्धृताः। अतोऽत्र निर्दिष्टो न्यासः पदमञ्जरीतो भिन्न इति सिद्धम्। अत्र हि मल्लिनाथात् पूर्वं भूतस्य वल्लभदेवस्य व्याख्यानमस्मान् मार्गं प्रदर्शयति। तन्मते हि काशिकावृत्तिपञ्जिकाकारो जिनेन्द्रबुद्धिपादाचार्यो न्यासकर्तात्र निर्दिष्ट इति।

अतः संस्कृताध्यापने तुलनात्मिका गवेषणा, समानार्थानां वाक्या-

नामुदाहरणं, प्रमाणत्व नाहृतानां वाक्यानां प्रभवोपलब्धिश्चेति नितरामपेक्षणीयम्। एवं कृते ग्रन्थकर्तुरभिप्रायावगमो ज्ञानगाम्भीर्यमलौकिकी व्युत्पत्तिः स्वबुद्ध्यवलम्बनाभ्यासश्च वर्द्धन्ते। अत इयमेव सरणिः प्रतिपत्तव्येत्यस्माकं मतमिति शम्।

---

## ग्रीष्मः

[ निबन्धकः—सिद्धान्तवागीशः श्रीदशरथशास्त्री ]

घर्माम्भस्तटिनीप्रचारकस्तिग्मांशूदितसूर(१)चक्रकः।
उष्णश्वासविसर्जनात्मको भीष्मो ग्रीष्म-निवाद आगतः ॥१॥
तीक्ष्णोऽस्त्रासिसुताप्रहारकैर्देहच्छेदनभेदनप्रियः।
प्रोन्नद्धोल्कभीषणेक्षण आदित्योऽयमुदेति वीरवत् ॥२॥
मन्दैर्मन्दतरैर्गमागमैश्चञ्चत्पुष्टकर(२)प्रसारणैः।
कायस्पर्शनसङ्गराग्रहः शूरः(३) प्रोदयतेऽयमङ्क्षिहा (४) ॥३॥
भूमिर्भास्करतापतापिता कासाराम्बुतिशोषणादरा।
शुष्यद्घासजटाऽस्ति रौद्रका शुष्कास्या श्रमणीव(५) मुण्डिता ॥४॥
अत्युष्णा ज्वलदग्निसन्निभा दुःस्पर्शा तवकीव(६) यात्रिणाम्।
दुर्लङ्घ्या पिशिताशिनीनिभा(७) क्रूरा डाकिनिकेव भाति भूः ॥५॥
वायूद्धूतरजो-निमीलितदृष्ट्या द्रष्टुमपीष्यते नहि।
पान्थैः स्त्रीविरहाग्निभर्जितैर्भानोरातपतापिता मही ॥६॥
सूर्य्योष्मानिलशुष्कतालुवज्जीवातङ्कविनाशहेतवे।
श्रेष्ठिश्रेष्ठजनैः पुरे पुरे धार्य्यन्ते प्रतिवर्त्म सत्प्रपाः ॥७॥

---

(१) खरांशूदित-रविरेव चक्रमिवास्यस्य सः। (२) हस्तौ मयूखाश्च।
(३) सूर्यो भटश्चेति। सुभटे। शूरः सूर्ये च दन्त्योपीत्युभयविवेकः।
(४) जीवनाशकः। (५) बौद्धसन्न्यासिनीव।
(६) अपूपसाधिकायःकटाहीव। (७) राक्षसीव।

पान्थौघस्तृषितः प्रतिस्थलं शीताम्बु प्रपिबन् वृषालये(१)।
सक्तून् सम्प्रधयन्नधिप्रपं सौख्यं संलभते मना(२)गिह(३) ॥८॥
आहावा(४)विजला(५) विदारकाः(६) कूपा अल्पवना(७)स्तडागकाः।
वाप्यः शुष्कतराश्च निम्नगाः सेव्यन्ते तृषितैः सृतौ(८) नहि ॥९॥
छायाधीनतया क्लमाकुलाः शुष्काः सन्नतवारि(९)जाननाः।
मूर्च्छन्तस्तृषयोच्छ्वसन्तका वातूलो(१०)त्थरजोहतेक्षणाः ॥१०॥
प्लावं प्लावमितौ(११) रता नरा घर्माम्बुस्नपिताभिविग्रहाः।
यानम्लान(१२)कलेवरा नदीः शुष्काः प्रेक्ष्य पतन्ति वर्त्मनि ॥११॥
ज्वालालीढसरीसृपादिकमस्तुल्यांसहविःसमेधितम्।
नानापादपदाहसादरं दावाग्निं परिदृश्य बिभ्यति(१३) ॥१२॥
धावन्तः परितो ह्यारयः(१४)सिंहा वानरशूकराः शिवाः।
गौधेया वृषदंशका मृगा दृश्यन्ते ज्वलदर्द्धविग्रहाः ॥१३॥
चीचीवाशिततत्पराः खगा नानारावविराविणो मृगाः।
दृष्ट्वा प्रज्वलितं दवानलं प्रोच्चोच्चाः सकुला भ्रमन्ति हि ॥१४॥
निःसृत्योड्डयितः स्वकोटरात्त्यक्त्वा वत्सलसन्ततिं निजाम्।
धूमान्धो निजवाशितं दधद् भ्रान्त्वा पक्षिगणः पतत्यधः ॥१५॥
त्यक्त्वा स्वीयसुतं बिले जवाद्दावालीढतनुः पशुव्रजः।
विष्वग्घूर्णविरुद्धपद्धति(१५)र्भस्मीभावमुपैति सत्वरम् ॥१६॥

---

(१) घर्मालये। (२) अल्पम्। (३) ग्रीष्मे।
(४) निपानानि। चुरि इति भाषा। (५) निःशेषजलाः।
(६) कूपकाः 'चोया' इति भाषा।
(७) स्वल्पजलाः। (८) मार्गे।
(९) नीचैर्भूतानि रक्तोत्पलाकाराणि मुखानि येषां ते।
(१०) वातसमूहोत्थधूलिपटलस्तब्धनयनाः। (११) गतौ।
(१२) यानगमनेन म्लानशरीराः। (१३) नरा इत्यनुषङ्गः।
(१४) वनमहिषाः। (१५) अवरुद्धमार्गः।

सद्योजातशिशुं मुखे मृगी धृत्वा दावभयात् प्लुता वनात् ।
यावद्धन्ति शरेण तां बलाद्वन्ध्यः सोऽपि(१) कुटीगतः क्षणात् ॥१७॥
मूलादुज्ज्वलितो दवानलः शाखास्कन्धविलेषु हर्षितः ।
धुग्धुग्धुग्ध् गिति स्वनन्मुहुः सम्भात्यूर्द्ध्वशिखोऽम्बिकानने ॥१८॥
चट्फट्चषिनदन्दवानलो लोलप्रोद्ध्वशिखोऽनिलैधितः ।
भीष्मो(२) भीष्म(३) इवातिरोषितो वंशानां(४) भसितं करोत्यलम् ॥१९॥
सन्तप्तो दिनकृद्गभस्तिभिस्तृष्णाव्याकुलमानसो हरिः(५) ।
व्यात्तास्यश्वलजिह्विकाधरः पश्यन्ने(६)णगणेन रेवते(७) ॥२०॥
फुल्लाच्चस्तृषयाऽतिपीड़ितः कान्तां सन्निधिवर्तिनीं त्यजन् ।
दृष्ट्वा संलुलिताम्बुजिह्विकां क्रोष्टा एणकुलम्प्रधावति ॥२१॥
भास्वद्भानलशुष्कतालवो ग्रीष्मे शुष्कजले च कानने ।
मध्याह्नेऽतितृषार्दिता जवाद् धावन्त्येणगणा मरीचिकाम् ॥२२॥
आम्रैः पक्वफलैर्भरार्दितैर्नम्रैर्भूमिरियं विराजते ।
कृष्णैर्जम्बुफलैरगा इमे शोभन्ते भ्रमरैरिवाङ्किताः ॥२३॥
उद्याने हरिते नवच्छदैः फुल्ला क्वापि विभाति पाटला ।
मल्ली क्वापि सुभृङ्गगुञ्जिता श्लिष्यन्ती सुतरुं धवं यथा ॥२४॥
धारागारनिवाससादराः फुल्लाम्भोजदलानिलप्रियाः ।
भव्योशीरपिधानमन्दिरा घस्रे यूकनिभा महाजनाः ॥२५॥
सौधे स्फाटिकभित्तिसन्निभे धारायन्त्रयुतेऽतिशीतले ।
सहासो व्यजनोत्थमारुते खट्वायां सधवा विराजते ॥२६॥

---

(१) भिल्लोऽपि ।　　(२) भयानकः ।
(३) शन्तनुपुत्रः ।　　(४) वेणूनां भूपकुलानां वा ।
(५) सिंहः ।　　(६) प्रज्ज्वलितं वनमिति शेषः ।
(७) प्लुत्वा प्लुत्वा गच्छति ह्यवगत्यर्थक-रेवतेः सत्त्वात् ।

पान्थीघस्तृषितः प्रतिस्थलं शीताम्बु प्रपिबन् वृषालये(१)।
सक्तून् सम्प्रभयन्नधिप्रपं सौख्यं संलभते मना(२)गिह(३) ॥८॥
आहावा(४)विजला(५) विदारकाः(६) कूपा अल्पवना(७)स्तड़ागकाः।
वाप्यः शुष्कतराश्च निम्नगाः सेव्यन्ते तृषितैः सृतौ(८) नहि ॥९॥
छायाधीनतया क्रमाकुलाः शुष्काः सन्नतवारि(९)जाननाः।
मूर्च्छन्तस्तृषयोच्छ्‌सन्तका वातूलो(१०)त्थरजोहतेक्षणाः ॥१०॥
प्लावं प्लावमितौ(११) रता नरा घर्माम्बुस्नपिताभिविग्रहाः।
यानम्लान(१२)कलेवरा नदीः शुष्काः प्रेक्ष्य पतन्ति वर्त्मनि ॥११॥
ज्वालालीढसरीसृपादिकमस्तश्वांसहविःसमेधितम्।
नानापादपदाहसादरं दावाग्निं परिदृश्य बिभ्यति(१३) ॥१२॥
धावन्तः परितो हयारयः(१४)सिंहा वानरशूकराः शिवाः।
गोधेया वृषदंशका मृगा दृश्यन्ते ज्वलदङ्गविग्रहाः ॥१३॥
चीचीवाशिततत्पराः खगा नानारावविराविणो मृगाः।
दृष्ट्वा प्रज्वलितं दवानलं प्रोच्चोच्चाः सकुला भ्रमन्ति हि ॥१४॥
निःसृत्योड्डयितः स्वकोटरात्त्यक्ता वत्सलसन्ततिं निजाम्।
धूमान्धो निजवाशितं दधद् भ्रान्त्वा पक्षिगणः पतत्यधः ॥१५॥
त्यक्ता स्वीयसुतं बिले जवाद्दावालीढतनुः पशुव्रजः।
विष्वग्घूर्णविरुद्धपद्धति(१५)र्भस्मीभावमुपैति सत्वरम् ॥१६॥

---

(१) घर्मालये। (२) अल्पम्। (३) ग्रीष्मे।
(४) निपानानि। चुरि इति भाषा। (५) निःशेषजलाः।
(६) कूपकाः 'चोया' इति भाषा।
(७) स्वल्पजलाः। (८) मार्गे।
(९) नीचैर्भूतानि रक्तोत्पलाकाराणि मुखानि येषां ते।
(१०) वातसमूहोत्थधूलिपटलस्तब्धनयनाः। (११) गतौ।
(१२) यानगमनेन म्लानशरीराः। (१३) नरा इत्यनुषङ्गः।
(१४) वनमहिषाः। (१५) अवरुद्धमार्गाः।

सद्योजातशिशुं मुखे मृगी धृत्वा दावभयात् प्लुता वनात्।
यावद्धन्ति शरेण तां बलाद्‌व्याधः सोऽपि(१) कुटीगतः क्षणात् ॥१७॥
मूलादुज्ज्वलितो दवानलः शाखास्कन्धविलेषु हर्षितः।
धुग्धुग्धुग्धगिति स्वनन्मुहुः सध्वात्यूर्द्ध्वशिखोऽस्मि कानने ॥१८॥
चट्‌फट्‌चस्विनदन्दवानलो लोलप्रोद्दशिखोऽनिलैधितः।
भीष्मो(२) भीष्म(३) इवातिरोषितो वंशानां(४) भसितं करोत्यलम् ॥१९॥
सन्तप्तो दिनकृद्गभस्तिभिस्तृष्णाव्याकुलमानसो हरिः(५)।
व्यात्तास्यश्चलजिह्विकाधरः पश्यन्ने(६)णगणेन रेवत(७) ॥२०॥
फुल्लाच्चस्तृषयाऽतिपीड़ितः कान्तां सन्निधिवर्तिनीं त्यजन्।
दृष्ट्वा संलुलिताम्बुजिह्विकां क्रोष्ट्रा एणकुलम्प्रधावति ॥२१॥
भास्वद्भानलशुष्कतालवो ग्रीष्मे शुष्कजले च कानने।
मध्याह्नेऽतितृषार्दिता जवाद् धावन्त्येणगणा मरीचिकाम् ॥२२॥
आम्रैः पक्वफलैर्भरार्दितैर्नम्रैर्भूमिरियं विराजते।
कृष्णैर्जम्बुफलैरगा इमे शोभन्ते भ्रमरैरिवाङ्किताः ॥२३॥
उद्याने हरिते नवच्छदैः फुल्ला क्वापि विभाति पाटला।
मत्ता क्वापि सुभृङ्गगुञ्जिता स्निग्धन्ती सुतरं धवं यथा ॥२४॥
धारागारनिवाससादराः फुल्लाम्भोजदलानिलप्रियाः।
भव्योशीरपिधानमन्दिरा घस्रे यूकनिभा महाजनाः ॥२५॥
सौधे स्फाटिकभित्तिसन्निभे धारायन्त्रयुतेऽतिशीतले।
सहासो व्यजनोत्थमारुते खट्वायां सधवा विराजते ॥२६॥

---

(१) भिल्लोऽपि। (२) भयानकः।
(३) शन्तनुपुत्रः। (४) वेणूनां भूपकुलानां वा।
(५) सिंहः। (६) प्रज्ज्वलितं वनमिति शेषः।
(७) प्लुत्वा प्लुत्वा गच्छति प्लवगत्यर्थक-रेवतेः सत्त्वात्।

मुक्ताहारलसत्कुचा शुभा नासामौक्तिकशोभितानना ।
कञ्जाक्षी तनुवस्त्रवासिता कामं(१) बोधयते धवान्तिके ॥२७॥
स्वच्छाम्भोजदलास्तृता शुभा शय्या चन्दनपङ्कजा लिपिः ।
कर्पूरागरुवासिता च्छदिशान्द्रीभाऽतनुबोधिका शुची ॥२८॥
उत्तुङ्गस्तनकुड्मलाऽबला मुक्ताहारगलाऽम्बुजानना ॥
स्वच्छाम्भोविहृतौ धवेन या रक्ता(२) सातपनाशने हिता ॥२९॥
ग्रीष्मे मारविबोधनाय काऽप्येका गानरता प्रियान्तिके ।
धीरा पञ्चमनादिनो शुभा वीणां वादयते कलध्वनिम् ॥३०॥
गन्धैर्वासितचन्द्रिका गृहे सौधे स्फाटिकसन्निभस्थले ।
साकं नूतनमानदेन हि स्मेरास्या ललना मुदीव्यति ॥३१॥
सूक्ष्माच्छांशुकदृश्यसत्कुचा सद्गन्धाञ्चितकृष्णकेशिका ।
लोलाक्षी सुकटाक्षचालनैः पुंसां दाहमपाकरोत्यलम् ॥३२॥
कञ्जाक्षी विकसन्मुखाम्बुजा कञ्जाङ्घ्री जलजन्म-सत्करा ।
बद्धाम्भोजकुचा शुभांशुका बिम्बोष्ठी च्चपयत्यलन्तपम् ॥३३॥
बन्धूकाधरशोभितानना मञ्जीरध्वनिमत्पदाम्बुजा ।
काञ्चीसिञ्जितसन्नितम्बिनी दाहं शीघ्रतया व्यपोहति ॥३४॥
ग्रीष्मे कामिजनः सुकौमुदीं कर्पूरं शुभचन्द्रिकागृहम् ।
बालां चन्दनचर्चनं सुम-शय्यां सेवति रात्रिषु च्छदिम् ॥३५॥
चन्द्रोऽयं सितकौमुदीच्छलाच्छोचैर्हास्यरसाप्लुतः स्त्रियाः ।
वक्षोजाधरवक्त्रमध्यमस्पृश्य(३)त्यच्छकरैर्विटाधमः ॥३६॥
तारेयं रमणीयविग्रहा किं वा रोहिणिका मम प्रिया ।
काचिद्दक्षसुताऽथवाऽपरा यूनानेन शुतेति मुह्यति ॥३७॥
स्मेरैषः परयोषितानन्नं शीतैरंशुकरैर्निषेव्य च ।
रात्र्यन्ते त्रपया समन्वितो मज्जत्यम्बुनिधावस्तच्छलात् ॥३८॥

---

(१) मन्मथम् ।　　(२) अनुरक्ता ।
(३) स्पृशतीत्यर्थः ।

सोमोऽयं रुचिराननः स्त्रियो दृष्ट्वा शीतकरैः स्तोऽधिकम् ।
लज्जाभारनताननोऽबुधः पश्चादम्बुनिधौ निमज्जति ॥३९॥

रुचिरतरकुचाभिः क्षुब्धवारां वगाहै-
र्मलयजनितलेपैः पुष्पशय्याधिरोहैः(१) ।
तनुतरशुभवस्त्रैर्वल्लकीगानतानैः
सुखयतु शुचिरिभ्यान् (२) माधवीमिष्टपानैः ॥४०॥

---

## ब्राह्मणानां मत्स्यभोजनस्य शास्त्रीयत्वम्

[ निबन्धकः—श्रीदुर्गाप्रसन्नविद्याभूषणः ]

अत्र खलु भारते वर्षे विमर्शपूर्वकमवलोकयतामस्माकं नयनपथे सततमेवेदमापतति यद्, वङ्गीया ब्राह्मणा मत्स्यरङ्कवन्नियतमेव मत्स्यानश्नन्ति नान्यदेशीया ब्राह्मणब्रुवा अपि । तद्दर्शनेन च वङ्गीयब्राह्मणाः "सात्त्विकानेव सेवेत सत्त्ववृद्धौ नरः सदा" इति शास्त्रादेशमुल्लङ्घ्य अभक्ष्यानपि मत्स्यान् भक्षयन्तः पतिता विगतब्रह्मवर्चसाश्च संवृत्ता इत्येवमाचक्षाणाः केचन विचक्षणा अस्मान् विशेषेणाधिक्षिपन्ति ।

केचन वा ब्राह्मणानां मत्स्याशनं शास्त्रीयमशास्त्रीयं वेति जिज्ञासमाना मुनीनां नानामतदर्शनात् सन्देहसन्दोलितमानसा अवतिष्ठन्ते । केचन वान्यदेशीया वङ्गीयानां मत्स्याशनकथामाकर्णयन्तोऽपि सावज्ञं नासिकां सङ्कोचयन्ति । इत्येवमालोकयन्तोऽनेक एव मत्स्याशनं शास्त्रीयं वेत्यनुयुञ्जन्त्यस्मान् । तेषामेव निर्बन्धातिशय्येन प्रबन्धस्यास्य लेखने समायमुद्यमः । न तु मत्स्यभोजनसमर्थनमेवास्य प्रबन्धस्यार्थं इत्येवं विजानन्तु सन्तः पाठकमहोदयाः ।

---

(१) अधिवासैः । (२) धनिनः ।

मुक्ताहारलसत्कुचा शुभा नासामौक्तिकशोभितानना ।
कञ्जाक्षी तनुवस्त्रवासिता कामं(१) बोधयते धवान्तिके ॥२७॥
स्वच्छाम्भोजदलास्तृता शुभा शय्या चन्दनपङ्कजा लिपिः ।
कर्पूरागरुवासिता च्छदिश्चान्द्रीभाऽतनुबोधिका शुची ॥२८॥
उत्तुङ्गस्तनकुड्मलाऽबला मुक्ताहारगलाऽम्बुजानना ॥
स्वच्छाम्भोविहृती धवेन या रक्ता(२) सातपनाशने हिता ॥२९॥
ग्रीष्मे मारविबोधनाय काऽप्येका गानरता प्रियान्तिके ।
धीरा पञ्चमनादिनी शुभा वीणां वादयते कलध्वनिम् ॥३०॥
गन्धैर्वासितचन्द्रिका गृहे सौधे स्फाटिकसन्निभस्थले ।
साकं नूतनमानदेन हि स्मेराख्या ललना सुदीव्यति ॥३१॥
सूक्ष्माच्छांशुकदृश्यसत्कुचा सद्गन्धाञ्चितकणकेशिका ।
लोलाक्षी सुकटाक्षचालनैः पुंसां दाहमपाकरोत्यलम् ॥३२॥
कञ्जाक्षी विकसन्मुखाम्बुजा कञ्जाङ्घ्री जलजन्म-सत्करा ।
वक्षोम्भोजकुचा शुभांशुका बिम्बोष्ठी क्षपयत्यलन्तपम् ॥३३॥
बन्धूकाधरशोभितानना मञ्जीरध्वनिमत्पदाम्बुजा ।
काञ्चीसिञ्जितसञ्जितम्बिनी दाहं ग्रीष्मतया व्यपोहति ॥३४॥
ग्रीष्मे कामिजनः सुकौमुदीं कर्पूरं शुभचन्द्रिकागृहम् ।
बालां चन्दनचर्चनं सुम-शय्यां सेवति रात्रिषु च्छदिम् ॥३५॥
चन्द्रोऽयं सितकौमुदीच्छलाच्छोचैर्हास्यरसाप्लुतः स्त्रियाः ।
वक्षोजाधरवक्त्रमध्यमसुख(३)त्यच्छकरैर्विटाधमः ॥३६॥
तारेयं रमणीयविग्रहा किं वा रोहिणिका मम प्रिया ।
काचिद्दत्तसुताऽथवाऽपरा यूनानेन युतेति मुह्यति ॥३७॥
स्मेरैषः परयोषिताननं शीतैरंशुकरैर्निषेव्य च ।
रात्र्यन्ते त्रपया समन्वितो मज्जत्यम्बुनिधावस्तच्छलात् ॥३८॥

(१) मन्मथम् । (२) अनुरक्ता ।
(३) स्पृशतीत्यर्थः ।

सोमोऽयं रुचिराननः स्त्रियो दृष्ट्वा शीतकरैः स्खलतोऽधिकम् ।
लज्जाभारनताननोऽबुधः पश्चादम्बुनिधौ निमज्जति ॥३९॥

रुचिरतरकुचाभिः क्षुब्धवारां वगाह्यै-
र्मलयजनितलेपैः पुष्पशय्याधिरोहैः(१) ।
तनुतरशुभवस्त्रैर्वल्लकीगानतानैः
सुखयतु शुचिरिभ्यान् (२) माधवीमिष्टपानैः ॥४०॥

---

# ब्राह्मणानां मत्स्यभोजनस्य शास्त्रीयत्वम्

[ निबन्धकः—श्रीदुर्गाप्रसन्नविद्याभूषणः ]

अत्र खलु भारते वर्षे विमर्शपूर्वकमवलोकयतामस्माकं नयनपथे सततमेवेदमापतति यद्, वङ्गीया ब्राह्मणा मत्स्यरङ्कवन्नियतमेव मत्स्यानश्नन्ति नान्यदेशीया ब्राह्मणब्रुवा अपि । तद्दर्शनेन च वङ्गीयब्राह्मणाः "सात्त्विकानेव सेवेत सत्त्ववृद्धौ नरः सदा" इति शास्त्रादेशमुल्लङ्घ्य अभक्ष्यानपि मत्स्यान् भक्षयन्तः पतिता विगतब्रह्मवर्चसाश्च संवृत्ता इत्येवमाचक्षाणाः केचन विचक्षणा अस्मान् विशेषेणाधिक्षिपन्ति ।

केचन वा ब्राह्मणानां मत्स्याशनं शास्त्रीयमशास्त्रीयं वेति जिज्ञासमाना मुनीनां नानामतदर्शनात् सन्देहसन्दोलितमानसा अवतिष्ठन्ते । केचन वान्यदेशीया वङ्गीयानां मत्स्याशनकथामाकर्णयन्तोऽपि सावज्ञं नासिकां सङ्कोचयन्ति । इत्येवमालोकयन्तोऽनेक एव मत्स्याशनं शास्त्रीयं वेत्यनुयुञ्जन्त्यस्मान् । तेषामेव निर्बन्धातिशय्येन प्रबन्धस्यास्य लेखने ममायमुद्यमः । न तु मत्स्यभोजनसमर्थनमेवास्य प्रबन्धस्यार्थं इत्येवं विजानन्तु सन्तः पाठकमहोदयाः ।

---

(१) अधिवासैः ।　　(२) धनिनः ।

प्रबन्धमिममालोकयन्तोऽनेक एव मां मत्स्याशनपक्षपातिनं मत्स्याशिनं वा मन्यमानास्तिरस्कारेण पुरस्करिष्यन्तीति सम्यग्विजानतापि मया भूयो भूयो जिज्ञासुभिरनुरुध्यमानेन यथामति मत्स्यभोजनस्य वैधत्वावैधत्वे निर्णीयेते। अत्र मनुष्यमात्रसुलभभ्रमप्रमादादिकं सम्भाव्यते सर्वथैवेति मयाङ्गीकर्त्तव्यम्।

न जाने कियतः कालाद्देशेऽस्मिन् मत्स्याशनप्रथा प्रचलितेति, न च वैधेयतयाऽवैधमप्याचरन्ति वङ्गीया इत्यपि कथनीयं केश्चित्, यतो धर्मशास्त्रेषु वङ्गीयानां पाण्डित्यप्रतिभा दिगन्तं समुल्लासयन्ती नियतमेव विस्मापयते विद्वज्जनानद्यापि।

स्मार्त्तनैयायिकसनाथेयं वङ्गभूमिरिति सर्वेषामेव सुविदितम्, एतादृशेऽस्मिन् वङ्गदेशे अशेषशास्त्राटवीसञ्चरणपञ्चानना अपि वङ्गीयद्विजेन्द्रा असङ्कोचमेव मत्स्यानश्नन्तीति दर्शनेनास्मन्मनसि सततमेवेत्थं समुदेति यद्, यदि नाम द्विजानां मत्स्याशनमेकान्तत एव निषिद्धं तर्हि किमिति वा धर्माचार्य्यवर्य्या अपि तदशनपराङ्मुखा न वर्त्तन्ते? यतो लोकशिक्षार्थं हि तेषां प्रवृत्तिः। तथाहि—

"यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते" ॥

इति गीतावचनं दृश्यते। किञ्च वङ्गीयानां मत्स्येतरनिषिद्धद्रव्यपरिवर्जनं सर्वथैव लक्ष्यते विपक्षैरपि। अथ च मत्स्यवर्जनं प्रायश एव शास्त्रविदामपि नालक्ष्यते। यतो विरला एव वङ्गीयेषु निरामिषभोजका वैष्णवेतरे राजन्ते।

न च समवगतधर्मशास्त्रा अपि तच्छासनमुल्लङ्घ्य यथेच्छमभ्यवहरन्ति वङ्गीया इत्यपि समर्थनीयमस्माभिः, यतो वङ्गीयब्राह्मणेष्वपि तादृशा महापुरुषा अनेके विराजन्ते, ये नाम यथार्थधर्मशास्त्रानुसारिणः। किं बहुना धर्मानुशासनमुल्लङ्घ्य वैधेतरदृष्टस्वपि न समाचरन्ति, अथच तादृशानामपि धर्मभीरूणां नियतशास्त्रशासनपालननिरतानां

मूर्त्तब्रह्मण्यदेवानामपि प्रायशो मत्स्यभोजनपरायणता परिलक्ष्यते। यतोऽस्माभिस्तादृशानामपि मत्स्याशनमालोक्यते ततो मत्स्याशनं नावैधमित्यनुमानं नाशोभनं भवितेति सम्भाव्यते। प्रथमं प्रागुक्तानुमानं सङ्गतमसङ्गतं वेति विविच्य पश्चाच्छास्त्रप्रमाणं दर्शयिष्यते।

दृश्यते चास्माभिर्वङ्गदेशे केचिदपि द्विजाः पलाण्डु-गृञ्जनादिकममेध्यमांसादिकं वा नादन्ति, मत्स्येष्वपि च शृङ्गि-चित्रशकुल-गोमत्स्यादीन् शास्त्रनिषिद्धान् परित्यजन्ति। यदि नाम वङ्गीयाः स्वेच्छाचारिणः सन्तो मत्स्यशानश्नन्ति, किमिति वा तर्हि पलाण्ड्वादिकं न खादन्ति? कथं वा शृङ्गिप्रभृतिमत्स्यान् वर्जयन्ति? किमर्थं वाऽमेध्यासंस्कृत-मत्स्य-मांस-भक्षणविरतास्ते वर्त्तन्ते? यतस्तेषां निषिद्धद्रव्यपरिहारः सर्वत्र सर्वतोभावेनालोक्यते प्रशस्तस्य चोपादेयत्वमतो वङ्गीया यदवैधं यन्निन्द्यं यच्च निषिद्धं तदपास्य यद्वैधं यच्छास्त्रीयं यच्च प्रशस्तं तदभ्यवहरन्तीत्यनुमानं नासङ्गतमेव। एतावत्तिष्ठतु नामानुमानमिदानीं किं शास्त्रानुशासनं तदेव दृश्यते। मनुसंहितापञ्चमाध्याये दृश्यते—

पाठीन-रोहितावद्यौ नियुक्तौ हव्यकव्ययोः।
राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः॥

एतन्मनुवचनस्य व्याख्याने टीकाकृता कुल्लूकभट्टेनोक्तं "इदानीं भक्ष्यमत्स्यानाह" अधुना भक्ष्य-मत्स्यान् कथयतीत्यर्थः।

पाठीन-रोहिताविति पाठीन-रोहितौ मत्स्यभेदौ दैवपैत्रादिकर्म्मणि नियुक्तावेव अदनीयौ, तथा राजीवाख्यान् सिंहतुण्डाख्यान् सशल्कांश्च सर्वान् वक्ष्यमाणलक्षणोपेतान् अद्यात्।

अत्र राजीवशब्देन वङ्गभाषया "रायेग" नामा मत्स्य उच्यते, सिंहतुण्डशब्देन शकुलः।

मेधातिथि-गोविन्दराजौ तु पाठीन-रोहितौ मत्स्यभेदौ दैवे पैत्रे

प्रबन्धमिममालोकयन्तोऽनेक एव मां मत्स्याशनपक्षपातिनं मत्स्याशिनं वा मन्यमानास्तिरस्कारेण पुरस्करिष्यन्तीति सम्यग्विजानतापि मया भूयो भूयो जिज्ञासुभिरनुरुध्यमानेन यथामति मत्स्यभोजनस्य वैधत्वावैधत्वे निर्णीयेते। अत्र मनुष्यमात्रसुलभभ्रमप्रमादादिकं सम्भाव्यते सर्वथैवेति मयाङ्गीकर्त्तव्यम्।

न जाने कियतः कालाद्देशेऽस्मिन् मत्स्याशनप्रथा प्रचलितेति, न च वैधेयतयाऽवैधमप्याचरन्ति वङ्गीया इत्यपि कथनीयं केश्चित्, यतो धर्म्मशास्त्रेषु वङ्गीयानां पाण्डित्यप्रतिभा दिगन्तं समुल्लासयन्ती नियतमेव विस्मापयते विद्वज्जनानद्यापि।

स्मार्त्तनैयायिकसनाथेयं वङ्गभूमिरिति सर्वेषामेव सुविदितम्, एतादृशेऽस्मिन् वङ्गदेशे अशेषशास्त्राटवीसञ्चरणपञ्चानना अपि वङ्गीयद्विजेन्द्रा असङ्कोचमेव मत्स्यानश्नन्तीति दर्शनेनास्मन्मनसि सततमेवेत्थं समुदेति यद्, यदि नाम द्विजानां मत्स्याशनमेकान्तत एव निषिद्धं तर्हि किमिति वा धर्म्माचार्य्यवर्य्या अपि तदशनपराङ्मुखा न वर्त्तन्ते? यतो लोकशिक्षार्थं हि तेषां प्रवृत्तिः। तथाहि—

"यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।

स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते" ॥

इति गीतावचनं दृश्यते। किञ्च वङ्गीयानां मत्स्येतरनिषिद्धद्रव्यपरिवर्जनं सर्वथैव लक्ष्यते विपक्षैरपि। अथ च मत्स्यवर्जनं प्रायश एव शास्त्रविदामपि नालक्ष्यते। यतो विरला एव वङ्गीयेषु निरामिषभोजका वैष्णवेतरे राजन्ते।

न च समवगतधर्म्मशास्त्रा अपि तच्छासनमुल्लङ्घ्य यथेच्छमभ्यवहरन्ति वङ्गीया इत्यपि समर्थनीयमस्माभिः, यतो वङ्गीयब्राह्मणेष्वपि तादृशा महापुरुषा अनेके विराजन्ते, ये नाम यथार्थधर्म्मशास्त्रानुसारिणः। किं बहुना धर्म्मानुशासनमुल्लङ्घ्य वैधेतरदण्वपि न समाचरन्ति, अथच तादृशानामपि धर्म्मभीरूणां नियतशास्त्रशासनपालननिरतानां

मूर्त्तब्रह्मण्यदेवानामपि प्रायशो मत्स्यभोजनपरायणता परिलक्ष्यते। यतोऽस्माभिस्तादृशानामपि मत्स्याशनमालोक्यते ततो मत्स्याशनं नावैधमित्यनुमानं नाशोभनं भवितेति सम्भाव्यते। प्रथमं प्रागुक्तानुमानं सङ्गतमसङ्गतं वेति विविच्य पश्चाच्छास्त्रप्रमाणं दर्शयिष्यते।

दृश्यते चास्माभिर्वङ्गदेशे केचिदपि द्विजाः पलाण्डु-गृञ्जनादिकममेध्यमांसादिकं वा नादन्ति, मत्स्येष्वपि च शृङ्गि-चित्रशकुल-गोमत्स्यादीन् शास्त्रनिषिद्धान् परित्यजन्ति। यदि नाम वङ्गीयाः स्वेच्छाचारिणः सन्तो मत्स्यशनमश्नन्ति, किमिति वा तर्हि पलाण्ड्वादिकं न खादन्ति? कथं वा शृङ्गिप्रभृतिमत्स्यान् वर्जयन्ति? किमर्थं वाऽमेध्यासंस्कृत-मत्स्य-मांस-भक्षणविरतास्ते वर्त्तन्ते? यतस्तेषां निषिद्धद्रव्यपरिहारः सर्वत्र सर्वतोभावेनालोक्यते प्रशस्तस्य चोपादेयत्वमतो वङ्गीया यदवैधं यन्निन्द्यं यच्च निषिद्धं तदपास्य यद्वैधं यच्छास्त्रीयं यच्च प्रशस्तं तदभ्यवहरन्तीत्यनुमानं नासङ्गतमेव। एतावत्तिष्ठतु नामानुमानमिदानीं किं शास्त्रानुशासनं तदेव दृश्यते। मनुसंहितापञ्चमाध्याये दृश्यते—

पाठीन-रोहितावद्यौ नियुक्तौ हव्यकव्ययोः।
राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः॥

एतन्मनुवचनस्य व्याख्याने टीकाकृता कुल्लूकभट्टेनोक्तं "इदानीं भक्ष्यमत्स्यानाह" अधुना भक्ष्य-मत्स्यान् कथयतीत्यर्थः।

पाठीन-रोहिताविति पाठीन-रोहितौ मत्स्यभेदौ दैवपैत्रादिकर्म्मणि नियुक्तावेव अदनीयौ, तथा राजीवाख्यान् सिंहतुण्डाख्यान् सशल्कांश्च सर्वान् वक्ष्यमाणलक्षणोपेतान् अद्यात्।

अत्र राजीवशब्देन वङ्गभाषया "रायेग" नामा मत्स्य उच्यते, सिंहतुण्डशब्देन शकुलः।

मेधातिथि-गोविन्दराजौ तु पाठीन-रोहितौ मत्स्यभेदौ दैवे पैत्रे

च कर्मणि नियुक्तावेव अदनीयौ न त्वन्यदा, सिंहतुण्ड-सशल्कमत्स्यास्तु हव्यकव्याभ्यामन्यत्रापि भक्षणीया इत्याचख्यतुः।

पूर्वोक्तवचनस्य टीकादर्शनेन मत्स्यभोजनविधिरवगम्यते। शङ्खस्मृतेश्चावगम्यते—

राजीव-सिंहतुण्डाश्च सशल्काश्च तथैव च।
पाठीन-रोहितौ चापि भक्ष्या मत्स्येषु कीर्त्तिताः॥ इति।

याज्ञवल्क्यस्मृतौ च दृश्यते—

भक्ष्याः पञ्चनखाः श्वाविद्‌गोधाः कच्छपशल्यकाः।
शशश्च मत्स्येष्वपि तु सिंहतुण्डक-रोहिताः।
तथा पाठीन-राजीव-सशल्काश्च द्विजातिभिः॥

अस्यार्थः द्विजातिभिर्ब्राह्मणैः श्वावित् खड्गी गोधा स्वर्णगोधिका कच्छपः कूर्म्मः शल्यकः शजारुनाम्ना ख्यातः कश्चिज्जन्तुविशेषः शशश्च खरगोस इति प्रसिद्धः पञ्चनखः प्राणिविशेषः एते पञ्चनखा भक्ष्याः तथा पाठीन-राजीव-सशल्का मत्स्याश्च भक्ष्याः।

एताभ्यां शङ्खयाज्ञवल्क्यवचनाभ्याञ्च द्विजातीनां मत्स्यभोजनविधिरासाद्यते।

हारीतसंहितायाञ्च दृश्यते—

"मत्स्यान् सशल्कान् न्यायोपपन्नान् भक्षयेत्।"

न्यायोपपन्नान् मन्त्रसंस्कृतान् देवद्विजेभ्यो दत्तांश्च सशल्कान् शल्कयुक्तान् मत्स्यान् भक्षयेदित्यर्थः। एतेनापि मत्स्यभक्षणं प्राप्तम्।

एतानि संहिताप्रमाणानि दर्शितानि, अधुना पुराणप्रमाणं दर्श्यते। कूर्म्मपुराणे षोडशाध्याये प्रागुक्तसंहितानुसारो मत्स्यभोजनविधिः प्राप्यते, यथा—

"मत्स्यान् सशल्कान् भुञ्जीत मांसं रौरवमेव च।
निवेद्य देवताभ्यश्च ब्राह्मणेभ्यस्तथैव च॥

शफरं सिंहतुण्डञ्च तथा पाठीन-रोहितौ ।
मत्स्यास्त्वेते समुद्दिष्टा भक्षणाय तपोधनैः ॥"

ब्राह्मणेभ्यो देवताभ्यश्च निवेद्य सशल्कान् मत्स्यान् तथा रौरवं मृग-सम्बन्धि मांसञ्च भुञ्जीत। तथा शफरं प्रोष्ठीं सिंहतुण्डं शकुलं पाठीन-रोहितौ च भुञ्जीत। एते पूर्वोक्ता मत्स्या तपोधनैः ऋषिभिः भक्षणाय समुद्दिष्टा उपदिष्टा इत्यर्थः।

एतत्तु न पुनरभिधेयं विशेषेण, यतः सर्वं एव जानन्ति यत्—सदा-चारपरायणा ब्राह्मणाः—

"अन्नं विष्ठा पयो मूत्रं यद् विष्णोरनिवेदितम्।
फलं पुष्पञ्च ताम्बूलमन्नपानादिकञ्च यत्।
अदत्वा तन्महादेव्यै न भोक्तव्यं कदाचन।
यो यद्देवार्चनरतः स तदुच्छिष्टभोजकः।"

इत्यादि शास्त्रमाद्रियमाणाः सर्वं एव स्वेष्टदेवतानिवेदितमेवान्नपानादिकं-नित्यमश्नन्ति नानिवेदितम्। अतो निवेदितमत्स्यभोजने न तावद्दोष इति पुराणवचनेनानेन प्राप्यते। एतावता मन्त्रसंस्कृतहव्यकव्यादि-नियुक्त-मत्स्यभक्षणेन न कश्चिद् दोष इत्यायातम्।

कामतोऽवैध-निषिद्ध-मत्स्याशनेन दोषस्तु सुतरामेव, न तु मत्स्य-भोजनमात्रमेव दोषाय इत्येतदवगतम्।

न च "मत्स्यादः सर्वमांसादास्तस्मान्मत्स्यान् विवर्जये"दिति मनुवचनेन, तथा "ब्राह्मणानां वैष्णवानामभक्ष्यं मत्स्यमेव हि" इति ब्रह्मवैवर्त्तोक्ते श्रीकृष्णजन्मखण्डीय ८५३ तमाध्यायवचनेन च ब्राह्म-णानां मत्स्यभोजनं सर्वथैव निषिद्धं, मत्स्यभोजनविधायकवचनानि तु ब्राह्मणेतरविषयाणि इति वाच्यं—प्रागुक्तयाज्ञवल्क्यवचने भक्ष्या इत्युपक्रम्य द्विजातिभिरित्युपसंहारेण विशिष्य द्विजातीनां भक्ष्यत्व-विधानात्। किञ्च—

च कर्म्मणि नियुक्तावेव अदनीयौ न त्वन्यदा, सिंहतुण्ड-सशल्कमत्स्यास्तु हव्यकव्याभ्यामन्यत्रापि भक्षणीया इत्याचख्यतुः।

पूर्वोक्तवचनस्य टीकादर्शनेन मत्स्यभोजनविधिरवगम्यते। शङ्ख-स्मृतेश्चावगम्यते—

राजीव-सिंहतुण्डाश्च सशल्काश्च तथैव च।
पाठीन-रोहितौ चापि भक्ष्या मत्स्येषु कीर्त्तिताः॥ इति।

याज्ञवल्क्यस्मृतौ च दृश्यते—

भक्ष्याः पञ्चनखाः श्वाविद्गोधाः कच्छपशल्यकाः।
शशश्च मत्स्येष्वपि तु सिंहतुण्डक-रोहिताः।
तथा पाठीन-राजीव-सशल्काश्च द्विजातिभिः॥

अस्यार्थः द्विजातिभिर्ब्राह्मणैः श्वावित् खड्गी गोधा स्वर्णगोधिका कच्छपः कूर्मः शल्यकः शजारुनाम्ना ख्यातः कश्चिज्जन्तुविशेषः शशश्च खर्‌गोस इति प्रसिद्धः पञ्चनखः प्राणिविशेषः एते पञ्चनखा भक्ष्याः; तथा पाठीन-राजीव-सशल्का मत्स्याश्च भक्ष्याः।

एताभ्यां शङ्खयाज्ञवल्क्यवचनाभ्याञ्च द्विजातीनां मत्स्यभोजन-विधिरासाद्यते।

हारीतसंहितायाञ्च दृश्यते—

"मत्स्यान् सशल्कान् न्यायोपपन्नान् भक्षयेत्।"

न्यायोपपन्नान् मन्त्रसंस्कृतान् देवद्विजेभ्यो दत्तांश्च सशल्कान् शल्क-युक्तान् मत्स्यान् भक्षयेदित्यर्थः। एतेनापि मत्स्यभक्षणं प्राप्तम्।

एतानि संहिताप्रमाणानि दर्शितानि, अधुना पुराणप्रमाणं दर्श्यते। कूर्म्मपुराणे षोडशाध्याये प्रागुक्तसंहितानुसारो मत्स्यभोजनविधिः प्राप्यते, यथा—

"मत्स्यान् सशल्कान् भुञ्जीत मांसं रौरवमेव च।
निवेद्य देवताभ्यश्च ब्राह्मणेभ्यस्तथैव च॥

शफरं सिंहतुण्डञ्च तथा पाठीन-रोहितौ ।
मत्स्यास्त्वेते समुद्दिष्टा भक्षणाय तपोधनैः ॥"

ब्राह्मणेभ्यो देवताभ्यश्च निवेद्य सशल्कान् मत्स्यान् तथा रौरवं मृग-सम्बन्धि मांसञ्च भुञ्जीत। तथा शफरं प्रोष्ठीं सिंहतुण्डं शकुलं पाठीन-रोहितौ च भुञ्जीत। एते पूर्वोक्ता मत्स्या तपोधनैः ऋषिभिः भक्षणाय समुद्दिष्टा उपदिष्टा इत्यर्थः।

एतच्च न पुनरभिधेयं विशेषेण, यतः सर्वे एव जानन्ति यत्—सदाचारपरायणा ब्राह्मणाः—

"अन्नं विष्ठा पयो मूत्रं यद् विष्णोरनिवेदितम्।
फलं पुष्पञ्च ताम्बूलमन्नपानादिकञ्च यत्।
अदत्वा तन्महादेव्यै न भोक्तव्यं कदाचन।
यो यद्देवार्चनरतः स तदुच्छिष्टभोजकः।"

इत्यादि शास्त्रमाद्रियमाणाः सर्वे एव स्वेष्टदेवतानिवेदितमेवान्नपानादिकं नित्यमश्नन्ति नानिवेदितम्। अतो निवेदितमत्स्यभोजने न तावद्दोष इति पुराणवचनेनानेन प्राप्यते। एतावता मन्त्रसंस्कृतहव्यकव्यादि-नियुक्त-मत्स्यभक्षणेन न कश्चिद् दोष इत्यायातम्।

कामतोऽवैध-निषिद्ध-मत्स्याशनेन दोषस्तु सुतरामेव, न तु मत्स्य-भोजनमात्रमेव दोषाय इत्येतदवगतम्।

न च "मत्स्यादः सर्वमांसादास्तस्मान्मत्स्यान् विवर्जयेदिति" मनुवचनेन, तथा "ब्राह्मणानां वैष्णवानामभक्ष्यं मत्स्यमेव हि" इति ब्रह्मवैवर्त्तोक्ते श्रीकृष्णजन्मखण्डीय ८५३ तमाध्यायवचनेन च ब्राह्मणानां मत्स्यभोजनं सर्वथैव निषिद्धं, मत्स्यभोजनविधायकवचनानि तु ब्राह्मणेतरविषयाणि इति वाच्यं—प्रागुक्तयाज्ञवल्क्यवचने भक्ष्या इत्युपक्रम्य द्विजातिभिरित्युपसंहारेण विशिष्य द्विजातीनां भक्ष्यत्व-विधानात्। किञ्च—

"मत्स्यादाः सर्वमांसादास्तस्मान् मत्स्यान् विवर्जयेत्।
पाठीन-रोहितावद्यौ नियुक्तौ हव्यकव्ययोः।"

इत्यादि मनुवचनतः परस्परविरुद्धौ विधिनिषेधौ द्वावेवोपलभ्येते। न च मनुवचनविरोधः कथञ्चिदपि समर्थनीयः, यतः प्रागुक्तवचनद्वयस्य एकतरप्रामाण्याङ्गीकारे इतरस्याप्रामाण्यापत्तिः सुतरामेव घटते। अतो विरोधसमाधानम् अवश्यं विधेयम्। तच्च सम्भवति खल्वेक-वाक्यत्वाङ्गीकारादेव नान्यथा। एकवाक्यता च संहितान्तरवचनै-र्मनुवचनानामविरोधेन परस्परविरुद्धमनुवचनद्वयस्य सामञ्जस्यम् एकार्थपर्य्यवसानं वा। तच्च मनुवचनद्वये सम्भवत्येव, सम्भवति सत्येकवाक्यत्वे वाक्यभेदकल्पना च न युक्ता। तथा च "सम्भवत्येक-वाक्यत्वे वाक्यभेदो न युज्यते" इत्युक्तं शास्त्रज्ञैः, एकवाक्यत्वसम्भवे च वाक्यभेदकल्पनाया अन्याय्यत्वादत्र कथं सम्भवति परस्पर-विरुद्धार्थयोर्मनुवचनयोः संहितान्तरैकवाक्यतया सामञ्जस्यं, तदेव परिदृश्यते।

तथाहि मनुवचने पूर्वं "मत्स्यान् विवर्जये" दित्युक्तं पश्चाच्च पाठीन-रोहितावद्यौ इत्यादिना पाठीन-रोहितयो राजीवादीनाञ्च भक्ष्यत्वमभिहितं संहिताकारेण, तस्मादनयोर्विधिनिषेधयोः संहिता-न्तरवचनैकवाक्यतया मत्स्यान् विवर्जयेदित्यत्र मत्स्यानिति पदं शास्त्रेषु यथाविधि भक्ष्यत्वेनोद्दिष्ट-पाठीनादि-मत्स्येतरमत्स्यपरं, न तु मत्स्यमात्रपरमित्यर्थे विहिते भवितुमर्हति विरोधसमाधानं, समाधानार्थञ्च पूर्वोक्तरूपोऽर्थोऽवश्यमङ्गीकर्त्तव्यः। तथा च सति शास्त्रेषु यथाविधि भक्ष्यत्वेनोद्दिष्टान् मत्स्यान् भक्षयेत् तदि-तरान् वर्जयेत्, न तु सर्वान् भक्षयेद् वर्जयेद् वा इत्यर्थो लभ्यते, एत-दर्थलाभाच्च सम्पन्नं विधिनिषेधयोः सामञ्जस्यम्। अन्यथा तेजस्तिमि-रयोरिव विधिनिषेधयोर्विरुद्धत्वादुभयोरप्रामाण्यापत्तिर्दुर्निवारैव।

अनवस्थादोषदुष्टे च मनुवचनद्वये न जायेत जगति कस्याप्यास्था,

अत एव विरोधसमाधानार्थं प्रागुक्तार्थः सर्वथा स्वीकरणीयः सर्वेषाम्। अङ्गीकृते च प्रागुक्तार्थे ब्राह्मणानां यथाविधि शास्त्रोक्त-मत्स्यभोजनं वैधमेवेति प्रतिपन्नम्।

अपि च जन्मतिथिप्रकरणे तद्दिनकर्त्तव्यनिर्णये—

स्नात्वा जन्मदिने स्त्रियं परिहरन् प्राप्नोत्यभीष्टां श्रियम्।
मत्स्यान् मोचयतो द्विजाय ददतश्चायुश्चिरं वर्द्धते॥

इत्यादि वचने द्विजाय यन्मत्स्यदानमुद्दिष्टं तत् किं भक्षणार्थमुतान्यनिमित्तम्? अन्यनिमित्तमिति चेत्, तत् किं नाम निमित्तम्? नहि भोजनव्यतिरिक्तं मत्स्येन किञ्चित् प्रयोजनं दृश्यते मनुष्याणाम्। अतो भोजनार्थमेव द्विजाय मत्स्यदानमित्यनिच्छयापि स्वीकर्त्तव्यम्। न हि अग्राह्याभक्ष्यपलाण्ड्वादिदानवार्त्ता कुत्रापि दृष्टा

अथ दानीयं भोज्यमेव भवितव्यमित्यत्र किं मानम्? गोदानादावतथात्वदर्शनात् इति चेत्तत्रेदं वक्तव्यं यद् गवादिद्वारा हि मनुष्याणामशेषाणि कार्य्याणि सम्पाद्यन्ते, तथाहि गोदुग्धं पानाय कल्पते, क्षीराच्च दधि-घृतादिकं समुत्पद्यते, गोमयादिकं गृहलेपनादावुपयुज्यते, करीषादिकं रन्धनोपयोगीन्धनस्थानीयं भवति, एवमुपानदादावुपयोगान्तरं द्रष्टव्यम्। नहि मत्स्येन प्रयोजनान्तरं चिन्तयन्तोऽपि वयं निश्चेतुमलम्। अतो भोजनार्थमेव मत्स्यदानमिति प्रतीमः। यदि नाम मत्स्या एकान्तत एव अभक्ष्या अभविष्यन् तर्हि तद्दानवार्त्ता कुत्रापि नास्थास्यत्। नहि पलाण्ड्वादिदानवार्त्ता कुत्रापि वर्त्तते, एतेनापि मत्स्या नाभक्ष्या इति बुध्यते।

अथ "मत्स्यांस्तु कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्" इति शूलपाणिधृतप्रायश्चित्तविधायकवचनस्य किमुत्तरमिति चेत्तत्रेत्थमुत्तरं कल्प्यम्। तथाहि शूलपाणिधृत प्रायश्चित्तविधायकवचने "कामतः" इति पदेन मत्स्यानितिपदस्य स्वेच्छया यथाविधि शास्त्रोदित-भक्ष्यमत्स्येतर-मत्स्यान् इत्यर्थो बोद्धव्यः। अन्यथा मत्स्यानित्युक्त्वा

सिद्धौ कामत इति पदस्य वैयर्थ्यमापद्येत, यत्तु कामत इति पदं तत् स्वेच्छया वैधेतराभक्ष्यमत्स्यान् जग्ध्वा इत्यर्थं प्रत्याययति। अतः शास्त्रोक्त-वैध-मत्स्यभक्षणे न प्रायश्चित्तमिति सिद्धान्तः। अन्यथा मत्स्यमात्रभोजने प्रायश्चित्तमित्युक्ते प्रागुक्तसंहितादिषु मत्स्यभोजन-विधायकवचनानामनुपपत्तिरेव स्यात्।

अथ मत्स्यभोजनविधिर्वङ्गदेश एव व्यवस्थितो भवतु इत्यपि न वाच्यं—होलाकाधिकरणे देशभेदव्यवस्थाया निराकृतत्वात्। न च निरामिषाशिनः प्रति किञ्चिद् वक्तव्यं केषाञ्चिदपि—"प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला" इत्यादि मन्वनुशासनात्। तथापि ये नाम मत्स्याशिनस्ते पतिताः स्वेच्छाचारिण इत्यपि न वक्तव्यं, तेषां शास्त्रानुसारत एव भक्षणदर्शनात् शास्त्रनिषिद्धमत्स्यानां परिवर्जन-दर्शनाच्च।

अतो यथाविधिशास्त्रसम्मत-मत्स्यभक्षणं वैधमेव द्विजातीनामिति प्रतिपन्नम्।

---

## विद्यार्थि-विहगाः

[ निबन्धकः—दिगम्बरकाशीनाथगर्द्दे ]

निशम्य शिक्षामखिलां गुरोर्मुखा-
त्तदर्थलेशं न कदापि जानते।
तथापि येषां सकलं मुखोद्गतं
त एव बालाः शुकसाम्प्रदायिनः॥१
विदीर्य काष्ठं सततं प्रयत्नतः
स चूर्णपेषं प्रपिनष्टि कीटकः।

पठन्ति शास्त्राण्यपि ये च शब्दशो
भवन्ति ते कीटकसाम्प्रदायिनः ॥ २

यदाऽऽपतेद् दृष्टिपथं पयोधर-
स्तदाऽऽरभन्ते शिखिनोऽपि नर्तितुम् ।
भवेत् परीक्षा न च यावदन्तिके
पठन्ति तावन्न मयूरवृत्तयः ॥ ३

विवक्षितार्थं त्ववगन्तुमक्षमाः
प्रकाशयन्तो रटने स्वपाटवम् ।
निरर्थकं काकरुतानुकारिणा
स्वरेण केचित् प्रतिभान्ति काकवत् ॥ ४

यथा चकोरो भजते हि चन्द्रिकां
तदन्यदस्मै न कदापि रोचते ।
तथा विशिष्टागमसक्तमानसा
अनन्यचित्तास्तु चकोरवृत्तयः ॥ ५

यथा द्विरेफा मधुसञ्चयव्रता
भ्रमन्ति नित्यं सुमवाटिकादिषु ।
तथैव ये ज्ञानमरन्दलिप्सया
अधीयते ते तु मिलिन्दवृत्तयः ॥ ६

भवन्ति विद्यार्थिषु भिन्नवृत्तयो
मया षडेता विरचय्य वर्णिताः ।
अतो भवद्भ्यः कतमाऽभिरोचते
विचार्य सम्यक् क्रियतां सुनिश्चयः ॥ ७

# रजनी

( पूर्वतोऽनुवृत्ता )

[ निबन्धिका—श्रीमती रेणुदेवी ]

कथमहं जातास्मि, कथमहं नयनहीना, जाता चेत् कथं शचीन्द्रस्य योग्या न संवृत्ता। अयोग्या च कथं तस्मिन् अनुरक्तास्मि। अनुरागवती च कथं तस्य समीपेऽपि स्थातुं न प्रभुरस्मि। कथञ्च तमेव परिचिन्तयन्ती परित्यक्तवती भवनम्। कथमन्धा सहायहीना च गङ्गातीरमागतास्मि मर्त्तुम्। कथं वा प्रबलजलोच्छ्वासमुखपतित-तृणसाम्येन संसारस्रोतसि प्लवमानाया अविदितपथैनैव मे प्रवृत्तिः। अस्मिन् संसारे बहवो दुःखिनो वर्त्तन्ते, कथमहं तान् सर्वान् अतीत्य वर्त्तमाना। कस्येयं लीला, किं देवस्य ? जीवानाम् एतावता क्लेशेन किं देवस्य सुखमुत्पाद्यते ? जीवानां दुःखभोगायैव सृष्टिप्रवृत्तिश्चेत् किमनया तस्य सुखम् ? मूर्त्तिमतीं निर्दयतामेव कथं देवतेति व्यपदिशामि, कथं वा निष्ठुरतां पूजयामि। न हि खलु देवकृतं मानुषाणाम् इदं भयानकं दुःखम्। एवञ्चेत् राक्षसेभ्योऽपि निकृष्टास्ते देवाः। किं तर्हि मयैव कृतानां कर्म्मणाम् अयं परिपाकः ? केन पापकर्म्मणाहं जन्मान्धा। अथ क्रमेणाहं पुरतः प्रवृत्तास्मि प्रचलितुं मर्त्तव्यमिति। गङ्गायास्तरङ्गध्वनिमश्रौषम्। मन्ये न मे भविष्यति मरणम्। इदानीमपि मे शब्दमाधुर्य्यं प्रत्ययमनुरागः, न मरिष्यामि। क्रमेणाचिबुकम् आनयनञ्च सर्वं निमज्जितम्। क्षणमात्रमिदम् अवशिष्टं वर्त्तते। निमग्नास्मि। निमग्ना किन्तु न मृता। तथापि न वक्तुमिच्छामि यन्त्रणामयीमिमां जीवनकथाम्। अन्यः कथयिष्यति।

तस्मिन् प्रभातवाततािडतभागीरथीप्रवाहपतिता नीयमानास्मि। क्रमेण विलुप्ता श्वासग्रहणशक्तिः, विनष्टा च चेतना।

# अमरनाथो वक्ता

असारमिदं जीवनं वहतो मे वर्त्तते तुच्छस्यापि मया विहितस्य कर्म्मजातस्य वर्णनप्रयोजनम्।

संसारसागरेऽस्मिन् कस्यां सैकतभूमौ प्रतिहता मे तरणिरेषा भग्ना सोऽयं वृत्तान्तो मया विस्रचित्ते विलेखनीयः, यथा नवीना नाविकाः सावधाना भविष्यन्ति। मम निवासः पितुरालयो वा शान्तिपुरं नाम नगरम्। अधुना तु स्थिरता न वर्त्तते निवासस्य। सत्कायस्थकुलसम्भूतस्यापि मे पित्रन्ववाये कश्चित् कलङ्कस्पर्शः समजनि। मम खलु पितामहानुजपत्नी तत्याज कुलम्। मम पितुस्तथैवासीत् भूमिसम्पत्तिर्यथा विनैव धनानामर्जनं शक्यमनायासेनैव जीवनयापनं कर्त्तुं, स हि परिगणित आसीत् धनवत्सु। तेन खलु मम शिक्षासौष्ठवसम्पादनाय धनव्ययपरिगणना न कृता। शिक्षितश्चास्मि कथञ्चित् कासुचित् विद्यासु। किन्त्वलमनया कथया। भवति भोगिनोऽपि शिरसि मणेरवस्थानं, मय्यपि विद्यायाः।

समुपस्थिते च मम परिणयसम्पादनयोग्ये वयसि, समेता बहवः सम्बन्धमर्थयमानाः कन्यापितरः। न तेषु कश्चिदपि पितुर्मे मनोरथानुरूपः। तस्य तावत् एवमेव मनोरथः यथा कन्या सुन्दरीणाम् अग्रणीः, पिता च तस्या धनिनां मुख्यः कौलीन्यप्रथा च सर्वथा दोषहीना स्यादेवं चेत् घटते (तर्हि) सुसम्पादो मे विवाहः स्यात्, किन्तु नैवंविध-गुणवत्सम्बन्धसमागमः कश्चिदपि जातः। इदन्तु तत्र तथ्यं यदस्माकं कुलकलङ्कमाकर्णयन्तो न केऽपि कुलाभिमानिनः कन्यादानं प्रति समुत्सुकाः। एवं सम्बन्धमन्विष्यन्नेवापरिपूरितमनोरथः परलोकमगान्मे जनकः।

अथ परलोकमुपेते पितरि गतेषु च केषुचिद् दिवसेषु, पितृस्वस्रा मे निर्णीतः कश्चन सम्बन्धः।

गङ्गातीरे कालिकापुरं नाम कश्चिद् ग्रामो वर्त्तते। अस्मिन् इतिवृत्ते भवानीपुराख्यस्य ग्रामान्तरस्य प्रसङ्गः सप्रयोजनः। परस्पर-सन्निहितं तदिदं ग्रामद्वयम्। तत्र कालिकापुरे च पितुःस्वसुर्मे श्वशुर-भवनम्। तत्रत्यस्यैव कस्यचिद् अभिजातस्य कन्यका लवङ्गलता नाम सर्वथा योग्या ममेति तया स्थिरीकृतः सम्बन्धः।

इतः पूर्वमपि मया भूयो भूयः पितृष्वसृभवनमुपेतेन तत्र, तस्याः पितृगृहे च विलोकिता लवङ्गलता। निर्णीते च सम्बन्धे मम दर्शनपथं परिहरन्त्याश्च तस्यां बाहुल्येन वृद्धिमुपेतं मे तस्या दर्शनौत्सुक्यम्। तदा च तस्याः समुत्तीर्णप्रायं विवाहवयः। लवङ्गकलिका विकाशोन्मुखी जाता, तस्या दृष्टिश्चञ्चला भीता च संवृत्ता, मृदुलं व्रीड़ासम्बन्धञ्चालभत समुच्चहासः। द्रुतगतिश्च मन्थरभावमापेदे। आसीच्च मे मनसि, चित्रम् इदं, न कदापि मया विलोकितमेतादृशं सौन्दर्य्यम्। न युवत्याः कथमप्येतादृशी सौन्दर्य्यसम्पत् सम्भवति। सत्यमेवैतत् यदतीतशैशवायाः परं लब्धयौवनमदायाः किशोरिकायाः शिशोश्च नातिपरिस्फुटवचनस्य सौन्दर्य्यं यथा मनो हरति न तथा विलासलास्यभूमेर्यौवनवत्याः। यौवने हि वसनभूषणविन्यासविशेषस्य बाहुल्यं, स्मितकटाक्षविक्षेपस्य समुत्कर्षः, वेणीबन्धस्य सन्दोलनं, बाहुमृणालयोश्चलनं ग्रीवाभङ्गीवैचित्र्यम् वचनचातुर्य्यञ्च युवतीनां रूपविकाशं पण्यन्यासधर्मत्वमुपपादयन्ति। वयञ्च विकारवतैव नयनजातेन तानि तान्यवलोकयन्तो न याथातथ्यस्य निर्णये प्रभवामः। यस्य च सौन्दर्य्यस्य स्वरूपपरीक्षायां विकृतिमदिन्द्रियसम्बन्धं नानु-भवति मनोवृत्तिः, तदेव सौन्दर्य्यम्।

अस्मिन्नेव समये कन्याकर्त्ता श्रुतवान् अस्माकं कुलकलङ्कम्। भग्नश्च सम्बन्धः। मम हृदयपतत्री लवङ्गलतायामस्याम् उपवेष्टुम् उपक्रान्तः किन्तु सहसा भवानीनगरादुपेत्य रामसदयमित्रो हृदयान्मे विच्छिद्य निनाय लवङ्गलताम्। तेनैव तस्याः सम्पन्नः परिणयः।

लवङ्गलतालाभे नितरां निराशोऽहं दूयमानेन मानसेन स्थितवान्। गतासु च कासुचित् समासु संघटितः कश्चिदेवं व्यापारो यस्य प्रकाशनेऽपि न प्रभुरस्मि। कदापि वक्तुं प्रभवामि वा न वेति नाद्यापि निश्चयः। ततः प्रभृत्येवाहं परित्यक्तनिवासो विसृज्य सम्बन्धिनो निरपेक्षः सुखसाधनेषु देशेषु बंभ्रम्यमाणो न कुत्रापि स्थितिमासादयामि।

नास्ति मे कुत्रापि स्थितिरिति सत्यमिदं, तथापि मनोरथमात्रेणैव स्थिरमास्पदमासाद्य समर्थोऽस्मि स्थातुम्। इच्छामात्रेणैव कुलीनपदभाजो ब्राह्मणादपि समधिकं विवाहञ्च कर्त्तुम्। मम सर्वमेवासीत्। धनं वा, विद्या वा, बाहुबलम् वा। न कस्याप्यभावमन्वभवम्। किन्त्वदृष्टदोषेण एकस्यैव दिवसस्य व्यापारेण बुद्धिदोषानुष्ठितेन समुपहतः। सर्वं परित्यज्य सुखमयं गृहं, विश्रम्भवन्तः परिजनाः स्निग्धाः सहृदयाः सुहृदः, विकसत्कुसुमोद्यानसौन्दर्य्यमनोरमः संसारश्च, सर्वमिदं परित्यज्य वात्याताडितपतङ्गवत् विवशो देशेषु परिभ्रमामि। अहमिच्छामात्रेणैव जन्मभूमावेव रम्यं मे भवनं रम्यसज्जया सज्जितं विधाय विलासपवनेन सुखपताकामुत्तोलयन् हसितसायकपरम्परया दुःखराक्षसम् अपाकृत्य समर्थोऽस्मत्रवस्थातुम्। किन्तु आस्तामेतत्। इदं तावत् परिचिन्तयामि कथं मया तत्र कृतमिति। सुखस्य दुःखस्य वा विधानं न ममायत्तम्। किन्तु मनस्तु ममैव। तरङ्गे निमग्ना तरणीति किमहमपि निमग्नोऽस्मि ? कूलन्तु सन्तरणेनैव लभ्यते। किञ्च किमिदं दुःखं नाम ? मानसीयमवस्था चेत्, सा तु आत्मन्येवायतते। सुखं वा दुःखं वा किमिदं स्वायत्तं परायत्तं वा ? परन्तु केवलं बहिर्जगत एव ईष्टे, आन्तरं तु सर्वथा ममैवाधीनम्। मामकेनैव अन्तरेण राज्येन न कथमहं सुखी भवेयम् ?

किं बहिरेव यदिदमनुभूयते तदेव तथ्यम् ? किं वितथैव चेयमान्तरानुभूतिः ? किं मनोमात्रमादाय न तुष्यति जनः। बहिर्जगति

कियन्तो वर्त्तन्ते पदार्थाः? न किं ते ममान्तरे वर्त्तन्ते? यानि च वस्तूनि ममान्तरे जगति प्रतिभान्ति, कुतस्तद् दर्शयितुं प्रभवति बाह्यं जगत्? यानि प्रसूनानि मालभूमौ विकसन्ति योऽयं वातो हृदयाकाशे परिस्पन्दते यश्च सुधांशुः चित्तगगनं सुधाधारया परिप्लावयन् समुदेति यश्चायमान्तरः सागरः तमसोपगूढः स्वयमेव माद्यति, कुत एषां बहिर्जगति सम्भवः?

एवं चेत् तर्हि तस्मिन् निशीथसमये तस्याः सुषुप्तायाः सुन्दर्य्याः सौन्दर्य्यप्रभया—आस्तामेतत्। ( क्रमशः )

---

# सरस्वत्या मूर्त्तितत्त्वम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—श्रीअमूल्यचरणविद्याभूषणः ]

ललितासने आसीना सरस्वती—खृष्टीय १८०४।५ अब्दे वीणा-वादनरता काचित् सरस्वतीमूर्त्तिराविष्कृता। साम्प्रतमसौ सार-नाथस्थ-चित्रशालायां (B(E)27) रक्षिता। मूर्त्तिरियं कस्मिंश्चित् उच्चैरासने ललितमुद्रायाम् आसीना। असौ नानालङ्कारभूषिता च। एतत्तु मध्ययुगभास्कर्य्यस्य सुष्ठु निदर्शनम्। इयञ्च मूर्त्ती रक्तवालुका-प्रस्तरमयी।

भङ्गी च सरस्वतीमूर्त्तेः—प्रायश इयं देवी विष्णुमूर्त्तिसनाथा प्राप्यते। बङ्गीय-साहित्यपरिषच्चित्रशालायाम् एवंविधा बह्व्यो मूर्त्तयः सन्ति। देव्या मूर्त्तेर्भङ्गी प्रायेण समभङ्गयुता। परिषच्चित्रशालायां समपद-स्थानकमुद्रायां पद्मपीठस्था एका विष्णुमूर्त्तिर्विद्यते। मूर्त्तेरस्या दक्षिणपार्श्वे लक्ष्मीः वामपार्श्वे तु वीणाहस्ता सरस्वती। मूर्त्तिद्वयमपि

त्रिभङ्गम्। अत्र चतस्रो विष्णुमूर्त्तयोऽपि विद्यन्ते। आसामपि वामपार्श्वे वीणाहस्ता सरस्वती शोभते। पुरतः त्रिभङ्गमुद्रया पादैकलग्ना देवी तिष्ठति। विष्णुमूर्त्या सह राजमाना सरस्वती प्रायेण पद्मपीठे दण्डायमाना दृश्यते। साहित्यपरिषदि एकस्यां मूर्त्त्याम् एवंविधायां त्रिविक्रमाधिकृतायां भद्रपीठिकायां मूर्त्तिरसौ दण्डायमाना। परिषदि विष्णोरपि एका ताम्रमूर्त्तिरस्ति। अत्रापि त्रिभङ्गमुद्रया वीणाहस्ता सरस्वती तिष्ठति। पुनरपि असौ पञ्चरथ-भद्रपीठोपरि पद्मपीठे तिष्ठति। किञ्च एकस्यान्ताम्रकैश्यवमूर्त्तावपि सरस्वती अस्ति। अत्र द्विभङ्गमुद्रयापि काचित् वीणावादनरता भारतीमूर्त्तिर्विद्यते। परिषदः $\left(\frac{F(a)\ 15}{353}\right)$ संख्यक-विष्णुमूर्त्तौ देवी अभङ्गमुद्रया स्थिता। अन्यापि सरस्वतीमूर्त्तिः विष्णुमूर्त्तौ अभङ्ग-मुद्रया विद्यते। $\left(\frac{K(d)\ 1}{282}\right)$ मूर्त्तिरियं वीणाहस्ता नानालङ्कार-भूषिता च। खृष्टीय १९११-१२ अब्दस्य Archæological Survey of India वार्षिकविवरणे रङ्गपुरे प्राप्ताः पञ्च विष्णुमूर्त्ति-प्रतिलिपयः सन्ति। एषां प्रथमस्य तृतीयस्य चतुर्थस्य पञ्चमस्य च विष्णोः दक्षिणे लक्ष्मीः वामे वीणाहस्ता सरस्वती। रङ्गपुर-साहित्य-परिषत्-पत्रिकायां सप्ततिसंख्यकफलकप्रतिकृतिस्थ-द्वितीयविष्णुमूर्त्तिविवृतौ श्रीयुत-जगदीशमुखोपाध्याय एवं ब्रवीति—विष्णोः वामदिग्विभागस्था मूर्त्तिः सरस्वत्याः, अनया वीणा वक्रं धृता। महामति Spooner महोदयेन कथितं नेयं वीणा अपि तु पद्मम्। पद्ममत्र पद्मदण्डकरम्। वीणा ऋजुरेव भवति न कदापि वक्रा। इयं मूर्त्तिर्न सरस्वत्या अपि तु वसुमत्याः। अस्याः दक्षिणे इन्दिरा। सारदातिलकध्यानादपि तदेव प्रतिभाति—

> ऊर्द्ध्वद्विवाकराभयनिशं शङ्खं गदां पङ्कजम् (?)
> चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभि-पार्श्वद्वयम्।

कोटीराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभं
दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे ॥

महीशूरराज्ये तीरुमकुडलु-नरसिंपुर इत्यभिधेयं भूखण्डमेकमस्ति। सोमनाथपुराख्यग्राम एतद्भूखण्डान्तर्गत एव भवति। कावेर्य्याः तीरभूमेर्दशक्रोशमन्तरं स्थानमेतत्। अत्र किञ्चित् केशवमन्दिरमस्ति। तत्र हैशलस्थापत्यस्य प्रभूतं निदर्शनं विद्यते। अस्य मन्दिरस्य बहिःप्राचीरे चतुर्नवत्युत्तरशतसंख्यका मूर्त्तयः सन्ति। आसु लक्ष्मी-सरस्वती-महिषमर्दिनीप्रभृतीनां चतुर्दशोत्तरशतसंख्यका मूर्त्तयः। अवशिष्टाः पुनर्नरसिंह-वराह-हयग्रीव-वेणुगोपाल-परवासुदेव-ब्रह्म-शिव-गणपतीन्द्र-मन्मथ-सूर्य्य-गरुड़प्रभृतीनाम्। एतानि ऋतेऽपि तत्र नृत्तविष्णु-नृत्तगणपति-नृत्तलक्ष्मी-नृत्तसरस्वतीनां मूर्त्तयोऽपि विद्यन्ते। नृत्तसरस्वती द्विभुजा, नानालङ्कारभूषिता च। सा प्रायशो वीणां धत्ते। काश्चन मूर्त्तयो वीणाविरहिता अपि सन्ति। नृत्तसरस्वत्या मूर्त्तिरियम् अतीव मनोज्ञा। अस्या भङ्गी च तथा। हलेविडु इत्याख्यायां नगर्य्यामपि काचित् मनोज्ञा नृत्यपरायणा सरस्वतीमूर्त्तिरस्ति।

वीणाहस्ता लक्ष्मीः—शुक्राचार्य्यस्तस्य नीतिसारे सात्त्विकलक्ष्मीमूर्त्तिवर्णनायां "मूर्त्तिरियं चतुर्भुजा भवती"ति भणति। वीणा लुङ्गफलम् अभयं वरश्च हस्तचतुष्टये प्राप्यन्ते।

मुद्रा—सप्तदशवर्षेभ्यः प्राक् प्रयागसन्निहिते भिटाख्ये स्थाने प्रतिमुद्रिता मुद्रा आसादिता। आसाम् एकस्या वर्त्तुलाकाराया मुद्राया एकस्मिन् प्रान्ते ऊर्द्ध्वकुम्भोऽस्ति। कुम्भस्तु पादपीठोपरि स्थापितः। तस्य अधस्तात् उत्तरगुप्तलिप्यङ्कितं सरस्वतीति नाम विद्यते। मुद्राया अपरस्मिन् भागे न किञ्चिदपि दृश्यते। अर्द्ध इञ्चपरिमितः अस्याः व्यासः।

सरस्वती-संस्थानम्—श्रीधराश्वमुखौ पार्श्वद्वये वागीश्वरी क्रिया। कीर्त्तिर्लक्ष्मीस्तथा सृष्टिर्विद्या शान्तिश्च मातरः॥

मुद्रितं हि ब्रह्मणश्चक्षुरिति विष्णुपुराणवचनम्। स हि ध्यानमुद्रया सप्तहंसरथसमासीनः। अस्य दक्षिणे सरस्वती वामे सावित्री। एते मनोज्ञे विविधभूषणभूषिते च। कालिकापुराणे चतुर्मुखस्य चतुर्भुजस्य च ब्रह्मण एका विवृतिर्विद्यते। स कदाचित् रक्तकमलारूढ़ः कदाचिद्वा हंसारूढ़ः। ब्रह्मणः अस्य सावित्री वामपार्श्ववर्त्तिनी। तन्त्रसमुच्चये तु आसाद्यते यत्, उत्तरमातृगणानां पार्श्वद्वये श्रीधराश्वमुखयोः संस्थानं, मध्ये वागीश्वरी क्रिया कीर्त्तिः लक्ष्मीः सृष्टिर्विद्या शान्तिश्च एष सप्तमातृगणः। दक्षिणभारतीयशिल्पशास्त्रस्य रूपमण्डने अस्ति यत्, गणेशमन्दिरे गणेशस्य वामपार्श्वे गजकर्णः दक्षिणे सिद्धिः उत्तरे गौरीमूर्त्तिः पूर्वे बालचन्द्रः दक्षिणे सरस्वती पश्चिमे सरस्वत्याः पृष्ठभागे कुबेरश्च। नारदपञ्चरात्रागमे कति देवताः तच्छक्तीनां च नामानि विद्यन्ते, तासु सरस्वती सङ्कर्षणशक्तिरूपेणाभिहिता। तस्मिन्नेव तु रूपमण्डने ब्रह्मणो मन्दिरनिर्माणप्रकारोऽपि दृश्यते। अत्र सावित्रीसरस्वतीप्रभृतयः ब्रह्मणः पार्श्वदेवतारूपेण दृश्यन्ते। कारणागमे सभापतिमधिकृत्य विद्यते—कैलासपर्वतशृङ्गे रत्नखचितासनासीनाया गौर्य्याः पुरतः सायं चन्द्रमौलिशिवः नृत्यनिरतः। सर्वदेवा अपि तस्मिन् नृत्ये प्रवृत्ताः। ब्रह्मा करतालं, विष्णुः पटहं, भारती वीणां, सूर्य्याचन्द्रमसौ वंशीध्वनिञ्च कुर्वन्तस्तिष्ठन्ति। तुम्बुरुः नारदश्च गायतः, नन्दि-कुमारौ वादयतः। मयमते अन्यासां देवतानां नामानि च दृश्यन्ते। भुजङ्गत्रासितं नाम हि शिवस्य नृत्यम्। एलिफाण्टाख्ये स्थाने पर्वतगुहायां शिवस्य गङ्गाधरमूर्त्तिरस्ति। शिवशिरसि गङ्गायमुनासरस्वतीनां मूर्त्तित्रयं दृश्यते।

गौरीमन्दिरे तु मध्यभागे गौरी, तस्या वामे सिद्धिः, दक्षिणे श्रीः, पृष्ठकर्णभागे भगवती सरस्वती च। ऐशान्यां गणेशः आग्नेय्यां

कुमारः। मुम्बइप्रदेशस्य-वीजापुरनगरान्तर्गत आइहोल इत्याख्यस्थाने एकं शिवमन्दिरमस्ति। तत्र एका ब्रह्मणो मूर्त्तिः। अस्या दक्षिणे सरस्वती सावित्री च अवस्थाय ब्रह्मणः शिरसि पुष्पमालां प्रयच्छतः। हलेविड् इत्याख्यस्थानस्य कैलासमन्दिरे ब्रह्मणः काचिद् दण्डायमाना मूर्त्तिरस्ति। तस्या उभयपार्श्वे चामरधारिणी एकैका मूर्त्तिः। ते तु सरस्वत्याः सावित्र्याश्च भवेताम्। कलिकाता-कलाभवने एका प्रस्तरमूर्त्तिरस्ति। तत्र ब्रह्मणो वामजानुनोरुपरि आसीना सरस्वती। सा एकेन हस्तेन ब्रह्मणः स्कन्धदेशं वेष्टयति। महीशूरस्य-शृङ्गेरीमठाधिष्ठात्री सरस्वती शारदेति नाम्ना प्रगीयते। सा पञ्चानना चतुर्हस्ता चतुःषष्टिकलाधिष्ठात्री देवता। असौ दशहरादिवसे गन्धफलपुष्पैरर्च्यते।

ब्राह्मणग्रन्थेषु देवी वाग्देवीरूपेण पौराणिकयुगे तु सरस्वतीरूपेण पूजिताभूत्। बौद्धा अपि स्वाभीष्टसिद्धये एनां देवीं वाचम् अर्चयन्ति। बौद्धतान्त्रिकयुगे देवीयं बौद्धतन्त्रैः स्वकीयदेवीरूपेण प्रतिपादिता। तदाप्रभृत्यसौ तुल्यरूपेण बौद्धैरार्य्यैश्च पूज्यते। प्रयोजनानुरोधेन अस्या रूपमपि बौद्धतन्त्रे परिवर्त्तितमासीत्। ते तु न केवलम् एकवक्त्रां द्विभुजां सरस्वतीमर्चयन्ति, अपि तु त्रिमुखां षड्भुजामपि। बोधिसत्त्वानाम् अवलोकितेश्वर एव श्रेष्ठः। ततः परमेव मञ्जुश्रीबोधिसत्त्वस्य स्थानम्। असौ मञ्जुनाथो मञ्जुघोषोपनाम्नापि परिचीयते। विद्याधिपतित्वात् वागीश्वर इत्यस्य नामान्तरम्। ललितविस्तर-दिव्यावदानप्रभृतीनां ग्रन्थानां प्रथमे भागे मञ्जुघोषस्य नाम न दृश्यते। सुखावतीव्यूहे तु अस्य नामास्ति। लङ्कावतारसूत्रे असौ हि मुख्यवक्ता। खृष्टीय २७० अब्दे रत्नकारण्डव्यूहः अनूदितः। तत्रासौ अतिरञ्जितः सन् वर्त्तते। सद्धर्मपुण्डरीके तु अयं मुख्यबोधिसत्त्वः मैत्रेयः। स शास्तृरूपेण निर्दिष्टः। चिरयौवनोऽसौ मञ्जुश्रीः। असौ भारते, नेपाले, तिव्वते, चीने, जापाने, यवद्वीपेऽपि पूज्यते। एष ज्ञानबुद्धिविद्यास्मृत्यादीनामधिष्ठातृदेवता। अयन्तु

शक्तिविरहितः। अपि तु एकस्मिन् मञ्जुश्रीचरिते एतदासाद्यते यत्, लक्ष्मीः सरस्वती वा, द्वे अपि वा अस्य शक्ती। पुस्तकमेतत् मञ्जुश्रीविक्रीड़ितं खृष्टीय ३१३ अब्दे चैनभाषयानूदितम्।

सरस्वती हि वागीश्वरी। मञ्जुश्रीः पुनः वागीश्वरः। बौद्ध-तान्त्रिका वागीश्वरशक्त्या वागीश्वर्य्या भक्ताः सन्तः तामपि पूजयितु-मारेभिरे। आर्य्यतान्त्रिका अपि तस्याः पूजां प्रवर्त्तयामासुः किल। देवीयं चतुर्भुजा त्रिनेत्रेति पञ्चरात्रागमः। हस्तेषु अस्याः दण्डः पुस्तकं माला कमण्डलुश्च वर्त्तन्ते, कालक्रमेणासौ बहुधा परिचिता आसीत् धेनु-वागीश्वरी सौभाग्य-वागीश्वरीत्यादिरूपेण। आसां त्रिनयनं शिरसि जटाजूटश्च। धेनु-वागीश्वरी शब्दब्रह्मेति आर्य्य-तान्त्रिकाणां मतम्। बौद्धानां साधनमालायां कतिविधानां सरस्वतीनां ध्यानानि विद्यन्ते। ताः पुनः—

(१) महासरस्वती (२) वज्रवीणासरस्वती (३) वज्रसारदा (४) आर्य्यासरस्वती।

महासरस्वती चन्द्रमण्डलस्थिता। सा द्वादशवर्षीया नानालङ्कार-भूषिता स्मेरमुखी करुणामयी च। अस्या वक्षसि मुक्ताहारः, दक्षिणहस्ते वरमुद्रा, वामे च सदण्डश्वेतपद्मम्। सा सर्वशुक्ला। अस्याः वर्णः शरदः पूर्णचन्द्रांशुरिव शुभ्रः। अस्या आननं पद्मं वसनञ्च शुभ्रम्। तया धृतं गन्धपुष्पमपि शुभ्रम्। महासरस्वत्याः पुरतः चतस्रः स्वनायिकाः—पुरतः प्रज्ञा पश्चात् मतिः दक्षिणे मेधा वामे स्मृतिः।

एवञ्च सरस्वत्याः ध्यानम्—सा चन्द्रमण्डलमध्यवर्त्तिनी पुण्ड-रीकासना; पद्ममिदं ह्रींकारव्याप्तम्। एवं चिन्तयित्वा पश्चात् तस्मिन्नेव पद्मे—

"तेन च भगवतीं महासरस्वतीमनुविचिन्तयेत् शरदिन्दुकराकारां सितकमलोपरि चन्द्रमण्डलस्थां दक्षिणकरेण वरदां वामेन सनाल-

सितसरोजधरां स्मेरमुखीमतिकरुणामयीं श्वेत-चन्दनकुसुमवसनधरां मुक्ताहारोपशोभितहृदयां नानारत्नालङ्कारवतीं द्वादशवर्षाकृतिं मुदितकुचमुकुलदन्तुरोरस्तटीं स्फुरदनन्तगभस्तिव्यूहावभासितलोकत्रयाम्। ततस्तत्पुरतो भगवतीं प्रज्ञां दक्षिणतो मेधां पश्चिमतो मतिं वामतः स्मृतिं एताः स्वनायिकासमानवर्णादिकाः सम्मुखमवस्थिताश्चिन्तनीयाः।" साधनमाला-संख्या १६२ पृ० ३२८

देवीमाहात्म्ये महासरस्वती—आर्य्यतान्त्रिका अपि आद्याशक्तिं दुर्गां महासरस्वतीरूपेण कल्पयन्ति। तेषां महासरस्वती तु अष्टभुजा। दक्षिणे शङ्खं हलं शूलं घण्टां वामेन तु मुषलं चक्रं धनुः सायकं च बिभ्रती राजतेऽसौ। देवी पद्मोपरि पद्मासनोपविष्टा। मार्कण्डेयपुराणान्तर्गतदेवीमाहात्म्ये देव्याः प्रथमचरितस्य महाकाली देवता, द्वितीयचरितस्य महालक्ष्मीः, उत्तरचरितस्य तु रुद्रः ऋषिः महासरस्वती देवता, उष्णिक् छन्दः, भीमा शक्तिः भ्रामरी बीजं, वायुस्तत्त्वम्। अत्र महासरस्वत्या ध्यानमप्यस्ति—

"घण्ठाशूलहलानि शङ्खमुषले चक्रं धनुः सायकं
हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम्।
गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महा-
पूर्वां मत्रसरस्वतीमनुभजे शुम्भादिदैत्यार्दिनीम्॥"

अनेन मन्त्रेण पञ्चोपचारैः देवीं पूजयित्वा नित्यं चण्डीस्तवं ति नियमः। अत्र दुर्गा एव महासरस्वतीति प्रतिभाति। अस्याः चण्डीरूपत्वं दुर्गारूपत्वञ्च महाभारते अपि दृश्यते—

"त्वं महाविद्या विद्यानां महानिद्रा च देहिनाम्।
स्कन्दमातर्भगवति दुर्गे कान्तारवासिनि॥ ८०३

स्वाहाकारः स्वधा चैव कला काष्ठा सरस्वती।
सावित्री वेदमाता च तथा वेदान्त उच्यते"॥ ८०४

भद्रकाल्याः सरस्वत्याश्च अभिन्नरूपत्वं पूजापद्धतावपि प्रतिपाद्यते—
"ॐ भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः।" इति

वज्रवीणासरस्वती—वज्रवीणासरस्वती द्विभुजा शुभ्रवर्णा। अन्यत्र देवी महासरस्वत्या तुल्या। अस्याः हस्तद्वये वीणा। साधनमालायाम् एवमस्याः रूपं दृश्यते—

"सप्तमस्य द्वितीयस्थमष्टमस्य चतुर्थकम्।
प्रथमस्य चतुर्थेन भूषितं तत् सबिन्दुकम्॥
तदुद्भवां सरस्वतीं वीणावादनतत्पराम्।
चन्द्रावदातनिर्भासां सर्वालङ्कारभूषिताम्॥"

—नं १६५ पृ० ३३५

जपमन्त्रः—"ॐ पिचु पिचु प्रज्ञावर्द्धनि ज्वल ज्वल मेधावर्द्धनि धिरि धिरि बुद्धिवर्द्धनि स्वाहा।"

वज्रशारदा—वज्रशारदाया दक्षिणे हस्ते पद्मं सव्ये तु पुस्तकम्। असौ सर्वालङ्कारभूषिता त्रिनेत्रा शुक्लवर्णा च। असौ पद्मोपरि संस्थिता अर्द्धचन्द्रकिरीटिनी। अस्या ध्यानं यथा—

"शुभ्राम्बुजोपरि लसत्तनुमादधानां
नेत्रत्रयं मुकुटसंस्थितमर्द्धचन्द्रम्।
वामेन पुस्तकधराम्बुजमन्यहस्ते
पश्चात् स्वदेहसमतामनयत् प्रयत्नात्॥"

साधनमाला नं १६६ पृ० ३३७

वज्रसरस्वती वा आर्य्यासरस्वती—वज्रसरस्वती साधनमालायां एवं वर्ण्यते—

"सितवर्णां मनोरमां दक्षिणेन रक्ताम्बुजधारिणीं वामेन प्रज्ञापारमितापुस्तकधारिणीम्।"

मनोज्ञाया मूर्त्तेरस्याः सव्येतरहस्ते लोहितपद्मं वामे प्रज्ञापार-

सितसरोजधरां स्मेरमुखीमतिकरुणामयीं श्वेत-चन्दनकुसुमवसनधरां मुक्ताहारोपशोभितहृदयां नानारत्नालङ्कारवतीं द्वादशवर्षाकृतिं मुदित-कुचमुकुलदन्तुरोरस्तटीं स्फुरदनन्तगभस्तिव्यूहावभासितलोकत्रयाम्। ततस्तत्पुरतो भगवतीं प्रज्ञां दक्षिणतो मेधां पश्चिमतो मतिं वामतः स्मृतिं एताः स्वनायिकासमानवर्णादिकाः सम्मुखमवस्थिताश्चिन्त-नीयाः।" साधनमाला-संख्या १६२ पृ० ३२८

देवीमाहात्म्ये महासरस्वती—शाक्ततान्त्रिका अपि आद्याशक्तिं दुर्गां महासरस्वतीरूपेण कल्पयन्ति। तेषां महासरस्वती तु अष्टभुजा। दक्षिणे शङ्खं हलं शूलं घण्टां वामेन तु मुषलं चक्रं धनुः सायकं च बिभ्रती राजतेऽसौ। देवी पद्मोपरि पद्मासनोपविष्टा। मार्कण्डेय-पुराणान्तर्गतदेवीमाहात्म्ये देव्याः प्रथमचरितस्य महाकाली देवता, द्वितीयचरितस्य महालक्ष्मीः, उत्तरचरितस्य तु रुद्रः ऋषिः महा-सरस्वती देवता, उष्णिक् छन्दः, भीमा शक्तिः भ्रामरी वीजं, वायु-स्तत्त्वम्। अत्र महासरस्वत्या ध्यानमप्यस्ति—

"घण्टाशूलहलानि शङ्खमुषले चक्रं धनुः सायकं
हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम्।
गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महा-
पूर्वां मत्रसरस्वतीमनुभजे शुम्भादिदैत्यार्दिनीम्॥"

अनेन मन्त्रेण पञ्चोपचारैः देवीं पूजयित्वा नित्यं चण्डीस्तवं पठेदिति नियमः। अत्र दुर्गा एव महासरस्वतीति प्रतिभाति। अस्याः चण्डीरूपत्वं दुर्गारूपत्वञ्च महाभारते अपि दृश्यते—

'त्वं महाविद्या विद्यानां महानिद्रा च देहिनाम्।
स्कन्दमातर्भगवति दुर्गे कान्तारवासिनि॥ ८०३

स्वाहाकारः स्वधा चैव कला काष्ठा सरस्वती।
सावित्री वेदमाता च तथा वेदान्त उच्यते"॥ ८०४

भद्रकाल्याः सरस्वत्याश्च अभिन्नरूपत्वं पूजापद्धतावपि प्रतिपाद्यते—
"ॐ भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः।" इति

वज्रवीणासरस्वती—वज्रवीणासरस्वती द्विभुजा शुभ्रवर्णा। अन्यत्र देवी महासरस्वत्या तुल्या। अस्याः हस्तद्वये वीणा। साधनमालायाम् एवमस्याः रूपं दृश्यते—

> "सप्तमस्य द्वितीयस्थमष्टमस्य चतुर्थकम्।
> प्रथमस्य चतुर्थेन भूषितं तत् सविन्दुकम्॥
> तदुद्भवां सरस्वतीं वीणावादनतत्पराम्।
> चन्द्रावदातनिर्भासां सर्वालङ्कारभूषिताम्॥"

—नं १६५ पृ० ३३५

जपमन्त्रः—"ॐ पिचु पिचु प्रज्ञावर्द्धनि ज्वल ज्वल मेधावर्द्धनि धिरि धिरि बुद्धिवर्द्धनि स्वाहा।"

वज्रशारदा—वज्रशारदाया दक्षिणे हस्ते पद्मं सव्ये तु पुस्तकम्। असौ सर्वालङ्कारभूषिता त्रिनेत्रा शुक्लवर्णा च। असौ पद्मोपरि संस्थिता अर्द्धचन्द्रकिरीटिनी। अस्या ध्यानं यथा—

> "शुभ्राम्बुजोपरि लसत्तनुमादधानां
> नेत्रत्रयं मुकुटसंस्थितमर्द्धचन्द्रम्।
> वामेन पुस्तकधराम्बुजमन्यहस्ते
> पश्चात् स्वदेहसमतामनयत् प्रयत्नात्॥"

साधनमाला नं १६६ पृ० ३३७

वज्रसरस्वती वा आर्य्यासरस्वती—वज्रसरस्वती साधनमालायां एवं वर्ण्यते—

"सितवर्णां मनोरमां दक्षिणेन रक्ताम्बुजधारिणीं वामेन प्रज्ञापारमितापुस्तकधारिणीम्।"

मनोज्ञाया मूर्त्तेरस्याः सव्येतरहस्ते लोहितपद्मं वामे प्रज्ञापार-

मितापुस्तकम्। इयं षोड़शी श्वेताम्बरा सितवर्णा च। चन्द्रवीज-निष्पन्नेयम् आर्य्यसरस्वतीरूपेण च गीयते। अस्या मन्त्रो यथा—

"ॐ पिचु पिचु प्रज्ञावर्द्धनि ज्वल ज्वल मेधावर्द्धनि धिरि धिरि बुद्धिवर्द्धनि स्वाहा।"

आर्य्यवज्रसरस्वती—असौ त्रिनयना रक्तद्युतिसमन्विता सद्भूषणालङ्कृता प्रत्यालीढ़पदेन संस्थिता षड्भुजा च। असौ दक्षिणेन पाणिना पद्मम् असिं कर्त्रीञ्च, वामेन पुनः ब्रह्मकपालं रत्नं चक्रं च धारयन्ती राजते। मुखस्य दक्षिणं पार्श्वं नीलवर्णं वामपार्श्वन्तु श्वेतम्। अस्याः ध्यानम्—

"तस्माद् रक्तमहाद्युतिं भगवतीं सद्भूषणालङ्कृतां
प्रत्यालीढ़पदस्थितां त्रिवदनां षड्बाहुभिर्भूषिताम्।
सव्ये नीलमुखां बिभर्त्ति च करे पद्मासिकर्त्रीञ्च वै
वामे शुक्लमुखां च पात्रसहितां सद्रत्नचक्रं तथा॥"

श्यायमारितन्त्रे तु वज्रसरस्वत्या ध्यानमेवं—

"त्रिमुखां षड्भुजां रक्तां सरस्वतीं भावयेद् व्रती।
पद्महस्तधरां सौम्यां प्रज्ञावर्द्धनहेतवे॥"

---

# शिवाजि-चरितम्

(पूर्वतोऽनुवृत्तम्)

[ निबन्धकः—श्रीकालिदासविद्याविनोदः ]

अथ यवननृपाणां दक्षहस्तस्वरूपो
विषमसमरजेता राजपुत्राख्यसैन्यैः।
विविधविजयवार्त्तां घोषयन् सिंहनादै-
रभजत जयसिंहो दक्षिणं भारतं तत्॥ १

विदित-सकल-वार्त्तो वीरवर्य्यः शिवाजिः
समरविजयिसैन्यैरभ्युपेतः ससज्जः ।
अगणित-शरजालैस्तैर्वलेर्योद्धकामो
दृढ़विरचितकार्ये रायदुर्गेऽवतस्थे ॥ २

विपुलयवनसैन्यैर्विप्लुतं हिन्दुधर्मं
प्रतिदिनमथ विप्रान् गाश्च पश्यन् विपन्नान् ।
नरपति जयसिंहो मर्म्मविद्धः स्वदूत-
मनयदसमकीर्त्तेः शैलदुर्गं शिवाजेः ॥ ३

भुवनविदितकीर्त्ते ! हिन्दुधर्मैकरक्षिन्
हत-निपतित-धर्म्मान् राजपुत्रान् स्ववंश्यान् ।
यवन-कलित-देहान् मातृशान् भाग्यहीनान्
विमलय करजालैर्भारताकाश-सूर्य्य ! ॥ ४

त्वमसि यवनजेता राजपुत्रप्रधानम्
अहमपि तव वंश्यः कर्म्मणा म्लेच्छदासः ।
मम वचनममान्यं यद्यहो सर्वथा ते
तव पितृसम वृद्धः साहसादेष वच्मि ॥ ५

यदि च कपटसन्धिः क्षत्रियाणां निषिद्ध-
स्तदिह सरलसन्धेः प्रस्तुतं पत्रमेतत् ।
सुतसम कुरु सन्धिं सम्यगारङ्गजेवे-
र्न खलु तव निवृत्तं युद्धकण्डूयनं स्यात् ॥ ६

त्वयि कृतवति सन्धिं नूनमारङ्गजेवे
यदवधि बलहीनस्तावदेवास्य सन्धिः ।
प्रचुरबलसमेतः सन्धिमद्यैव भङ्क्ता
तत इह भविता ते हिन्दुसाम्राज्यमेव ॥ ७

त्वयि मम सुतभावो रामसिंहे यथास्ते
नसुलभगुणयोगात् स्नेहबन्धोऽधिको वा ।

अहमिह तव वश्यः स्नेहरज्ज्वा शिवाजे
मयि तव पितृभावश्चेदहं स्यां कृतार्थः ॥ ८
अकपट-जयसिंहस्यैतदालोच्य पत्रं
स्वयमयमुपतस्थे निर्विशङ्कः शिवाजिः ।
सकलसमरनीतेः पात्रभूतस्य तस्य
शिविरमुपगतः सन्नाह धर्मैकनाशम् ॥ ९
समधिककृतयत्नो राजपुत्राख्य-सेना-
पतिरतितरवृद्धो भीष्मवद् युद्धवीरः ।
कृतिवर-जयसिंहः पुत्रवत् तं शिवाजि-
मकुरुत निजमङ्के वेशयन् शान्तभावम् ॥ १०
त्वमसि हि मम पुत्रो धर्मतस्ते पिताहं
क्वचिदपि विषये त्वं रामसिंहात् समुच्चः ।
त्वयि जितवति विश्वं विश्वजित्-पुत्र-तातो
भवति हि जयसिंहो धर्मरक्षाव्रतात् ते ॥ ११
तव मुखमिदमद्य प्रेमवीरत्वयुक्तं
भवतु विजयलक्ष्मी-प्रोल्लसत्-कीर्त्तिकान्तम् ।
मम हृदि गगने तत् पूर्णचन्द्रस्वरूपं
विलसतु परिलुम्पद् हिन्दुचित्तान्धकारम् ॥ १२
त्वमिह हि चिरकालं भारते हिन्दुराज्यं
सुरमुनिजनसेवा-तत्परं शान्तियुक्तम् ।
यवनगणविनाशात् धर्मशीलं समृद्धं
सदयहृदयवृत्ते ! स्थापयन् वर्द्धयस्व ॥ १३
तव पितृसमवृद्धाः सर्वदाशासतेऽद्य
बहुशत-शतवर्षान् जीवतात् त्वं शिवाजे ।
अपि सकलजनानां नन्दयन् चित्तवृत्तिं
रघुपतिरिव राज्यं सर्वथा संविधेहि ॥ १४

स्थलपथ-जयमात्रान्नैव साम्राज्यलाभो
जलपथमपि जेतुं भूरि-पोतान् कुरुष्व ।
इति मतमुपदिष्टस्तेन राज्ञा शिवाजि-
रकुरुत रणपोतान् भूरिसंख्यान् ससैन्यान् ॥ १५

रसद-सकलभोज्यैर्लेह्यपेयैः समेतान्
अनुदिनमपि भुक्तैरक्षयं प्रापितैश्च ।
गृहवसतिमुपेतैर्लभ्यते यः पदार्थः
सकलसमरपोतान् तत्पदार्थैश्च युक्तान् ॥ १६

बहुशत-शतसंख्यं दिव्यमाग्नेयमस्त्रं
बहुशत-शतसंख्या आयसीर्य्याः शतघ्नीः ।
अलभत जलदस्यून् 'पर्त्तुगिज्' वीरवर्गान्
विषमसमरभूमौ संपराजित्य राजा ॥ १७

अपि स सकलमस्त्रं यत् पुनर्भारतीयं
बहुविधमपरास्त्रं बाहुवीर्य्येण लब्ध्वा ।
शतमथ रणपोतान् षष्टिसंख्यांश्च वीरै-
र्जलपथमभिजेतुं प्रेषयामास वीरः ॥ १८

कति कति रणपोताः सागरे भासमानाः
बहुतर-नरसेव्यैः सत्पदार्थैः समेताः ।
विविध-विपणियुक्ता मुक्तवातायनास्ते
स्थलभुवि बहुदुर्ग-भ्रान्तिमापादयन्ति ॥ १९

अमरसमशरीरैर्हिन्दुसैन्यैः समन्तात्
कृतविविधसुरार्चाः शेषनिर्माल्यपुष्पैः ।
चित-बहुतुलसीकैर्विल्वपत्रैः समाल्यै-
र्बहुविधशिवलिङ्गैः काशिकान्तिं वहन्ति ॥ २०

हर हर शिव वम् वम् रक्ष मातर्भवानि
मुरहर नरकारे हिन्दुसाम्राज्यलक्ष्मीम् ।

वितर वितर विष्णो तादृगुच्चारयन्तो
भ्रममिव जनयन्ते काशिवृन्दावनानाम् ॥ २१
बहुतर-रणपोताः सागरद्वीपतुल्या
नव-वसतिमुपेत्य भ्राजमानैश्च लोकैः।
बहुविधमणिमुक्ता आददानांश्च सैन्यान्
वणिज इव विपण्यः सर्वदा धारयन्ति ॥ २२
शिववसतिमुपेता यक्षविद्याधराद्या
हरिहरगुणगानैर्याहशं तोषयन्ति ।
सुरनरपशुवर्गानीश्वरप्रेममुग्धान्
शिवनरपतियोधास्तद्वदानन्दयन्ति ॥ २३
कमलदलजलाभं जीवनं सर्वजन्तून्
परिहरति निमेषाद् दृश्यतेऽद्यापि सर्वैः ।
न खलु गुणशरीरं कल्पकल्पान्तरेऽपि
व्रजति हि परिनाशं कीर्त्तिमेवार्ज्जयामः ॥ २४
समरविजयकीर्त्त्या भीष्मकर्णार्जुनाद्याः
बहुचिरमृतपूर्वाः सन्ति तेऽद्यापि लोके।
चिरतरमितिहासा नाम यस्याश्रयन्ते
अमर इव स जीवन् जीवयेत् सर्वलोकान् ॥ २५

इत्थं निर्माय सैन्यान् स्थलजलसमरे सर्वदोत्साहपूर्वान्
निर्भीकान्-धर्मरक्षाव्रतधृतमनसो देववीर्यप्रभावान् ।
संस्कुर्वन् सर्वदुर्गाण्यगणितपृतनाशस्त्रजालैरधृष्या-
ण्यात्मप्रीतः शिवाजिः समभजत सुरैर्हिन्दुसाम्राज्यलक्ष्मीम् ॥२६

# वेदान्ते सांख्याधिक्षेपपरतानिरासः

[ निबन्धकः—श्रीशरच्चन्द्रभादुरी एम् ए वि एल् ]

ईक्षामात्राद् वदति निगमो यत्कृपां सृष्टिरूपां
ध्यायं ध्यायं निखिलजगतां कारणं तं पराख्यम् ।
मायाधीशं मुनिजनमनोहारिणं ज्ञानगम्यं
ब्रह्मव्याख्या मननबहुला तन्यते भीतभीतैः ॥ १
इन्द्रादि-वन्दितं वन्दे भास्करस्यापि भास्करम् ।
मूढोऽपि यत्कृपालेशाददभ्रं पण्डितायते ॥ २
वेदव्यासं प्रणम्यादौ वेदविद्याप्रकाशकम् ।
प्रणम्य शङ्कराचार्यं महेशमूर्त्तिरूपिणम् ॥
संविमृश्य च तद्वाक्यं यथाज्ञानं यथाश्रुतम् ।
व्याख्याकृतां तथाऽन्येषां व्याख्येयं सुभिया कृता ॥ ३

महाभारत-श्रीमद्भागवतादिषु यदुक्तं कापिलमतमिति तत् तत्त्वानां क्रमविकाशादिविषयेषु नव्यसाङ्ख्यमतानुरूपमपि सेश्वरम् ईश्वराधीन-प्रकृतिवाचकञ्च । श्रीमच्छङ्कराचार्य्यपरमगुरुणा सयत्नं व्याख्यातत्वात् साङ्ख्यकारिका न भवितुमर्हति निरीश्वरा वा स्वतन्त्रप्रकृतिप्रतिपादिका वा । साङ्ख्यमतावलम्बी प्रकृतेरीश्वर-पारतन्त्र्यं यदि स्वीकुर्य्यात्, तदा भवति निर्दोषं साङ्ख्यमतमिति स्पष्टमुक्तं साङ्ख्यमतखण्डनावसरे भगवता शङ्कराचार्य्येण * । सूचितं भगवता साङ्ख्यसूत्रकारेण "प्रकृति-निबन्धनाच्चेन ; तस्या अपि पारतन्त्र्यम्" ॥ १।१८

---

* "अथ पुनः साक्षिनिमित्तमीक्षितृत्वं प्रधानस्य कल्प्येत, यथाऽग्नि-निमित्तमयः-पिण्डादेर्दग्धृत्वम् । तथा सति यन्निमित्तमीक्षितृत्वं प्रधानस्य तदेव सर्वज्ञं मुख्यं ब्रह्म जगतः कारणमिति युक्तम्"—इति ईक्षतिसूत्रभाष्ये

अर्वाचीन-भाष्यकार-टीकाकारैः साङ्ख्यसूत्र-साङ्ख्यकारिके यन्निरीश्वरवादपक्षे स्वतन्त्र-प्रकृतिवादपक्षे जीवात्मबहुत्ववादपक्षे च व्याख्याते तद् भ्रमात्मकमिति साङ्ख्यसूत्रादि-व्याख्यानावसरे प्रदर्शयितुं यतिष्ये।

परब्रह्मजिज्ञासूनां महाभाग्यवतां सम्बोधाय विभिन्नोपनिषद्वाक्य-समन्वयादि वेदान्तसूत्रैः सम्पादितं ज्ञानमूर्त्तिना भगवता वेदव्यासेन। श्रीमच्छङ्कराचार्य्य-निम्बार्क-रामानुज-मध्वाद्यैर्महात्मभिर्विभिन्नं व्याख्यातेष्वपि सूत्रेषु बहूनि सूत्राणि साङ्ख्यमत-निरसनपक्षे एकवाक्यतया व्याख्यातानि। ईक्षत्यधिकरणगतानि रचनानुपपत्त्यधिकरणगतानि च तेषु प्रधानानि। एतानि सूत्राणि यथा साङ्ख्यमतखण्डनपक्षे व्याख्यातानि श्रीमच्छङ्कराचार्य्यादिभिस्तथाऽस्मभ्यं न रोचते। अत ईक्षत्यधिकरणादि व्याख्यातुमस्माकमयमुद्यमः साधुभिः सदसद्विचार-परायणैः सम्यक् क्षन्तव्यः, विचार्य्याणि च सूत्राणि प्रोज्झिताधीत-भाष्यटीकादिजनितसंस्कारैरिति सप्रश्रयं प्रार्थये।

ईक्षत्यधिकरणसङ्गमनाय तदुपक्रमप्रदर्शनाय च प्रथमं चतुःसूत्री-व्याख्यानं विधीयते।

१।१।१ "अथाऽतो ब्रह्मजिज्ञासा"।

ब्रह्मजिज्ञासुरेव एतच्छास्त्राधिकारी नाऽन्य इत्यायात्यस्मात् सूत्रात्। येन केन प्रकारेण सञ्जातायां ब्रह्मजिज्ञासायां भवत्यधिकारी ब्रह्मजिज्ञासुरिति बोद्धव्यम्।

किं-लक्षणं तद् ब्रह्म इत्याह

१।१।२ "जन्माद्यस्य यतः"।

"अस्य" जगतो "जन्मादि" सृष्टिस्थितिलयाः "यतो" यस्मात् कारणाद् भवति तद् ब्रह्म।

कथं गम्यते सृष्टिस्थितिलयकारणत्वं ब्रह्मण इति। प्रमाणं त्रिविधं प्रत्यक्षानुमानशब्दाभिधम्। ब्रह्म न प्रत्यक्षसिद्धम्। "न तत्र

चक्षुर्गच्छती"त्यादिभ्यः श्रुतिभ्यः। नाप्यनुमानसिद्धम्। "यन्मनसा न मनुत" इत्यादिभ्यः। अतः, शास्त्रप्रमाणकमेव सृष्टिस्थितिलय-कारणत्वं ब्रह्मण इति प्रदर्शयन्नाह

१।१।३ "शास्त्रयोनित्वात्"।

"ऋग्वेदादिशास्त्रं योनिः कारणं प्रमाणमस्य। शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः" इति श्रीमच्छङ्कराचार्य्यपादाः। शास्त्रञ्च "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति। तद् विजिज्ञासस्व। तद् ब्रह्मेत्यादि। "अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते, अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्ती"ति। एवं "प्राणाद्ध्येव खल्विमानि भूतानी"त्यादि। एवं "मनसो ह्येव खल्विमानि भूतानी"-त्यादि। एवं "विज्ञानाद्ध्येव खल्विमानि भूतानी"त्यादि भृगुवल्ल्यामेव। "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यान्ती"त्यादिषु छान्दोग्यादिषु श्रुतिषु अन्नप्राणमनोविज्ञानाकाशादिभ्योऽपि "जन्माद्यस्य" श्रूयते। अतो नासन्दिग्धं ब्रह्मण एव जगत्कर्तृत्वादिकमिति शङ्कां परिहरन्नाह

१।१।४ "तत्तु समन्वयात्"।

एतेषां श्रुतिवाक्यानां "समन्वयात्" "तत्" "तु" ब्रह्मैवास्य जगतः सृष्टिस्थितिलयकारणमित्यवगम्यते। वक्ष्यति च "आकाशस्तल्लिङ्गात्" श्रुतिसमन्वयात् कथमवगम्यते ब्रह्मण एव सृष्टिस्थितिलयकारणत्वमित्याह ईक्षत्यधिकरणम्।

१।१।५ "ईक्षतेर्नाशब्दम्"।

जगदुत्पत्त्यादि यथा ब्रह्मणस्तथा अन्नादेरपि आकाशादपि पूर्वोद्धृतेभ्यः श्रुतिवाक्येभ्यः श्रूयत इति सत्यम्। परन्तु अचेतनस्य अन्नाकाशादिकस्य "न" जगत्कर्त्तृत्वादिकम्। कुत इत्याह एतद् "अशब्दं" न श्रुत्यभिमतम्। कस्मादित्याह "ईक्षतेः" जगत्कारणस्य ईक्षितृत्व-

श्रुतेः छान्दोग्यादिषु, अचेतनानामन्नादीनां कस्यापि न भवितुमर्हति सृष्ट्यादिकारणत्वम्। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद् ब्रह्म" ततश्च दृश्यते "अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते, अन्नेन जातानि जीवन्ति, अन्नं प्रयन्त्यभिसंविशन्ती"ति। एवं "प्राणाद्ध्येव खल्विमानि भूतानि जायन्त" इत्यादि एवं "मनसो ह्येव खल्विमानि भूतानि जायन्ते" इत्यादि। एवं "विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्त" इत्यादिषु श्रुतिषु अन्नप्राणमनोविज्ञानादिभ्योऽपि "जन्माद्यस्य" सूत्रत्वाद् अचेतनानां तेषां व्यावृत्त्यर्थं सूत्रितम् "ईक्षतेर्नाशब्द"मिति।

"ईक्षतेर्नाशब्द"मिति सूत्रे तत्पूर्ववर्त्तिनि कस्मिंश्चिदपि सूत्रे "यतो वा इमानि भूतानि जायन्त" इत्यादिश्रुतयः तैत्तिरीयाद्यन्तवर्त्तिषु यत्प्रकरणेषु दृश्यन्ते तत्रापि वा नास्त्युल्लेखः इङ्गितं वा। अत एतत्सूत्रस्य साङ्ख्योक्तप्रधानव्यावृत्तिवाचकं दृश्यते यद् व्याख्यानं तन्न समीचीनमिति साधुभिर्बोद्धव्यम्।

"तत्तेज ऐक्षत ; ता आप ऐक्षन्त" ( छान्दोग्य ६।२।४ ) इत्यादिषु दृश्यते अचेतनानामप्तेजआदीनामीक्षितृत्वम्। अतो नायुक्तमचेतनानां सम्बन्धिनी ईक्षितृत्वोक्तिः गौणी इति शङ्कामपाकरोति—

( क्रमशः )

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| July, 1929. | १८५१ शकीये आषाढ़े १२श-वर्षस्य ३य-संख्या | Vol. XII. No 3. |
|---|---|---|


## ब्रह्मकृपा हि केवलम्


[ निबन्धकः—श्रीपुलिनविहारी वेदान्ततीर्थः ]


ब्रह्मकृपा हि केवलम्।
शमन-दमन-सुखसम्बलम् ॥ १

श्रवण-मनन-निदिध्यासनशक्तम्
श्रोत्रिय-सद्गुरुसेवन-भक्तम्
वृणुते ब्रह्म वृणुते शर्म्म
अभयममलमतिमङ्गलम् ॥ २

पूर्णं भज पुनः पुनरपि मनसि
शुद्धं जप सदा सत्यं सदसि
कोऽहं कोति नेति नेति
त्यज तु तामसमघमर्गलम् ॥ ३

यदि खलु विलसति मतिरुपनिषदि
गतिरपि सततं सुजन परिषदि

मृत्युं जयति तद् यो वेत्ति
भजति गगननिभ-निष्कलम् ॥ ४
रहसि विचारय नित्यानित्ये
शम-दम-सम्पत्संभृतचित्ते
चिन्तय वेदं परिहर खेदम्
अनृतमकृतमथ दुर्बलम् ॥ ५
सुखयति चित्तं विषयविलासः
क्षणमवशेषे विफल-विनाशः
मोहनिमग्नम् कुरु चिद्लग्नम्
मानसमनिशमतिचञ्चलम् ॥ ६
सलिलं तत्त्वं सरिति च कूपे
अवितथमित्थं न नामरूपे
ब्रह्माद्वैतम् बहुधा व्याप्तम्
कनकमिव कटककुण्डलम् ॥ ७
घटमठकुड्य-प्रभृति-विकाराः
वाचारम्भणमात्रमसाराः
तेषु सदात्मिका तत्त्वं मृत्तिका
अनुगतमविकृतनिर्मलम् ॥ ८
एवं सच्चित्-शक्तेः कार्य्यम्
हित्वा कारणमिहावधार्य्यम्
ब्रह्म विभाति बहु विदधाति
श्रुतिरिति निगदति पुष्कलम् ॥ ६
आम्नायादिभिरनवच्छिन्नम्
दिगादिदेशैरनवच्छिन्नम्
अद्वयमेकं विश्वमनेकम्
विशति च विहरति निश्चलम् ॥ १०

जागरणेऽथ च निद्राशयने
सम्पदि विपदि स्वकार्य्यगमने
स्मर रे धीर !　　　　साधक-वीर !
ॐ ॐ ॐ ॐ इत्यलम् ॥ ११

---

# सार्वभौमो धर्मः

[ निबन्धकः—श्री............

"यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह।" "यतो वा इमानि भूतानि जायन्ते ··यत् प्रयन्त्यभिसंविशन्ति ॥"

इति श्रुतिवाचा विवेचितं, मतिगतिमतीत्य वर्त्तमानं, सूर्य्य-शशाङ्क-पावकैरप्यकल्पनीयं, चिरन्तनानन्दसन्दोहावेदकं, भूयसा प्रयत्य योगिभिः कथञ्चित् सहस्रदलाकारे हृदयकमले निर्वीजसमाधि-संयोग-विगलित-कालुष्य-धवले प्रत्यक्षीकृतं, प्रतिक्षणमनुष्ठीयमानैः कार्य्यकलापैर्विलोक्यमानैश्च कार्य्यजातैरनुमेयसत्ताकं, चेतनाचेतननिर्विशेषं पदार्थमात्रे विनिहितात्मरूपमेकमपि शतधा, सहस्रधा, लक्षधा च तड़ागे मन्दानिलाञ्चलचलद्वीचिचञ्चलजलभागे प्रतिफलितैन्द्वीकलेव बह्वात्मना प्रतिभासमानं विजयते किमपि परमं धाम। अनादिप्रवाहपरम्परया चिराचङ्क्रम्यमाणे सर्गचक्रे निसर्गत एव प्राणिनां हृदयेषु दर्शं दर्शं विविधविधभयातङ्काशङ्कासङ्कुलं प्रतिकूलवेदनीयं पदार्थमुपगच्छति करुणाश्मटांकारितः स्वसमर्पणात्मको यस्य ज्योति-स्फुलिङ्गः; यदीयानुचिन्तन-लवेनापि सर्वथा क्षीणक्षीणाकारस्य बहुविधाधिपीडितात्मनो जनस्यापि हृदि जागर्त्ति काचिदाशालोकप्रसारिणी मोहतमोऽपहारिणी ज्योत्स्ना; यतश्च संत्रस्यद्भिर्लोकलोचनैर्मन्दाक्षमीलितैरिव परपीड़नाद्विरज्यते, तदखिल-

प्रेक्षावज्जिज्ञासागोचरं वस्तुतत्त्वं परमधामनाम्ना व्यपदिष्टमनुसन्धातुं बहुपरिकराः समच प्रयतन्ते, प्रायतन्त, भाविनि च कति प्रयतिष्यन्ते। परमद्य यावत् कृताया अद्यत्वे च क्रियमाणाया गवेषणाया विवरणं यदीयं कार्यशक्त्युत्थापितं सत्त्वं विहाय प्रमाणान्तरमयोगिनां प्रत्यक्षा-नुभवावेदकमनुपस्थापयद् गवेषकाणामपूर्णकामतां ससाध्यमुद्घोष-यति। वाणी यदीयं स्वरूपं वर्णयितुमुत्कापि मनसो निदेशं प्रतीक्ष-माणा, भर्त्तुरनुज्ञामनुपालयन्ती कुलकामिनीव चिरायते; चिरचर्च-यापि वा मनःसहचरी वाचा नालं भवति तदीयं रहस्यजालमुद्घाट-यितुम्, मनसा परे पारे परिनिष्ठितो विप्रादाचर्मकारं प्रतिशरीरं कृत-निवासः—अनिर्वाच्याविद्याद्वितयसचिवः स कश्चनास्त्येव द्रष्टव्यः श्रोतव्यो मन्तव्यश्च। परःसहस्रं ग्रन्थाः सङ्ख्यातीताश्च निबन्धा अस्माकं चक्षुषोरग्रे सम्प्रति सन्ति, येषां रचनाया लक्ष्यं तदेव परमात्मनो रूपम्। भगवती श्रुतिस्तमेव गायन्ती शाखासहस्रैरक्लान्तभावेन समन्त्रमन्यरं समुद्रमभियान्ती सुरसरिदिव चकास्ति, स्मृतयश्च तद्रश्मिरञ्जितामेव दिशमनुधावन्त्यो मरुमरीचिकयातर्कितमनिलमभि क्रियमाणाः कस्तूरीहरिणा इव विलोक्यन्ते। "बाइबिल"-"कुरान"-प्रभृतिभि-र्भारतेतरनीहृदधिवासिनां मान्यतमैर्ग्रन्थैरपि स एव भगवान् जगन्नि-यन्ता प्रार्थ्यते, कल्याणाय चानुनीयते। ये च कियन्तश्चन परमां शक्ति-मन्वेष्टुं प्रयस्य स्वस्य मालिन्याद्वा, स्वान्तःकरणस्य चापल्याद्वा तच्चा-नधिगत्य पदार्थमिष्टं रिक्तहस्ताः परावर्त्तन्ते, तेषां चार्वाकादीनां तमःकलिता बुद्धिरैहिकेष्वेव स्रक्चन्दनवनितादिषु प्रचरन्ती तानेव विषयान् बहुमन्यमाना तेष्वेव लिम्पति। एवं क्रमेण प्रस्थानभेदात्— "यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनः" इति नयेन स एव परमात्मा बह्वीषु भूमिकास्वभिनीयमानः—'उल्लेखालङ्कारमुज्ज्वलयन्' सत्त्वरजस्तमोमय्या प्रकृतिवैचित्र्यविलसितया बुद्ध्या तत्तद्रूपेण परि-चीयते।

"त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।
रुचीनां वैचित्र्याद्दजुकुटिल-नानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥"

इति प्रतिपादयन् पुष्पदन्तः सर्वेषामेव ऋजुकुटिलनानापथजुषां पयसामेकत्र तोयनिधौ निधानमिव विश्वेषां दर्शनादिकृतामेकत्रैव परमकारुणिके वैषम्य-नैर्घृण्य-पङ्कसम्पर्करहिते क्वचन परमात्मनि विश्रान्तिरिति मतं सर्वथानवद्यं प्रस्तुवंस्त्वमुपतिष्ठते।

"अस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदः।" इत्युपनिषदा श्रुतेरादिकारणत्वेन प्रतिपादितं परमात्मानं विशकलय्य निरूपयन्ति दर्शनानि, पुराणानि, धर्मशास्त्राणि च पार्थक्येन व्यभज्यन्त; अथ्या एव च सूक्ष्मो विषयो विस्तरेणोपपाद्य सर्वेषां सुखावबोधाय सप्रपञ्चमेषु महर्षिभिः स्थापितः। यद्यपि ग्रन्थेष्वेषु लौकिक-पारलौकिकभेदमादाय, तत्रापि च प्रातिस्विकविषयान् राजनीत्यर्थनीति-धर्मनीतिप्रभृतीन् विमृश्य प्रदर्शिता भिन्नतयैव समस्ता विषयास्तथापि तेषां परम्परयोपसंहारस्तत्रैव निखिलाभिवन्द्ये परमात्मतत्त्वेऽवसीयते— इति विषयः

"कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुसृतस्वभावात्।
करोति यद् यत् सकलं परस्मै नारायणायेति समर्पयेत् तत् ॥

इति दिशा विचारयितुमुपक्रम्यते। तर्ककर्कशप्रणाल्या गभीरतर-विचारशृङ्खलया च प्रायशः पारलौकिकीं सामान्यतश्चैहिकीं मर्य्यादां प्रतिपादयतां ग्रन्थानां मध्ये दर्शनानामेव गणना प्राथमिकी। भारतीयदर्शनानामपि चार्वाकादीनामक्षपादादीनाञ्च प्रस्थानभेदादास्तिकनास्तिकभेदविधया द्विधा भवति निवेदितो मार्गः। आस्तिकदर्शनेषु यथा वेदान्त-न्याय-सांख्य-वैशेषिक-योग-मीमांसारूपाणां षण्णां प्राधान्येन तदितरेषाञ्च पाशुपतादीनां साम्प्रदायिकदर्शनत्वेनैकदेशि-

तथा च गौणत्वेन भवति व्यपदेशस्तथैव नास्तिकदर्शनेषु चार्वाक-सुगत क्षपणकादीनां मतस्य दृश्यते परिगणनम्।

तार्किकपितामहो भगवान् गौतमः प्रमाणप्रमेयसंशय-प्रयोजन दृष्टान्त-सिद्धान्तावयव तर्क-निर्णय वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति निग्रहस्थानानां षोड़शपदार्थानां परमेश्वरानुग्रहवशाद् वैशद्य-मुपगतेन ज्ञानेन दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामभावे निःश्रेयसं चिन्तयन् साटोपं विप्रतिपन्नपुरुषप्रतिपादकत्वेन प्रवृत्तिहेतुत्वेन च प्रमाणमुपाद्दिशत्। स हि जगतः सचराचरस्य कारणं परमाणु-मीश्वरञ्च निर्दिश्यात्मनः सगुणत्वमारम्भवादञ्च साधयति।

कणादः—द्रव्यगुणकर्म्मसामान्यविशेषसमवायरूपैः षड्भिः सप्त-मिर्वाभावसहितैः पदार्थैः समस्तं जगत् स्थितं विभावयन् गौतमप्रदर्शित-मेव सिद्धान्तमभिप्रैति। उभयेषां मते परलोकप्रतिपादनं पुनर्जनि-श्चाविरुद्धे।

कपिलस्तु—परिणामवादमवलम्ब्य दुग्धदध्यादिन्यायेन परिणममानां पञ्चविंशतितत्त्वात्मिकां प्रकृतिं जगतः कारणत्वेनाभ्युपगम्य तत्र चैतन्या-भिनिवेशाय पुरुषसंसर्गमाध्यासिकं कल्पयति। सत्कार्य्यवादश्च समाद्रियते। कार्य्यकारणयोस्तादात्म्यम्, आत्मनः कूटस्थत्वं बहुत्वञ्च, प्रकृतेर्नर्त्तकीसादृश्यमिति तस्य सिद्धान्तः।

पतञ्जलिः—कपिलस्याचार्य्यतां सद्योगेन समर्थयन्नपि भगवतः परमेश्वरस्य स्वीकृतौ ततः प्रविरज्यमानः प्रकृतिपुरुषातिरिक्तं षड्विंशं तत्त्वं तयोर्नियामकं क्लेशकर्म्मविपाकाशयैरपरामृष्टं पुरुषविशेषं मन्य-मानः—यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधीनामनुशी-लनेन परमेश्वरप्रणिधानेन च सत्त्वपुरुषान्यथाख्यातौ सम्प्रज्ञाता-सम्प्रज्ञातसमाधिद्वारेण कैवल्यमाह। तच्चेदं पातञ्जलं हेय-हेतु-हान-हानोपायप्रतिपादनमिषेण भगवता चतुर्व्यूहं गीतं कृष्णद्वैपा-यनेन।

जैमिनिर्वेदानामपौरुषेयतां सप्रमाणोहापोहं प्रसाध्य कर्मकलाप-परम्परया दुःखासंभिन्नमनन्तरञ्चाग्रस्तमभिलाषोपनीतं स्वर्गसुख-मुपस्थापयन् यागादिकेषु सांसारिकान् प्रेरयति, तैस्तैश्च यागैस्तां-स्तान् दिव्यभोगान् प्रमाणयन्—तत्र लोकानुत्कयति। स चायं ज्ञान-विप्रतीपमीश्वरञ्च प्रकारान्तरेण निरस्यन् कर्मणो महत्त्वं स्थापयति।

भगवान् कृष्णद्वैपायनस्तु—जीवब्रह्मणोर्भेदवादमविद्यानिबन्धनं प्रख्याप्य समुद्रगर्भादुत्पद्य तत्रैव विलीयमानानां तद्विकाराणां तरङ्गा-वर्त्तबुद्बुदादीनां सत्त्वमिव जगतः सत्तां परमात्मनः सकाशात्मन्वानो विवर्त्तवादपथेन सत्कार्य्यमर्य्यादया चात्मसिद्धान्तमव्यग्रं प्रतिपादयति। तदनुयायिनां मते परमार्थिकं वस्तु केवलं शुद्धमद्वैतं ब्रह्म, इतरेषां पुनः व्यावहारिकमाध्यासिकं वा सत्त्वमिति तेषामुद्घोषः।

इहापि वेदान्तदर्शनप्रतिपाद्ये परमात्मसत्त्वे केचन विशिष्टाद्वैत-शुद्धाद्वैत-द्वैताद्वैतादिभेदात् विविधमार्गानुसारिणः स्वमतमन्यथा समर्थयन्तोऽभ्यवतिष्ठन्ते भक्त्युपासनोपकल्पितभेदाश्च दृश्यन्ते।

"सत्यपि भेदापगमे नाथ ! तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः॥
"सर्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोचयिष्यामि मा शुचः॥"

इति रीत्या च भगवता प्रतिपादितं राद्धान्तमात्मनः पक्षसिद्धये भागवता ब्रह्मवादिनश्च निक्षिपन्ति।

तदेवं सामान्यतो दर्शनानां सिद्धान्तप्रकारे निरुक्ते तेषां विशिष्ट-मपि वक्तव्यं निरूप्यमाणं भवति। नैयायिका यथा परिणामवादं न सहन्ते तथैव साङ्ख्यास्तेषामारम्भवादमपि सर्गौपयिकममत्वा नाद्रि-यन्ते। आत्मनि सुखदुःखादीनां स्थितिं स्वीकुर्वन्तः काणभुजा जपा-कुसुमसंसर्गात् तल्लौहित्ये काचफलके प्रतिफलति सत्यपि काचगतं स्वच्छशुक्लभावमव्याहतं विलोकयद्भिः सुतरां ब्रह्मणोऽविद्यासंसर्ग-

प्रतितस्यात्मनोऽस्य नैर्गुण्यमौदासीन्यञ्च मन्यमानैर्वेदान्तिभिः साङ्ख्य-र्योगविद्भिश्च विवादमारभन्ते। साङ्ख्यैः समं यत्र तत्र संवदन्तोऽपि वेदान्तभक्ताः पुरुषबहुत्वं, जगतः प्रकृतिमूलतां, द्वैतवादञ्चावहेल-यन्ति। मीमांसकानां कार्य्यजन्यो लोकः अपूर्वभावनाभावितस्तात्र-तम्ययुक्तं सुखं प्रसूते, प्रतिद्वन्द्वितासहचरं च स्वर्गं जनयतीति यागादिक-मविशुद्धिक्षयातिशययुक्तं प्रतिजानानाः साङ्ख्यवेदविहितप्रवृत्त्या कर्म्ममार्गमनुशासतं जैमिनिमधिक्षिपन्ति। एवमेव यत्र क्वचन सत्यपि विरोधसद्भावे ऐकमत्यञ्चापि नैव नास्ति। परलोकसिद्धौ देहात्मतादि-खण्डने च सर्वेषां साजात्यमेवायातीति सामान्यविशेषतया विरोधः साम्यञ्च स्फुटं प्रतीयेते।

सम्प्रति विचारणीयमेतद् भवति—किं तथ्यमेवैषां सरणिः पृथङ्मुखी? वास्तविकश्च किमेषामेष विभेदः? तदा तु प्रतिवचने ब्रूमः—अङ्ग! एकस्मादपरस्य विभेदो न साधनीयः, साम्यमेवापादनीयं यत्र क्वचिद् किञ्चिद् भवति। इहापि सम्प्रवर्त्तितविचारा वयं यदैषां मूलभूतं विज्ञानं श्रुतिमनुसन्दध्मस्तदा स्पष्टमिदं विज्ञातं भवति—तत्र नास्ति कोऽपि भेदवादो नापि वा भ्रमापादकः कोऽप्युपदेशः। यत्र भेषजं वदता मनुना—"श्रुतिद्वैधन्तु यत्र स्यात्" इत्यादि प्रतिपादितं, किञ्च —"विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि"त्यादि च यज्जैमिनि-रसूचयत् तस्य श्रुतिस्मृत्योर्विरोधे श्रुतेः प्राधान्यस्य श्रुतीनां स्मृत्योर्वा परस्परं जायमाने विरोधे उभयोरेव प्रामाण्यस्य मान्यतया करणीयस्य स्थापनं विवक्षितमिति वाग्भिः श्रुतिविरोधो नोन्नेयः। भगवत्या त्रय्या लोककल्याणायैव भगवतोद्गीतया न खलु प्रमादपरया भवितव्यं नापि वा सिद्धे वस्तुनि यथाकथञ्चिद् यत् किमपि समालपनीयमिति—"उदिते जुहोत्यनुदिते जुहोती"त्यादिभेदवादस्य सामञ्जस्यमुखेन कृतार्थतया निःसंशयं वचः। कर्म्मज्ञानोपासनाकाण्डात्मिका त्रयी मन्त्रभागेण कर्म्मकाण्डमुखेन यागादावुपकरोति, ब्राह्मणभागेन

मन्त्रार्थानामितिकर्त्तव्यतां ज्ञापयति, उपनिषद्भिश्च परमात्मप्रणिधान-
मात्मानात्मविवेकञ्च प्रस्तौति। सेयं यथा कालक्रमेण बहुशाखा सम-
पद्यत, विभिन्नाश्चाख्यास्तथैव प्रावर्त्तन्त व्याख्यात्मिका निबन्धाः ; पर-
मद्याप्येतस्याः प्रतिपाद्यमज्ञात्वा रचन्तो बहिरागतेभ्यः कांदिशीकेभ्यश्चे-
मामबाधितां ख्यापयन्तस्तदनुयोजितेनैव पथा च सञ्चरमाणा आचार्य्या
भवन्तीति तेषां मतालोचने महानेषोऽवलम्बः। उपर्युक्तानां दर्शनानां
लक्ष्यभूतं किमपि परमार्थतत्त्वानुसन्धानं प्राणिनामार्त्तिनाशाय मोक्षा-
धिगमश्चेति प्रागेवावोचाम। अवश्यमेव तेषां क्रमे विवेचनदिक्षु च
विभिन्नमन्तरं पश्यामः। यतश्च ज्वरापनोदनाय ज्वराङ्कुश-मृत्युञ्जय-
लक्ष्मीविलासादीनामौषधानां यथावस्थं श्रूयते व्यवस्था पृथग्गुणानां,
तथैव दुःखध्वंसाय लोकानां प्रवृत्ता आचार्य्याः स्वानुभवानुमानज्ञातैः
पथिभिर्बहुभिर्गता अपि पुनरेकत्रैव सम्मिलन्ति। यथापि वायुयानविमा-
नादिना होरामात्रेणैव गमनीयं स्थानं वयं धूमवाष्पयानैः शकटिकया
च यथाक्रमं चिरेण चिरतरेण च कालेन समासादयामस्तथैव कर्म्म-
कलापेनोपासनया विवेकेन च तदेव वस्तु लब्धव्यं भवति ; अपेक्षितः
केवलं तत्र तीव्रस्तीव्रतरश्च संवेगः। साधनभूतानामङ्गानां सिद्धये
निरूपणाय च साडम्बरं प्रपञ्चपुरःसरमुपवर्णितानां सर्वेषामवान्तरपदा-
र्थानामसत्यपि प्राधान्ये स्थूलतो भवत्येव प्रकर्षः प्रमाणयोग्यता च
प्रातिस्विकी। अध्यात्मविचारचिन्तायां तर्कसाधनभूतान् प्रमाणादीन्
पदार्थान् सावशेषनिर्विशेषं प्रमाणयन् नैयायिको न भवति तथा श्रद्धा-
भाजनं विदुषां, यथा कापिलः। अथापि कापिलस्य पुरुषसाधनवत्
नैयायिकस्य प्रामाण्यवादव्यवस्थापनं सर्वेषां हृदयहारि भृशमनुसर-
णीयञ्च भवति। कापिला हि यत्र सूक्ष्मेक्षिकयात्मानं विवेचयन्ति
"ह्यसङ्गोऽयं पुरुषः" इत्यादिश्रुतिप्रतिपाद्यञ्च संगमयन्ति, तत्र नैया-
यिकाश्चार्वाकादीनां सन्देहशङ्काकीलमुन्मूल्य "देहादिभिन्नो देही"ति
व्यवस्थया प्रतिपादयन्ति। अतश्च सोपानपौर्वापर्य्येनयेन न्यायसांख्ययोः

प्रत्यक्षमीक्ष्यमाणोऽपि वस्तुगतो नास्त्येव भेद इति प्रतिपन्नं तर्केणोर्व निर्वक्तव्यञ्च केन पथेति साधनायैव तर्कशास्त्रस्य मुख्यतो विनियोगात्। तथा च वेदप्रतिपाद्यस्य ब्रह्मणः परमात्मनो वा न्यायदर्शनं साधन-परम्परया परिचये भूरिश उपकुरुते—इति तदीयोहापोहसरणिः काणादस्य चानुमितिसिद्धान्तः प्रधानो विषयः। इत्थमेव साङ्ख्या यत्र प्रकृतेः प्राधान्यं पुरुषस्य च निर्लेपतां प्रदर्शयन्ति, तत्राद्यस्य मतस्या-नङ्गीकारेऽपि परं परं श्लाघ्यते। यद्यपि साङ्ख्यैर्महता समारम्भेण प्रतिपादयितुमुपक्रान्तं प्रधानं प्रधानवद् भासमानं चमत्कुरुते, परन्तु चैतन्यस्वरूपे पुरुषेऽवगतमात्र एव तस्य ( प्रधानस्य) सर्वस्वं विलीय-मानं तदीयं मायामयमकिञ्चित्करं रूपं परिचाययति। सूर्य्यस्य तेजसि क्रमेणाक्रम्यमाणे चन्द्रमसो ज्योतिर्विजयते परं तदेव तदभावे कदा-चिच्च सर्वात्मना लोपमुपेतं समस्तमेव निपातयत्यन्धतामिस्रे जगज्जालम्। सुतरां साङ्ख्यानां यथा सत्कार्य्यवादो मनोरमः यथा च सर्गप्रक्रिया मञ्जुला न तथा ईश्वरस्य सिद्धिरिति विमृश्यैव योगज्ञानैकचक्षुषा भगवता पतञ्जलिना परमात्मनः सत्त्वं महता प्रयासेन प्रतिष्ठापितम्। यौगिकीं क्रियां प्रत्यक्षमेव निभालयतां ततश्च विहितात् सिद्धिं विन्दतां महात्मनां प्रभावमनुभवच्च विभावयतो जनस्य हृदि सोऽयमुक्तप्रकारो योगिनां परमात्मसिद्धेस्तार्किकाणां क्षित्यादिसकर्तृकत्वानुमितिमहत्त्वं तिर-यति। यच्च पुनर्जैमिनीयानां सिद्धान्तः स सम्प्रति यागाद्यनुपयुक्तसमय-त्वादसम्भवत्पालने लोकान् नोपकुर्य्यादिति केवलं तेषां कर्म्ममार्गानु-सरणं शरणम्। ते हि धर्म्मस्य फलं स्वर्गीयं निरतिशयसुखं वदन्तः कर्म्मणि लोकान् व्यापारयन्ति, ततश्च धर्मोन्मुखी प्रजा पापेभ्यो विरत-पदा श्रेयसे चेष्टते। मन्त्रभागस्योपयोगयाथार्थ्यं प्रचारयतामेषां—"तद् यथेह कर्म्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते।" इति श्रुतेः स्वर्गस्यापि दुःखजनकतया स्वर्गसुखानन्तरं पुनर्जननेन च, मीमांसकानां लक्ष्यमितरेषामैकान्तात्यन्ततोऽभावा-

त्मकं दुःखत्रयस्य प्रच्यवमानमपेशलं भवति। इदमुक्तं भवति—यो हि यस्य प्रधानो विषयस्तत्र तस्य प्रामाण्यम्, इतरस्मिन्नंशे तस्य पुनर्गौणत्वम्, 'यत्परः शब्दः स शब्दार्थः' इति न्यायात्। एतदेव रहस्य-मधस्तनीनां सूरिसूक्तीनामप्यनुशीलनतः प्रकटमुन्नीयते।

(क्रमशः)

---

## वर्षबिन्दुः *

[ निबन्धकः—इ. वि. रामशर्म-नम्पूरी ]

अयं वियत्तः प्रपतत्यधोऽधो, हा! हन्त! केनापि विनाश्रयेण।
कालप्रभेदादवशस्य कोऽपि कल्याणमूर्त्तिः सलिलस्य बिन्दुः ॥१
नभस्तले मञ्जुलमौक्तिकाभं सचेतनासेचनकत्वशस्तम्।
लसन्तमेनं तु निहत्य वत्सं कस्योद्गतं पातयितुं पदाऽधः? ॥२
कस्त्वं? सुरद्रोर्निपतन्निवात्र निर्वृन्तबन्धो मुकुलप्रवेकः।
मन्दाकिनीसेकतभूमिभागात् प्रभ्रष्टहंसाण्डतराण्डतुल्यः ॥३
विधातृयानद्विजचञ्चुनिर्यत्सिताम्बुजस्वादु-मृणालिकेव।
श्वेतातपत्रात्त्रुटिता बलारेर्होरस्फुटस्फाटिकखण्डिकेव ॥४
स्थानात्प्रमाद्याम्बरचत्वराद्वागधः समागच्छदिवोडुरत्नम्।
पुण्यक्षये हन्त! विहाय नाकं भूलोकगामी सुमना इवापि ॥५
आयासि शङ्के शिशिरानिलात्तो गङ्गामृतोद्यत्कणतन्नजस्त्वम्।

---

* इदन्तु काव्यं 'कवितिलक' प्रभृति बहुबिरुदभूषितानाम्, M.A. B.L. M. R. S. L. इत्याद्युपाधिधारिणां पश्चिमहामण्डलप्रधाननगरे स्यानन्दूरपुरे उपमन्त्रिपदे प्रशोभमानानाम् 'उल्लूर् परमेश्वरय्यर्' महाशयानां केरलभाषाकृतिषु कतमत् संस्कृतभाषया अनूदितं केरलभाषान्तर्गतः पद्यसाहित्यभागः कियन्त-मुत्कर्षमेभिर्महाकविभिरभिगत इति सर्वेषां सुखावबोधाय सहृदयशिरोरत्नानां सादरं प्रकटीक्रियते।

नो चेत् सदोदीर्णमदाम्बुशुभ्रदैरावतश्रीकर-शीकरस्त्वम् ॥६

मधुव्रतास्वादितशेषभूतो मन्दारमाध्वीककणिकावतंसः ।
पुलोमजाङ्गेषु सखीप्रयुक्तं गन्धद्रवाम्भःपृषतप्रकाण्डम् ॥७

दत्तस्य वाचस्पतये मघोना पाद्याम्बुनः पावननव्यबिन्दुः ।
स्वर्गस्थपीयूषघटात् स्फुटोद्यद्विसंष्ठुलश्रीरसि नत्तितोऽश्रः ॥८

नैव त्वमाशाङ्गनयाऽसि मङ्क्त्वा स्पृष्टा जलं संशिथिलं प्रधूते ।
कालाम्बुदश्यामलकेशपाशे ततश्च्युतः कोऽपि पयःकणोद्वः ॥९

निजोदरे त्वां तव सोदरांश्च कादम्बिनी कम्रमुखी वहन्ती ।
कियद्दिनान्यत्र न सा व्यवात्सीत् सुपर्वपादाङ्कितपुष्करान्ते ॥१०

कियद्दिनात्प्राग्गगनेचरास्तन्मङ्गल्य सीमन्तमहामहे ताम् ।
अभूषयन् केन न भूषणेन विद्युद्धुराट्चापविनिर्मितेन ॥११

कादम्बिनी सा दिवि सन्महेन्द्रनीलाश्मनिष्कत्वमिता यदासीत् ।
कल्याणतद्दर्शनमेकमक्ष्णोः कालाञ्जनालेपनकान्तिदायि ॥१२

तथाविधाया नवकालिकाया यूयं प्रवालच्छविकालिकायाः ।
पुण्योदरं प्राप्य विभूषयन्तः पुष्टाः कियद्वृत्तबलत्वरूपाः ॥१३

पूर्णाऽभवद् गर्भदशाऽम्बिकायाः क्रमेण निर्वृत्तमपत्यजन्म ।
तदाऽस्मदक्ष्णां विषयस्तु कोऽपि सन्तानगोपालकथाप्रभेदः ॥१४

सञ्जातमात्राः सकलाः समन्तात् पतन्त्यधोऽधः शिशवश्च हा ! हा ! ।
नाके न कस्याप्यधिवासयोगो भवानरिष्टाभिध-सर्वशून्यः ॥१५

अयं सविद्युद्वलयं क्व भूयः प्रसारयस्यद्य पयोदमाले ।
गताः सुतास्ते समयस्तवायं सर्वस्वपाटच्चर एव जातः ॥१६

सह्याद्रिशृङ्गोपल इत्युदीता घनाघनस्यास्तमिताऽथ कीर्त्तिः ।
वर्षा-वधूटीकरपल्लवे स सुस्निग्धसंशोधनवस्त्रमद्य ॥१७

कोऽप्याकलय्यौषधिमन्तरग्निमायोज्य मेघाश्मघटां भिनत्ति ।
त्रुटन्ति नाडीनिनदास्ततोऽधस्तुषारगौरं समुदेति चाम्भः ॥१८

जन्मक्षणे हन्त निजां प्रसूतिं हित्वाऽथ नक्षत्रपथाङ्कवन्तः ।

नो चेत् सदोदीर्णमदाम्बुशुभ्रदैरावतश्चीकर-शीकरस्त्वम् ॥६
मधुव्रतास्वादितशेषभूतो मन्दारमाध्वीकणिकावतंसः ।
पुलोमजाङ्गेषु सखीप्रयुक्तं गन्धद्रवाम्भःपृषतप्रकाण्डम् ॥७
दत्तस्य वाचस्पतये मघोना पाद्याम्बुनः पावननव्यबिन्दुः ।
स्वर्गस्थपीयूषघटात् स्फुटोद्यद्विसंस्थुलश्चीरसि नर्त्तितोऽसि ॥८
नैव त्वमाशाङ्गनयाऽसि मङ्क्त्वा सृष्टा जलं संशिथिलं प्रधूते ।
कालाम्बुदश्यामलकेशपाशे ततश्च्युतः कोऽपि पयःकणोऽसि ॥९
निजोदरे त्वां तव सोदरांश्च कादम्बिनी कम्रसुखी वहन्ती ।
कियद्दिनान्यत्र न सा न्यवात्सीत् सुपर्वपादाङ्कितपुष्करान्ते ॥१०
कियद्दिनान्यागगनेचरास्तन्मङ्गल्य सीमन्तमहामहे ताम् ।
अभूषयन् केन न भूषणेन विद्युद्धुराट्चापविनिर्मितेन ॥११
कादम्बिनी सा दिवि सन्महेन्द्रनीलाग्रनिष्कत्वमिता यदासीत् ।
कल्याणतद्दर्शनमेकमक्ष्णोः कालाञ्जनालेपनकान्तिदायि ॥१२
तथाविधाया नवकालिकाया यूयं प्रवालच्छविकालिकायाः ।
पुण्योदरं प्राप्य विभूषयन्तः पुष्टाः कियद्वृत्तवलर्च्चरूपाः ॥१३
पूर्णाऽभवद् गर्भदशाऽम्बिकायाः क्रमेण निर्वृत्तमपत्यजन्म ।
तदाऽस्मदक्ष्णां विषयस्तु कोऽपि सन्तानगोपालकथाप्रभेदः ॥१४
सञ्जातमात्राः सकलाः समन्तात् पतन्त्यधोऽधः शिशवश्च हा! हा!।
नाके न कस्याप्यधिवासयोगो भवानरिष्टाभिध-सर्वशून्यः ॥१५
अयं सविद्युद्वलयं क्व भूयः प्रसारयस्यद्य पयोदमाले ।
गताः सुतास्ते समयस्तवायं सर्वस्वपाटच्चर एव जातः ॥१६
सह्याद्रिशृङ्गोपल इत्युदीता घनाघनस्यास्तमिताऽथ कीर्त्तिः ।
वर्षा-वधूटीकरपल्लवे स सुस्वच्छसंशोधनवस्त्रमद्य ॥१७
कोऽप्याकलय्यौषधिमन्त्रमग्निमायोज्य मेघाश्मघटां भिनत्ति ।
त्रुटन्ति नाडीनिनदास्ततोऽधस्तुषारगौरं समुदेति चाम्भः ॥१८
जन्मक्षणे हन्त निजां प्रसूतिं हित्वाऽथ नक्षत्रपथाद्भवन्तः ।

स्तनन्धयाः क्षिप्रमधः पतन्ति मङ्गलका ! मध्यमलोकपान्थाः ॥१९
संवाहनोल्का भ्रमरर्षयो वः कृत्वा जिगासन्ति सुरस्त्रियोऽङ्के ।
स्तन्यं प्रदातुं सुरभिश्च साध्वा तथा भवन्तस्त्वभिजातरूपाः ॥२०
तत् किं ब्रवीम्यद्य रटत्वजस्रमाक्रन्दनं निष्फलमम्बरान्ते ।
नास्त्येव तेषां भवतां च सत्यमितः परं कश्चिदृणानुबन्धः ॥२१
प्रद्योतरोऽयं घनपुञ्जश्लोकः कादम्बिनीमातुरितः क्रमेण ।
देवकामिनीनां निटिलान्तरात् तत् कस्तूरिकाचित्रकमुद्रुतं स्यात् ॥२
अयं लघुबिन्दुरपीश्वरस्य रूप्योद्भवागार ! न किं त्वदुत्थः ।
ायं त्ववोचाम तदेकदेशमन्यच्च भागोऽस्त्यपरो विलेखः ॥२३
ह्येहि हे ! मल्लख ! वत्स ! युष्मत्सम्प्राप्तिरस्मत्सुकृपूर्वपुण्यात् ।
प्रागन्तुकोपासकनैकलोका ब्रूमो वयं स्वागतमादरेण ॥२४
ीहारकालेऽवसिते कदाचित् स्नातुं गतः सायमितोऽपराब्धिम् ।
प्रभूदहृश्यः परचित्रभानुर्जातः प्रभाते बडवामुखाग्निः ॥२५
वुल्लरीं निधायाण्डकटाहमाज्यं प्रक्षिप्य तत्राग्निमधश्च चित्वा ।
हे 'सू'र ! सम्भर्जयतोऽथ लोकं स्थानेऽत्र रेफस्य तु ते 'द'कारः ॥२६
िदाघकाले दिननाथकृत्तां प्रश्चाग्निमध्यस्थितिमेत्य लोकाः ।
द्रुतस्य विन्दोरमृतात्मकस्य नवावताराय भृशं प्रतप्ताः ॥२७
ीमूतभावाज्जनतापवह्निधूमोत्करो विष्णुपदे व्यलासीत् ।
करान् सहस्रं वहतः सतः सा नीलाञ्चिताऽधो न्यपतत्पताका ॥२८
ास्यावलेपप्रशमाय शम्पा-पीताम्बरं श्रीकरमादधानः ।
ीलाम्बरोपान्तगतो व्यलासीच्छार्ङ्गेन्द्रचापेन च कृष्णमेघः ॥२९
ज्जीवनाधारगलोज्झतस्य गीतामृतस्य प्रथमाचरं त्वम् ।
प्रशेषलोकस्य हृताऽर्त्तिरित्थमावेदकः कश्चिदमर्त्यदूतः ॥३०
ारोवरान्तर्गतपङ्कजातादुद्यस्तिताम्भोरुहकुड्मलस्त्वम् ।
वमेव सम्मेचकपेटकस्था महार्हिका हीर-मतल्लिकाऽपि ॥ ३१

# वेदान्ते सांख्याधिक्षेपपरतानिरासः

( पूर्वतोऽनुवृत्तः )

[निबन्धकः—श्रीशरच्चन्द्रभादुरी एम् ए. बि. एल् ]

१।१।६ "गौणश्चेन्नात्मशब्दात्"।

"तदैक्षते"त्यादिषु न ईक्षतिशब्दो गौणार्थे प्रयुक्तः। कुतः "आत्मशब्दात्"। प्रधानस्याचेतनत्वमवलम्ब्य यथा व्याख्यातमेतत्सूत्रं भाष्यकारादिभिस्तथा अन्नप्राणादेरचेतनत्वमवलम्ब्य अस्माभिर्व्याख्यातम्, अतो वस्तुत एतयोर्व्याख्यानयोरभेदः, एतत्सूत्रस्य परवर्त्तिनः सूत्रस्य च। "कुत एतदात्मशब्दादीक्षतेरगौणत्वमित्यत उत्तरं पठति।

१।१।७ "तन्निष्ठस्य मोक्षोपदेशात्"।

मोक्षोपदेशश्छान्दोग्यादिषु। (छान्दोग्य ६।१४।२।६।१५।१—३) अथ प्राणादितो न "जन्माद्यस्य" कुतश्च हेत्वन्तरादित्यत आह—

१।१।८ "हेयत्वावचनाच्च"।

"हेयत्व"-रूपम् "अवचनं" निन्दा तस्मात्। "ईक्षतेर्नाशब्द"मिति सूत्रेण यद् व्याहृतं तदन्नादिकं न प्रधानमित्येतत्सूत्रात् सुस्पष्टमवगम्यते। "महतः परमव्यक्तमव्यक्तात् पुरुषः पर" इत्यादिषु श्रूयत आत्मनः प्रधानस्यावरत्वम्। न श्रूयते कुत्रापि प्रधानस्य "हेयत्वाववचनम्" "श्रुतिस्मृतिपुराणानामालयेन" श्रीमच्छङ्कराचार्य्येणापि एतत्सूत्रभाष्ये नोद्धृता काचिदपि प्रधान-"हेयत्वाववचन"परा श्रुतिः। अपि तु श्रूयते भृगुवल्ल्यामेव "भृगुर्वै वारुणिः वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति तस्मा एतत् प्रोवाच "अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। तं होवाच यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व। तद्ब्रह्मे"ति। स तपोऽतप्यत। स तपस्तप्त्वा अन्नं ब्रह्मेति व्यजानात्।

अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद् विज्ञाय पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तं होवाच तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति। तं होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। तपोऽतप्यत। स तपस्तप्त्वा मनो ब्रह्मेति व्यजानात्। मनसो ह्येव खल्विमानि भूतानि जायन्ते मनसा जातानि जीवन्ति। मनः प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तं होवाच तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपस्तप्त्वा विज्ञानं ब्रह्मेति व्यजानात्। विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते। विज्ञानेन जातानि जीवन्ति विज्ञानं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति। तं होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपस्तप्त्वा आनन्दो ब्रह्मेति व्यजानात्। अत्र श्रुतिः प्रथममरुन्धतीन्यायेन अन्नादिकं ब्रह्मत्वेनोपदिश्य पश्चात् अन्नादीनां हेयत्वं स्पष्टमुवाच। अन्नहानेन प्राणम्, प्राणहानेन मनः, मनोहानेन विज्ञानम्, विज्ञानहानेन आनन्दं सृष्टिस्थितिप्रलयकारणत्वेनोपदिदेश। "ईक्षतेर्नाशब्द"मिति सूत्रेण यद् व्यावृत्तं तस्यैव "हेयत्वावचन"मस्मिन् सूत्रे उक्तमिति सुस्पष्टमवभाति। "हेयत्वावचनं" न श्रूयते प्रधानस्य। श्रूयते हि अन्नप्राणादीनाम्। अत "ईक्षतेर्नाशब्द"मिति सूत्रेण व्यावृत्ता अन्नप्राणादयः, न व्यावृत्तं कपिलप्रोक्तप्रधानमिति समायातम्। सूत्रस्थ "च" शब्दो ब्रह्मप्रतिपादक-कारणसमुच्चयार्थं इति मन्ये। अपि तु " 'च' शब्दः प्रतिज्ञाविरोधाभ्युच्चयप्रदर्शनार्थः" इति श्रीमच्छङ्कराचार्यपादाः।

तथा सत्यपि प्रस्ताविते ऽस्मिन्नर्थे नापतति कोऽपि दोषः। एतदनन्तरं दृश्यते निम्बार्कभाष्ये "प्रतिज्ञाविरोधा"दिति स्वतन्त्रसूत्रम्।

१।१।९ "स्वाप्ययात्"।

१।१।१० "गतिसामान्यात्"।

१।१।११ "श्रुतत्वाच्च"।

प्रधानस्याचेतनत्वमवलम्ब्य यथा व्याख्यातमेतत्सूत्रत्रयं भाष्यकारादिभिस्तथा अन्नप्राणादीनामचेतनत्वमवलम्ब्य अस्माभिर्व्याख्येयमिति बोद्धव्यम्।

इतीक्षत्यधिकरणं समाप्तम्।

## अथ रचनानुपपत्त्यधिकरणम् ।२।२।१-१०

१। "रचनानुपपत्तेश्च नानुमानम्"।

शब्देतरप्रमाणेन केनचित् "न" भवति "रचनोपपत्ति" रतो "नानुमानं" भवितुमर्हति प्रमाणं ब्रह्मकर्तृकाया जगद्रचनायाः। अत्र न काचिदप्यपेक्षा "अनुमान"शब्दस्य प्रसिद्धार्थहानेन साङ्ख्यशास्त्रकल्पनायाः अपि तु एतत्सूत्रार्थं स्पष्टमाह "सम्बन्धाभावान्नानुमान"मिति साङ्ख्यसूत्रम् (५।११)।

२। "प्रवृत्तेश्च"।

एतदादिसूत्रेषु "नानुमान"मित्यध्याहार्यम्। कर्तुः "प्रवृत्तेः" प्रवर्त्तते रचनादिकार्य्यम्। असङ्गस्य परिपूर्णस्वभावस्य ब्रह्मणः प्रवृत्तिलेशाभावान्नानुमातव्या जगद्रचना ब्रह्मणेति। एतत्सूत्रार्थं स्पष्टमाह "न रागादृते तत्सिद्धिः प्रतिनियतकारणत्वा"दिति साङ्ख्यसूत्रम् (५।६)।

३। "पयोऽम्बुवच्चेत् तत्रापि"।

प्रवृत्त्यभावेऽपि यथा "पयो" दुग्धं दध्यादिरूपेण परिणमते; यथा च "अम्बु" करकादिरूपेण परिणमते, तथा ब्रह्मापि जगद्रूपेण परिणमत इत्यपि नानुमातव्यम्। कुत इत्यत आह—

४। "व्यतिरेकानवस्थितेश्चानपेक्षत्वात्"।

ब्रह्मव्यतिरिक्तस्य कस्यचित् पदार्थस्य "अनवस्थिते"रनस्तित्वात् "पयोऽम्बु"—दृष्टान्तोऽपि न सङ्घटते। कुतः "अनपेक्षत्वाद्" ब्रह्मणः।

५। "अन्यत्राभावाच्च न तृणादिवत्"।

यथा "तृणादि" क्षीराद्याकारेण परिणमते तथा ब्रह्मापि जगदाकारेण। नैवम्, "अन्यत्राभावात्" तृणाद्युपयोक्तृधेन्वादिवन्न वर्त्तते ब्रह्मणोऽन्यत् किञ्चनेति। अतो नैवमप्यनुमानम्। "च" शब्दः समुच्चये।

६। "अभ्युपगमेऽप्यर्थाभावात्"।

अथापि ब्रह्मणो जगदाकारेण परिणाममनुमाने "नाभ्युपगच्छेम" पूर्वोक्तदोषसत्त्वेऽपि, तथापि दोषान्तरमनुषज्यत एव। कुतः, "अर्थाभावात्" न दृष्टं केनापि कुत्रापि प्रयोजनमनुद्दिश्य चेतनप्रवर्त्तनम्। ब्रह्मणः प्रयोजनाभावात् न स्थानमस्यापि पक्षस्य। एतत्सूत्रार्थं स्पष्टमाह "स्वोपकारादधिष्ठानं लोकवदि"ति साङ्ख्यसूत्रम् (१।३)।

७। "पुरुषाश्मवदिति चेत् तथापि"।

स्वप्रयोजनाभावेऽपि यथा पुरुषस्य नखलोमानि पुरुषात् सञ्जायन्ते; यथा च प्रस्तराकारेण परिणतो वृक्षांशः स्वप्रयोजनाभावेऽपि प्रस्तराकारेण वर्द्धते, यथा वा अयस्कान्तोऽश्मा स्वप्रयोजनाभावेऽपि अयः परिणमयति अयस्कान्ताकारेण, तद्वत्। न घटतेऽयमपि दृष्टान्तः, ब्रह्मणो निष्क्रियत्वादिश्रुतेः। "यथा सतः पुरुषस्य केशलोमानी"त्यादिषु श्रुतिर्ब्रह्मणो जगदुपादानत्वमेवोपदिशति, न दृष्टान्तदार्ष्टान्तिकयोः सर्वविषयसाम्यमिति ज्ञेयम्।

८। "अङ्गित्वानुपपत्तेश्च"।

ब्रह्माङ्गकल्पनायाः श्रुतिविरुद्धत्वात्। "निष्कलत्वादि" श्रुतेः "निर्भागत्वादि" श्रुतेश्च। दृश्यते हि "निर्भागत्व" श्रुत्युल्लेखः साङ्ख्यसूत्रेऽपि (५।७३)।

तथा सत्यपि प्रस्ताविते ऽस्मिन्नर्थे नापतति कोऽपि दोषः। एतदनन्तरं दृश्यते निम्बार्कभाष्ये "प्रतिज्ञाविरोधा"दिति स्वतन्त्रसूत्रम्।

१।१।९ "स्वाप्ययात्"।

१।१।१० "गतिसामान्यात्"।

१।१।११ "श्रुतत्वाच्च"।

प्रधानस्याचेतनत्वमवलम्ब्य यथा व्याख्यातमेतत्सूत्रत्रयं भाष्यकारादिभिस्तथा अन्नप्राणादीनामचेतनत्वमवलम्ब्य अस्माभिर्व्याख्येयमिति बोद्धव्यम्।

इतीक्षत्यधिकरणं समाप्तम्।

## अथ रचनानुपपत्त्यधिकरणम् ।२।२।१-१०

१। "रचनानुपपत्तेश्च नानुमानम्"।

शब्देतरप्रमाणेन केनचित् "न" भवति "रचनोपपत्ति" रतो "नानुमानं" भवितुमर्हति प्रमाणं ब्रह्मकर्तृकाया जगद्रचनायाः। अत्र न काचिदप्यपेक्षा "अनुमान"शब्दस्य प्रसिद्धार्थहानेन साङ्ख्यशास्त्रकल्पनायाः अपि तु एतत्सूत्रार्थं स्पष्टमाह "सम्बन्धाभावान्नानुमान"मिति साङ्ख्यसूत्रम् (५।११)।

२। "प्रवृत्तेश्च"।

एतदादिसूत्रेषु "नानुमान"मित्यध्याहार्य्यम्। कर्त्तुः "प्रवृत्तेः" प्रवर्त्तते रचनादिकार्य्यम्। असङ्गस्य परिपूर्णस्वभावस्य ब्रह्मणः प्रवृत्तिलेशाभावान्नानुमातव्या जगद्रचना ब्रह्मणेति। एतत्सूत्रार्थं स्पष्टमाह "न रागादृते तत्सिद्धिः प्रतिनियतकारणत्वा"दिति साङ्ख्यसूत्रम् (५।६)।

३। "पयोऽम्बुवच्चेत् तत्रापि"।

इत्थभावेऽपि यथा "पयो" दुग्धं दध्यादिरूपेण परिणमते; यथा च "अम्बु" करकादिरूपेण परिणमते, तथा ब्रह्मापि जगद्रूपेण परिणमत इत्यपि नानुमातव्यम्। कुत इत्यत आह—

४। "व्यतिरेकानवस्थितेश्चानपेक्षत्वात्"।

ब्रह्मव्यतिरिक्तस्य कस्यचित् पदार्थस्य "अनवस्थिते"रनास्तित्वात् "पयोऽम्बु"—दृष्टान्तोऽपि न सङ्घटते। कुतः "अनपेक्षत्वाद्" ब्रह्मणः।

५। "अन्यत्राभावाच्च न तृणादिवत्"।

यथा "तृणादि" क्षीराद्याकारेण परिणमते तथा ब्रह्मापि जगदाकारेण। नैवम्, "अन्यत्राभावात्" तृणाद्युपयोक्तृधेन्वादिवन्न वर्त्तते ब्रह्मणोऽन्यत् किञ्चनेति। अतो नैवमप्यनुमानम्। "च" शब्दः समुच्चये।

६। "अभ्युपगमेऽप्यर्थाभावात्"।

अथापि ब्रह्मणो जगदाकारेण परिणाममनुमाने "नाभ्युपगच्छेम" पूर्वोक्तदोषसत्त्वेऽपि, तथापि दोषान्तरमनुषज्यत एव। कुतः, "अर्थाभावात्" न दृष्टं केनापि कुत्रापि प्रयोजनमनुद्दिश्य चेतनप्रवर्त्तनम्। ब्रह्मणः प्रयोजनाभावात् न स्थानमस्यापि पक्षस्य। एतत्सूत्रार्थं स्पष्टमाह "स्वोपकारादधिष्ठानं लोकवदि"ति साङ्ख्यसूत्रम् (५।३)।

७। "पुरुषाश्मवदिति चेत् तथापि"।

स्वप्रयोजनाभावेऽपि यथा पुरुषस्य नखलोमानि पुरुषात् सञ्जायन्ते; यथा च प्रस्तराकारेण परिणतो वृक्षांशः स्वप्रयोजनाभावेऽपि प्रस्तराकारेण वर्द्धते, यथा वा अयस्कान्तोऽश्मा स्वप्रयोजनाभावेऽपि अयः परिणमयति अयस्कान्ताकारेण, तद्वत्। न घटतेऽयमपि दृष्टान्तः, ब्रह्मणो निष्क्रियत्वादिश्रुतेः। "यथा सतः पुरुषस्य केशलोमानी"त्यादिषु श्रुतिर्ब्रह्मणो जगदुपादानत्वमेवोपदिशति, न दृष्टान्तदार्ष्टान्तिकयोः सर्वविषयसाम्यमिति ज्ञेयम्।

८। "अङ्गित्वानुपपत्तेश्च"।

ब्रह्माङ्गकल्पनायाः श्रुतिविरुद्धत्वात्। "निष्कलत्वादि" श्रुतेः "निर्भागत्वादि" श्रुतेश्च। दृश्यते हि "निर्भागत्व" श्रुत्युल्लेखः साङ्ख्यसूत्रेऽपि (५।७३)।

९। "अन्यथानुमितौ च, ज्ञ-शक्तिवियोगात्"।

अङ्गाङ्गिभावा"दन्यथाऽनुमितौ", यद्यपि मन्येत ब्रह्मण उत्पत्त्य-नन्तरं जगज्जहाति ब्रह्माङ्गत्वं भवति च ब्रह्मभिन्नं तथापि दोषान्तरं प्रसज्येत, "ज्ञ-शक्तिवियोगात्" जगतोऽचेतनत्वात्। चिद्रूपाद् ब्रह्मणोऽचिज्जगदुत्पत्तिवादो न विचारसह इति ब्रह्मणो जगद्रचना नानुमानसाध्येति निर्णया।

एतत् सूत्रस्य-"वियोगादि"ति पदप्रयोगात् समवगम्यते ब्रह्मण जगद्रचनोपपत्तिर्नानुमानसाध्येत्येतदधिकरणप्रतिपाद्यमिति। साङ्ख्य-वादखण्डनपक्षे प्रवर्त्तिते व्याख्याने कारणरूपस्य प्रधानस्य "ज्ञ-शक्ति वियोगः" कल्पनीयः। कल्पितश्च तथा भाष्यकारादिभिः। वियोग शब्दनिर्वचनात् सिद्ध्यति योगापगमनं न योगस्य प्रागभावः, यथा "पितृवियोगादिषु"। यथा च—

"वार्द्धक्ये चेन्द्रियाणां विगतगतिमतिश्चाधिदैवादितापैः।
पापै रोगैर्वियोगैस्त्वनवसितवपुः प्रौढ़िहीनश्च दीनम्॥"

इत्यादिषु च। भाष्यकारादिकल्पितार्थे सूत्रकाराभिप्रेते सति सूत्ररूपं "ज्ञ-शक्त्यभावादि"त्यभविष्यत्। "ज्ञ-शक्तिवियोगादि"तिरूपा अस्मत्कल्पितार्थः सूत्रकाराभिप्रेत इत्यायाति। चिद्रूपाद् ब्रह्मणोऽचिद्रूपं जगन्निर्गतमित्यभावनीयमतो नानुमानविषयमिति सूत्रार्थः

१०। "विप्रतिषेधाच्चासमञ्जसम्"।

ब्रह्मण उत्पत्त्यनन्तरं जगज्जहाति ब्रह्माङ्गत्वं भवति च ब्रह्मभिन्न मिति मतं "सर्वं खल्विदं ब्रह्मे"त्यादिश्रुतिविरुद्धम्। अतः "असमञ्जसम्"। अथवा परस्परविरुद्धसिद्धान्ताः प्रसज्येरन् अनुमाने ब्रह्मणो जगदुत्पत्ति-परिकल्पनात्। अतोऽसमञ्जसमिदं परिकल्पन फलमित्यादिभिर्हेतुभिर्ब्रह्मणो जगद्रचना नानुमानबलेन साधनीयेति सिद्धम्। एतदधिकरणप्रतिपाद्य तत्त्वं "शास्त्रयोनित्वादि"ति सूत्रे प्रागेव परिसंख्ययोक्तमिति रचनानुपपत्त्यधिकरणं समाप्तम्।

## सखीं प्रति श्रीराधायाः सकरुणोक्तिः

[ निबन्धकः—ॅयोगीन्द्रनाथविद्याचुञ्चुः ]

कृष्णप्रेमार्णवनिधिगतध्यानसंसक्तचित्ता
तद्विच्छेदज्वरभवमहातापशीर्णात्मदेहा ।
श्रुत्वा वेणुध्वनितमतनूद्बोधनं चक्रपाणे
राधा मन्दद्युति-सहचरीं साश्रुपातं जगाद ॥ १॥

किं ध्यायते सखि तटे तपनात्मजायाः
श्रुत्वावसीदति मनो व्यथते च चित्तम् ।
पर्य्याकुलास्मि विवशेन्द्रियबुद्धिवृत्तिः
का मे गतिः किमधुना करणीयमास्ते ॥ २

किं-निर्म्मिता सखि हरेर्मुरली विचित्रा
यत्काकली मधुमयी श्रवणैर्वधूनाम् ।
पीता सती वितनुते हृदि तापमुग्रं
दोषोऽयमस्य किमु काकलिकाभवो वा ॥ ३

यावत्तु मोहनरवः प्रविवेश कर्णौ
तावन्न धैर्य्यमवरोद्धुमलं कथञ्चित् ।
कं वा गुणं समधिरोप्य न वाद्यतेऽसौ
यन्मे दशां घटयतीदृश-शान्तिहीनाम् ॥ ४

धारा सुधारसमयी श्रुतिरन्ध्रतो मे
हृन्मध्यमेत्य कुरुते नितरामनर्थम् ।
औदास्य-मोह-भय-सङ्करभावजाड्य'
चोद्वेजयत्यतितरां मम चित्तमस्याः । ५

पृच्छापरा मम शुभे हृदयात् प्रजाता
वंशीध्वनौ कथमिदं ननु मादकत्वम् ।
संज्ञाविलोपि गुणवत्त्वमयेऽबलाना-
माधारदोष इह किं वद हेतुभूतः ॥ ६

गीतस्य शब्दमयता किल यत् प्रसिद्धा
तद्विश्वणं स्थितिपरं श्रुतिपेयमेव ।
तत्सम्भवाः कथममी चिर-तीव्रतापा-
श्चेतांसि मे विदधते विकलान्यतीव ॥ ७

सद्वंशजा कथमसौ मुरली मुरारे-
र्नारीजनस्य हृदयं हरति त्वकस्मात् ।
किं वा प्रभुर्भवति यत् प्रकृतिर्धरण्यां
तस्याश्रितोऽपि हि गुणान् भजते तदीयान् ॥ ८

सद्वंशत्वे मधुरवचने सत्यपि क्ष्मातलेऽस्मि-
न्नन्तःसारैश्चिरविरहितं निष्फलं यच्चिराय ।
नो चित्रन्तद्भवति जगतां क्लेशशङ्कानिदानं
त्वय्याद्दैणौ करुणपरता नान्तरे तन्महत्त्वम् ॥ ९

यन्नाममात्रकथनाद् भवसिन्धुगर्भात्
क्लेशोर्मिशोकवडवानलदुर्निरीक्ष्यात् ।
शान्तिं लभेत मनुजश्चिरदुःखभोगी
तापं ददाति किमु तन्मुरलीद्दशं नः ॥ १०

स्वान्तं ध्वान्तमयं निरन्तरमये बुद्धिर्जडत्वं गता
नेत्रे कृष्णमयं दिगन्तगगनं भास्वत्सुतायास्तटम् ।
ईदृचेते सखि मे प्रशाधि चपलं कार्य्यं मदीयं ध्रुवं
शान्तिर्भ्रान्तिसरित्प्रवाहकलुषा मोहाम्बुधौ धावति ।११

प्रकाश्यते श्रीहरिपदभारतीशर्म्मणा ।

---

# रजनी

( पूर्वतोऽनुवृत्ता )

[ निबन्धिका—श्रीमती रेणुदेवी ]

एकदा निशीथसमये विपुलेयं वसुन्धरा विशुष्का बदरीव क्षुद्रतरतामासादितवती। न क्वापि मया निगूहनस्थानं लब्धम्। ततः प्रभृति देशेषु परिभ्रमणव्रतमेव मया गृहीतम्।

अथ क्रमेण भगवतः सर्वहरस्य कालस्य महिमातिशयः शीतलविलेपनसम्बन्धेनेव मम तादृशमतिदुरपनेयमपि हृदयक्षतं शनैः शनैः उपशमयामास।

अथ काशीधाम्नि गोविन्दकान्तदत्तो नाम कश्चन सच्चरित्रः सम्मानितो जनो बहुकालात् प्रतिवसति। तेन सह जातपरिचयस्य मे कदाचित् कथोपकथनप्रसङ्गेन राजपुरुषाणाम् अत्याचारप्रकर्षप्रसङ्गः समुपस्थितः।

तत्रोपस्थिता बहव एव तेषाम् अत्याचारकथामपरिमितां वर्णयामासुः। काचन कथा सत्यभूता, काचन कल्पनामात्रप्राणा प्रस्तुता। गोविन्दकान्तोऽपि कथामिकां कथयामास। तस्या अयं सारसंक्षेपः। "हरेकृष्णदासनामा कश्चन दरिद्रः कायस्थोऽस्माकं ग्राममध्युवास। तस्य तावदेकैव दुहिता मातृहीना, स च रोगेणाक्रान्तः। अतः स तां कन्यां प्रतिपालयितुं श्यालिकापतेर्हस्तगतामकरोत्। आसंश्च तस्य कन्यकायाः कतिचित् स्वर्णाभरणानि। लोभात् तानि न श्यालीपतेर्हस्तगतान्यकरोत्। स च मृत्युम् उपस्थितं परिज्ञाय तान्याभरणानि मयि न्यासीकृत्य समुवाच—समुत्पन्ने बोधविकाशे भूषणान्यमूनि मम दुहितुः प्रदेयानि, अन्यथा ग्रहीष्यति राजचन्द्रः। एवं प्रतिपन्ने मयि

मृते च तस्मिन्, निर्दायोऽयमिति नन्दिकेश्वरप्रभृत्यशेषप्रमथपरिवार-वेष्टितः समुपगतो देवदेवः शान्तिरक्षकपतिः। तेन च तस्य जलपात्रादिकं स्वल्पं वस्तुजातं सर्वमेव निःस्वामिकमिति कृतं हस्तगतम्। कैश्चित् अभिहितं, वर्त्तते तावदस्य हरेकृष्णस्य काचन कन्या कलिकातानगर्य्याम्। सा चास्य दायमर्हतीति। शान्तिरक्षकास्तु तान् निर्भर्त्स्य प्रोचुः, स्थितश्चेद् दायादः कश्चित् स कथं न समागत इति। तदा मम शत्रुभूतः कश्चित् तमुक्तवान् यत्, गोविन्ददत्तसमीपे मृतस्य स्वर्णाभरणानि वर्त्तन्त इति। स च मां समाह्वयत्। अहञ्च तेनाहूतो देवादिदेवसमीपमागत्य विहिताञ्जलिरतिष्ठम्। तिरस्कारवाचश्च काश्चिच्छ्रुतवान्। अभियुक्तश्चास्मि। निरुपायेन च मया समर्पितानि तान्याभरणानि तस्य पादपद्मयोः। ततश्च दक्षिणामुपाहृत्य मुद्राणां पञ्चाशतं लब्ध्वा कथञ्चिन्निष्कृतिः। स च शान्तिरक्षकपतिस्तान्याभरणानि स्वदुहितुर्व्यवहाराय स्वालयं नीत्वा स्वप्रभुं प्रति विज्ञापितवान् यत्, निर्दायादस्यास्य मृतस्य घटीमेकां दीपाधारञ्चैकं विना नान्यत् किञ्चिदस्तीति।" श्रुतञ्च मया प्रसङ्गान्तरे हरेकृष्णस्य नाम। ततोऽहं गोविन्ददत्तमपृच्छम्। "किमस्यैव मनोहरदासो नाम कश्चित् सहोदर आसी"दिति। "वाढ़मेवं, किन्तु कथं त्वया ज्ञायत"इति तेनाभिहितो न काममपि प्रतिवाचमदाम्। भूयश्च अपृच्छं "किं तावत्तस्य श्यालीपतेर्नाम" ? स प्रत्युवाच, 'राजचन्द्रदास' इति। मया च भूयः 'क्व तस्य वासस्थान'मिति पृष्टः स, 'कलिकातायां स निवसति किन्तु कस्मिन् स्थान इति तु मया विस्मृत'मिति प्रोक्तवान्। पुनरपि मयाभिहितं 'किमस्य दुहितुर्नामधेय'मिति। स प्रोवाच 'रजनी'ति। अथ स्वल्पेनैव कालेन अहं परित्यक्तवान् वाराणसीम्। प्रथममेव मया तावदिदमवधारयितव्यं यन्मया किमन्विष्यत इति। मम चित्तं दुःखसंकुलं, संसारस्य तमसा ग्रस्तः। अद्यैव चेन्मरणमासादयेयं नाहं स्वस्त्वत् कामये। यदि च दुःखमेव निरन्तरमनिवारितं वर्त्तते, कस्तर्हि मयि पुरुष-

कार: ? चिकित्सायाः प्रागेव विधेयो रोगनिर्णयः। दुःखनिवारणाच्च प्रागेव युक्तं दुःखस्वरूपं निरूपयितुम्। किमिदं दुःखं नाम ? अभाव एव दुःखस्वरूपमिति। स्वास्थ्याभावस्वरूपो रोगो दुःखमेवेति नहि सर्वं एवाभावो दुःखमिति तु जानामि, रोगस्याभावस्तु न दुःखमिति किन्तु अभावविशेषस्यैव दुःखरूपतेति। मम तर्हि कस्यायमभावो वर्त्तमानो मां दुःखयति ? किमहं प्रार्थये ? कोऽयं वा मानवानां प्रार्थनाविषयः ? धनमेव किम् ? तत्तु मे प्राचुर्य्येण वर्त्तते। अथ यशः ? पृथिव्यान् एतादृशो न वर्त्तते कश्चिद्, यः सर्वथा यशसा परिहीनः। प्रवञ्चकप्रवरोऽपि बुद्धिप्रकर्षजातस्य यशसो भाजनं भवति। मांसविक्रयिणोऽपि यशः श्रूयते यत्, स मांसे न कञ्चन वञ्चयते, कदापि मेषमांसमिति न सारमेयमांसं विक्रीणीते। सर्वेषामेव यशो वर्त्तते। न तु कस्यापि यशः सर्वथा परिपूर्णतां प्राप्तम्। वेकनाख्यस्तावदुत्कोचग्राहीति दुर्यशो लेभे। सक्रेटीगाख्यश्च दुर्यशोहेतुं प्राणदण्डमाससाद। तथा धर्म्मराजस्यापि द्रोणवधे मृषाभाषित्वं जिष्णोश्च स्वात्मजात् पराजयः। एवमन्येषामपि यशस्विनां तेषु तेषु व्यापारेषु दुर्यशो विदितमेव; यशो न मे प्रार्थनीयम्। तद्धि साधारणानाम् एव नराणां मुखेषु प्रसरति। ते हि मूर्खाः स्थूलबुद्धयश्च न प्रशंसोच्चारिणः। का नाम स्थूलबुद्धीनां मूर्खाणां वा यशःप्रचारेण मे सुखसमृद्धिः।

अतो न मे काम्यं यशः। नापि मानो मे कामनाविषयः। संसारेऽस्मिन् कस्तावदेवं वर्त्तते येन सम्मानितः सुखी भवेयम्। ये च हिंस्रा वर्त्तन्ते, तेषु सम्मानोऽपि सुप्रतिष्ठितो मे वर्त्तत एव। अन्यैर्विहितो मानस्तावदपमान एव। राजसभायां सम्मानोऽपि केवलं दास्योत्कर्षचिह्नमेव। न मे काम्यो मानः। आत्मनि सम्मानस्तु सदैव मे कामनाविषयः। रूपं वा कियत् काम्यम् ? स्वल्पमेव नाधिकं, यथा न मां विलोकयन् कश्चिदपि निष्ठीवति। न च कश्चित्

तथा करोति। मयि प्राचुर्य्यं वर्त्तते रूपस्य। स्वास्थ्यन्तु तावदद्यापि मय्यनन्तमेव वर्त्तते। बलमपि केवलं परपीडनायैव अपेक्ष्यते। न च वाञ्छितं मे परपीडनम्। इह जगति बुद्धिरपि तथा प्राचुर्य्येण वर्त्तते यथा सोऽपि कदापि न तस्या अभावमनुभवति। सर्व्व एव जना आत्मानं बुद्धिमन्तं मन्यन्ते। तथैवाहमपि मन्ये। जानामि नास्ति मे विद्येति। न तु तदभावेन कश्चिदपि आत्मानम् असुखिनं मन्यमानो दृश्यते। न हि विद्याभावो मां दुःखयति। धर्म्मस्तु परत्रैव सुखनिदानं, नेह जगति। जनचरित्रवेदिनो धर्म्माभावमेव दुःखं मन्यन्ते। जानामि मृषैवैतत्। जानतोऽपि न मे धर्म्मकामना। न मे तथा वा दुःखम्।

प्रणयो वा स्नेहो वा अन्यत् वा किञ्चित्, एतेषामभावमेव सुखमवैमि। प्रेमैव दुःखम्। लवङ्गलता तत्र प्रमाणम्।

एवञ्चेत् कथं मे दुःखम्? कस्याभावो मां व्यथयति? कथं मे कामना, यां सफलयन् अपनयामि दुःखम्? किमिदं मे काम्यं वस्तु?

एतत्तु समवगतं, काम्यवस्तुनोऽयमभाव एव दुःखम्। एतदप्यवगतं सर्व्वमेवेदमसारमिति केवलं मम दुःखमेव सारभूतम्।

# मनोदूतम्

चैतन्यदेवमातुल-कवीन्द्र-विष्णुदासविरचितम्

[ श्रीचिन्ताहरणकाव्यतीर्थ (एम्-ए) सम्पादितम् ]

## भूमिका

इतः पूर्वमेव संस्कृतसाहित्ये दूतकाव्यस्येतिवृत्तमवलम्ब्य कथञ्चिद् विस्तरत एवास्माभिः कृता काचनालोचना। (१) तत्र चास्माभिः प्रतिपादितं यत् कालिदासोपज्ञमीदृशं काव्यम् अर्वाचीनैरनेकैरेवानुकृतं कविभिः। तथा च प्रायेण पञ्चाशदेव दूतकाव्यानीदानीमासाद्यन्ते प्राचीनान्येव। आधुनिकैस्तु साम्प्रतिकेऽपि काले प्रसूयन्ते काव्यान्येवंविधानीति न नामानवगतं सुमनसाम्।

न च सकलान्येव दूतकाव्यानि गुणादिमत्तया सामाजिकानां चेतांसि समाकष्टुंमलम्भवन्ति। परं गुणभूयिष्ठानि कष्टकल्पनादिदोषविशेषसमाक्रान्तानि च तेषु कानिचिदिति वैचित्र्य सुमहत् एव विलसति। तथा च—आदौ शृङ्गाररसात्मकस्य वस्तुनः शान्तरसात्मकतया परिणमनं परममेकं वैचित्र्यपदम्। जैनकविनिबद्धेषु च ग्रन्थेषु जैनमेघदूतादिषु विशेषेणेदम् उपलभामहे। न चेदृशस्य वस्तुनः कश्चिदप्यासीदभावो ब्राह्मण्यधर्ममालम्बमानेषु। तत्र मनोदूतादीन्येवोदाहरणरूपेणोपस्थाप्येरन्।

मनोदूताख्यानि च पञ्चषाणि काव्यान्युपलभ्यन्ते। तेष्वेकं त्रैलङ्गव्रजनाथ-कृतम् काव्यमालायास्त्रयोदशगुच्छे प्राकाश्यं नीतम्। एकं मनोदूताख्यं जैनं काव्यं जैनग्रन्थावल्यां ( Jain Svetambar Con-

---

(१) संस्कृतसाहित्यपरिषत्पत्रिका ( अष्टमाब्दे २७५-२८० पत्राणि ) तथा (दशमाब्दे १४५-१५१ पत्राणि )। Indian Historical Quarterly (तृतीयखण्डे २७३-२८७ पत्राणि)।

ference, Bombay इत्यतः प्रकाशितायां ) ३३२ तमे पत्रे निर्दिष्ट-मास्ते। एकं मनोदूतकाव्यं कश्मीर-रघुनाथमन्दिरग्रन्थागारे विराजते। अन्यत् चैतन्यदेव-मातुल विष्णुदास-वंशोद्भव-रामराम-द्विज-निर्म्मितं वङ्गीयसाहित्यपरिषद्ग्रन्थालये वर्त्तते। अपरं च विष्णुदास-निर्म्मितं सुमनोहरं वस्तु। अनन्तरनिर्दिष्टं द्वितयमत्र प्राकाश्यं नीयते आदौ।

तत्र च प्रबन्धद्वितये पुरुषेण मनसो दूतरूपेण कृष्णसमीपे प्रेषण-मेव विषयीक्रियते काव्यस्य। विष्णुदासकृतं च काव्यं सारल्येन वस्तुमाहात्म्येन कवित्वेन च सुतरामेवावर्जयति रसिकानां चेतांसि। चैतन्यसम्बन्धश्च नाल्पमुपयोगमावहेदेतत् सम्प्रदायविशेषेषु वैष्णवानाम्।

विष्णुदासेनैतत्काव्यमुपायनीकृतं स्वजामात्रे कृष्णार्जुनीयाख्य-काव्यकर्त्रे कवये श्रीमते गोपीनाथकविकण्ठाभरणायेति प्रसिद्धिः कविकण्ठाभरण-वंशप्ररोहेषु पूर्ववङ्गीय-धानुकाप्रदेशीय-वैदिक-कृष्णा-त्रेयगोत्रीयाग्रजन्मसु। परं दौर्भाग्यतो नः पदार्थान्तरमिव पुस्तक-मेतदपि गोपीनाथवंशीयेषु विभागमभजत। तत्र चार्द्धमात्रं परिषदा-धिगतम् २६श-श्लोकं यावत्।

विष्णुदासकृतकाव्यपुस्तकत्रितयमासादितमस्माभिः। तत्र प्रथमं संस्कृतसाहित्यपरिषत्स्थं खण्डितम् अशुद्धञ्च। द्वितीयम् 'इण्डिया अफिस्' पुस्तकागारतो लब्धं नातिशुद्धम्। तृतीयं च कथञ्चित् शुद्धं ढाकाविश्वविद्यालयतोऽध्यापक-श्रीयुक्त-सुशीलकुमारदे-महोदयस्य साहाय्येन समधिगतम्। एतत्त्रितयतुलनेन निर्द्धारितो मूलपाठः। परं न चैतावतापि निःसंशयं सर्व एव निर्द्धारिताः पाठा इति शक्यते कथयितुम्। पादटीकायां च यथाक्रमं P., I., D. इति सङ्केत-निर्देशपुरःसरं तत्तत्पुस्तकगताः समुल्लिखिताः पाठभेदाः।

साम्प्रतञ्च पाठकमहाभागा एवास्य गुणागुणविचारे प्रभव इति विरमामो मुखबन्धबाहुल्यात्।

निर्वर्ण्य तानि रहसि स्वयमर्जितानि
भूयस्तराणि दुरितानि सुदुःसहानि ।
श्रुत्वा च कालविहितान्यवशेन्द्रियाणां
दुःखान्यचिन्तयत कश्चन विष्णुदासः ॥ १ ॥

इष्टो धनैः शमदमादिभिरेव योगः
च्यान्त्या तपो बहुविधं भ्रमतश्च तीर्थम् ।
तत् किं करोमि विकलोऽहमितः क्व यामो-
त्येवं विलप्य शरणं हरिमालुलोचे ॥ २ ॥

यत्पाद-तामरस-लालस-मानसास्ते
भ्रान्त्यापि कर्णपदवीं न नयन्ति सन्तः ।
वृन्दारकप्रकरमौलि किरीट-कोटि-
रत्नांशुरञ्जितपदं पदमामरेन्द्रम् ॥ ३ ॥

तस्मात्तमेव जगदण्डपरार्द्धकोटि-
कोटीशितारमकुतोभयदं नतानाम् ।
सर्वात्मनेह शरणं करवाणि वाणी-
प्रेयांसमास्पदमशेषसमोहितानाम् ॥ ४ ॥

---

2. a इष्टो—P, I. इष्टा—D. d-शालुलोचे—P. -मालुलोचे—D. -मालुवोचे—I.

3. a-सास्ते—D, I. -सन्ते—P. b-न नयन्ति—D. ननयन्ति—I. d. -रञ्चित—P. -रञ्जित—D, I.

4. d. -श्रेयां—I. -प्रेयां—D, P.

योग्यं न कालहरणं मरणञ्च जन्तो-
रावश्यकं जगति कः खलु कस्य बन्धुः ।
बद्धः स्वकर्मनिगडैश्चलितुं न सेहे
प्रस्थापयामि तदिदं मन इत्यमंस्त ॥ ५ ॥

नानाविधेषु विषयेषु निमग्नमुच्चै-
स्तुच्छीकृताबलविवेकबहुप्रयत्नम् ।
उक्तं किमत्र रमसे विरमेति वारं
वारं तथापि हृदयं प्रविवेश तेषु ॥ ६ ॥

नीचाति-नीच-रस-नीरतमीहमानं
क्रोधादिकं गतकृपं निरपत्रपञ्च ।
यत्नाच्चिरं सुजनसङ्गमतः कथञ्चि-
दानीय नीतिवचसा मन इत्युवाच ॥ ७ ॥

एकं त्वमिन्द्रियगणस्य मनो वरीयः
पारन्तथा जगदुपैति तव प्रशक्त्या ।
इत्यर्थये प्रणतिपूर्वकमानुकूल्यं
नो चेत् करोषि मम तादृशमेव कर्म ॥ ८ ॥

---

5. c-बद्धः—D. बन्धः—I. बन्धु—P. d. इंमन—D, I, मंसन—P. -मंस्त—I. -मंस्त—D. P.

6. b. -विवेक—D, I. -विवेकेन—P. c -रमसे—D, I. -मवसे—P.

8. a तथापि—P. तथा—D, I. -शक्त्या—I. -मत्या—P. -सत्या—D c. -पूर्वं—I. पूर्वक—D, P.

सर्वानपास्य विषयान् क्षणमेव ताव-
च्चेतोऽवधेहि करुणाकणिकां विधेहि ।
आर्त्तस्ततः कतिपयानि निवेदयामि
नो चेदरण्यरुदितं किमिदं करोमि ॥ ९ ॥

आ जन्मनस्तव मनः प्रतिपालयन्तः
प्रायः समीहितमसुं समयं नयामः ।
अस्माकमेकमिदमेव मुकुन्दपाद-
पद्मं व्रजेत्यभिमतं सफलं कुरुष्व ॥ १० ॥

चेतस्त्वमेव परिचिन्तय तावदेतत्
संसार-जर्ज्जरवने भ्रमणेन किं स्यात् ।
वाञ्छाधिकाधिकसमीहितसिद्धिधाम
नामापि ते न विदितं किमु माधवस्य ॥ ११ ॥

अव्याहतेन्द्रियततिर्ज्जगतीत्रयान्तः
कस्तादृशः कथय मानस कुत्र जातः ।
निर्व्वर्ण्य सर्व्वमनवद्यमिदं मुरारे-
र्यत् किञ्चिदन्यदपि वस्त्वनुसन्दधासि ॥ १२ ॥

जातः स एव सुकृती सफलं जगत्यां
तेनैव रत्नजननी जगती जनेन ।
एतद् य एव हि नभःकुसुमोपमेयं
गेयं कुधीभिरवधार्य्य परं परेति ॥ १३ ॥

---

**9.** a -तोव—I, P. -तोवि—D.
d. चेद्वर्णा—P. -चेद्रण्य—I, D.

**10.** a. मसुं—D, I. -मनुं—P.

**12.** b. -स्त्वा—D, P. -स्ता—I. c. -वेद्य—I. -वद्य—D, P.

**13.** a. सफलं—D, P. सकलं—I. d. कुधी—I, P. सुधी—D

तं वीक्ष्य नील-नवनीरद नीलकण्ठ-
कण्ठेन्द्रनीलधरणीधरमेदुराभम् ।
कारुण्यनीरनिधिमम्बुधिमद्भुतानां
नानाविधं विधुरसुज्झसि किं नु चेतः ॥ १४ ॥

न व्याहृतः क्वचन ते विषयस्त्रिलोक्या-
मध्वानमाब्धिकमुपैषि निमेषतोऽपि ।
जानासि मद्व्यवसितानि मनो विना त्वा-
मार्त्तेन कः कथय दूतपदे नियोज्यः ॥ १५ ॥

नाहं मुकुन्दपदवारिरुहं प्रयामो-
त्युक्तोऽपि कः कथय हन्त करोतु किन्ते ।
यातव्यमेव यदि वा निरनायि किं तद्
आलम्बितेन हृदयातिविलम्बितेन ॥ १६ ॥

प्रायस्त्वया न परिचीयत एव तावत्
पन्थाः कदाचिदिति मानस मा विषीद ।
उच्चैस्तरः सकलतापनिवारहेतु-
र्यास्यत्ययं परिचयं स्वयमेव यस्मात् ॥ १७

एवं यथाश्रुतमनेन पथा प्रयत्नात्
स्मुखेन पुण्यचरितैरकुतोभयेन ।
साकं शमेन च दमेन च याहि चेतः
प्रायो न वेद पथि खेदमनर्घ्यसत्त्वो ॥ १८

-भार्य्यं—P. I. -धैर्य्यं—D अनन्तरे च पुस्तके पत्रकोणे (margin) 'धा' इति संशोधितम् आस्ते ।

*14. a -राज्ञ—I. राभं—D, P. c. -मम्बुधि परिषत् पुस्तके त्रुटितमेतत् ।

15. a अव्या—P. न व्या—D, I.

16. a मुरारि—D. b. त्वं पुनः—D. करोमि—D.

18. a मनः श्रुतम्—D. -नेकमथ—D, b. चरिताद्—D.

मात्सर्य्य-दम्भ-मद-मान विमोह-लोभ-
क्रोध-भयादि विरहय्य समस्तमेव ।
यातव्यमाप्तवचसा हृदयाद्दवीन
सत्यं कुसङ्गमधमं जनमापदेति ॥ १९ ॥

श्रान्तं मनःसरितमार्य्यजनेन पीतां
गीतामनन्तमहनीयरसाभिगीताम् ।
यत्नादनन्तमवगाह्य निरस्तपापं
तृष्णा-तरङ्ग-लहरीकमथ प्रयाहि ॥ २० ॥

आश्रैशवं मयि चिरं परिवर्द्धमान-
स्त्वेमानमाव हसि न क्वचनेति दूये ।
तत्साधुजामतिरसां जगदेकवन्द्यां
विन्द चमां हृदय सम्प्रति निह्नुणोमि ॥ २१ ॥

तत्रः प्रियात् प्रियतरां यदि तां दयाञ्च
तस्याः परां सहचरीमुररीकरोषि ।
सा सर्वभूतनिचयेषु मनो नियुक्ता
कस्ये मुदे न भविता चमया चमान्ते ॥ २२ ॥

---

19. a लोभ—D. लोभा—I.

20. a भ्रान्त—D. श्रान्त—P, I. -जनेन—D, I. कुलेन—P. b. गीता—D. I, पीता—P, -तिग्नीतां··D, P. c. -दमन्द—D,P, d. -मथ—D, ·मह—P·

21 a नहि—P, मयि—D, I. b. स्ते—I, स्थे—D. c. साधुतां—P साधुजां—D, I, d. निर्धृणोति—P, निर्वृणोमि—D,I,

22. a करोमि—I, करोषि—D, P. d. कस्यै—D, कस्मै—I, -स्ते—I, न्ते—D. मान्ते—P.

आप्नोति या तत इतः परितो नटन्ती
तावत्त्वमेव दधती किमपि क्षमायाः ।
आक्रम्य सर्वत इमां मुरवैरि-पाद-
पद्माश्रयां घटय संभ्रमशोच्यमस्तु ॥ २३ ॥

प्रायः क्षमातिशयमानवती न रूढ-
प्रेमा प्रयाति पुनरस्थिरतां नवोढ़ा ।
तस्माद्विधेयमिदमेव मनः प्रयत्नाद्
विश्लेषलेशमपि नेयमुपैति यस्मात् ॥ २४ ॥

ब्रह्माण्डमण्डलमहेन्द्रमहं कुतो वा
द्रक्ष्यामि देवमिति विप्रतिपद्यसे किम् ।
सोऽयं विभुर्विषयसङ्गमपास्य यत्र
यत्राभियुक्तमसि तत्र पुरस्त एव ॥ २५ ॥

तत्रापि तावदवधारय माधवस्य
क्रीडानिकेतनमनर्घ्यतमं दिवोऽपि ।
यस्मिन्विनाय समयं शमयञ्जनानां
कर्म्माणि कर्म्मभिरनेकगुणैर्मुरारिः ॥ २६ ॥

गोगोपगोपतनुगोपसुतासुतेन
रम्येण सम्यगनुरञ्जितसंविभागम् ।
क्ष्मामण्डलीमुकुटमण्डलरत्नमास्ते
जानीहि गोकुलमनाकुलसर्वलोकम् ॥ २७ ॥

(सावशेषम्)

# इन्द्रप्रस्थम् ( देहली )

[ निबन्धकः—अध्यापकः श्रीनरेन्द्रनाथचतुर्धुरीणः, एम्. ए ;
काव्य-व्याकरणतीर्थः । ]

इह खलु भारते वर्षे देहली महानगरी नितरां प्रसिद्धिमुपगता। इयं हि साम्राज्य-लक्ष्म्याः प्रधानं लीलाचैत्रम् । 'नलिनीदलगत-जलमिवातितरला राजलक्ष्मी'रिति नगरीयं सुतरां प्रतिपादयति। इयं हि बहूनां पृथ्वीश्वराणां समुत्थानस्य पतनस्य च चिह्नजातं वक्षसि धारयन्ती प्रबलं काल-विलासं दर्शयति। अत्र तावत् संस्थापितानां राजभवनानां ध्वंसावशेषं पश्यतां जनानां मनसि—"देहली खलु प्राच्य-साम्राज्यमहाश्मशान"मिति सत्यं समुदेति।

पुरेयं नगरी इन्द्रप्रस्थनाम्ना संस्तुतासीत्। इदं महाभारते समुपवर्णितमस्ति यत्, पुरा पाण्डुतनया धृतराष्ट्रेण समनुज्ञाता यमुनायाः पारे, घोरमरण्यं खाण्डवप्रस्थमागत्य तत्र मनोरमं नगरं स्थापयामासुः। तथा च भारतम्—

> "प्रतिगृह्य तु तद्वाक्यं नृपं सर्वे प्रणम्य च।
> प्रतस्थिरे ततो घोरं वनं तन्मनुजर्षभाः॥
> अर्द्धं राज्यस्य संप्राप्य खाण्डवप्रस्थमाविशन्।
> ततः पुण्ये शिवे देशे शान्तिं कृत्वा महारथाः।
> नगरं स्थापयामासुर्द्वैपायनपुरोगमाः॥" इति।

अथ तन्नगरं परिखाभिः प्राकारै रथ्याभिर्भवनैश्च समलङ्कृतमात्मनः शोभासम्पदं परितः प्रकटयामास। तथा च महाभारतस्यादिपर्वणि वर्णितम्—

"सागरप्रतिरूपाभिः परिखाभिरलङ्कृतम् ।
प्राकारेण च सम्पन्नं दिवमावृत्य तिष्ठता ॥
सुविभक्त-महारथ्यं देवतावाधवर्जितम् ।
विरोचमानं विविधैः पाण्डुरैर्भवनोत्तमैः ॥" इति ।

अथैकदा भगवति वह्नौ दहति खाण्डववने, तत्र निवसतो मयस्य प्राणा अर्जुनेन रक्षिता आसन् । दानववरो मयोऽपि प्रत्युपचिकीर्षुः पाण्डवानां कृते, तत्र महतीमेकामनुपमां सभां चकार। तथाच भारतम्—

"प्रतिगृह्य तु तद्वाक्यं सम्प्रहृष्टो मयस्तदा ।
विमानप्रतिमां चक्रे पाण्डवस्य शुभां सभाम् ॥
तदाहृत्य च तां चक्रे सोऽसुरोऽप्रतिमां सभाम् ।
विश्रुतां त्रिषु लोकेषु दिव्यां मणिमयीं शुभाम् ॥" इति ।

पाण्डवाश्च तत्र वासं परिकल्प्य राजसूयं महायज्ञं विदधुः, परया शान्त्या कञ्चित् कालं कलयामासुश्च । अथ द्यूतनिर्जितेषु वनं गतेषु पाण्डवेषु, तस्याः सभाया रमणीया दिव्या शोभापि शनैः शनैर्व्यलीयत । ततः कुरुक्षेत्र-महासमरात् परं जयश्रीसमुद्भासिताः खलु पाण्डवाः प्राचीनां कुरुराजधानीं हस्तिनामेव समलञ्चक्रुः । इत्थमिन्द्रप्रस्थं क्रमेण हतलक्ष्मीकमेव जातम् । अधुनापि यमुनायास्तीरे किञ्चित् स्थानमिन्द्रप्रस्थनाम्ना समुन्नीयते। तत्र च भग्नप्राकारवेष्टितः कश्चिद् भूभागः पाण्डवानां सभास्थानमिति लोकैः सम्प्रत्यपि निर्दिश्यते। मोगलवरः सम्राट् हुमायुनस्तु अस्मिन्नेव प्राकारवेष्टिते स्थाने राजधानीं स्थापयामास। अधुना तु भग्नप्राकारमध्ये प्राधान्येन गृहद्वयमेव वर्त्तते। तत्रैकं हुमायुनस्य पाठागारतामन्यच्च महम्मदीयानामुपासनागृहत्वं लम्भितम्। अत्रैव द्वितले पाठागारे अध्ययननिरतो हुमायुनः, अन्तिकस्थादुपासनाभवनादुपासनाह्वानमाकर्ण्य त्वरयावतरन्, भागधेयवकत्ववशादेकस्मात् सोपानात् प्रभ्रष्टः, अचिरेणैव कालेन पञ्चत्व-

-मवाप च। एतद् गृहमेव पाण्डवानां 'हवनगृह'मिति निर्दिश्यते तावदत्रस्थितैर्निर्देशकैः। गृहस्यास्य निपुणमवेक्षितात् संस्थान-विशेषात् तादृगनुमानं नामूलकं प्रतिभाति।

मस्जिद-निकेतनं तु पाण्डवानामुपासनागारमासीदिति घोष्यते। अत्र गृहे पञ्चासनानि वर्त्तन्ते। श्रूयते च यत्, पाण्डवा यमुनायां स्नानं समाप्य तेष्वासनेषु उपविश्य सन्ध्यादिकं व्यधुः। गृहस्य पुरतः सूर्य्यकुण्डनामधेयं किञ्चित् कुण्डमपि दृश्यते। प्रासादस्यास्य निर्माणशैली, कारुकार्य्यम्, उपकरणानां प्रस्तरादीनां प्राचीनत्वं च जनवादं समर्थयन्त एव। मस्जिदभवने पञ्चानामासनानां समावेशः कुत्रापि न दृश्यते। तद्गृहं तानि चासनानि महम्मदीयभावानुगुणं परिवर्त्तनजातमुपगतानीति स्पष्टमेव। तथापि तेषां हिन्दुभावानुविद्धत्वं कथमप्यपह्नोतुं न शक्यते। तत्र प्राङ्गणे एकः कूपोऽपि विद्यते। स च द्रौपद्याः स्नानार्थं खात आसीदिति श्रूयते। अपि च पाण्डवप्रासादान्मथुरां यावत् कश्चिद् बिलमार्गोऽपि समवलोक्यते, परन्तु राजशासनात् स साम्प्रतमवरुद्धद्वारः कृतः। पाण्डवजनन्याः कुन्त्याः काचित् पाषाणमयो मूर्त्तिरप्यत्र लब्धा। कश्चित् लिङ्गरूपः शिवोऽपि अत्रैकस्मिन् मन्दिरे प्रतिदिनं पूज्यते। प्राकाराद् बहिर्भैरव-मन्दिरमप्यस्ति। तत्र भैरवविग्रहोऽपि विराजते।

परन्त्वस्मिन् विषये ऐतिहासिकानामैकमत्यं नास्ति। केषाञ्चन मतेन पाण्डवप्रासादानां चिह्नमपि इन्द्रप्रस्थे साम्प्रतं नोपलब्धुं शक्यम्। विजयि-राजसार्थैस्तत्सर्वं नाशितमात्मसात्कृत्य योजितञ्चेति।

अथेन्द्रप्रस्थात् कियत्यपि दूरे अनङ्गपालस्य पृथ्वीराजस्य च राजधानी आसीत्। अनङ्गपाल एव देहलीतिनाम्नः प्रवर्त्तक इति गीयते। जयचन्द्र-पृथ्वीराजयोर्वैरमधिकृत्य भगवता महाकालेन भारतस्य यस्तावद् भाग्यविपर्य्यासो विहितः, स तु श्रीमतां विदित एव। महम्मदघोरिणा कुरुक्षेत्र-समरभूमौ जिते पृथ्वीराजे देहल्यां

हिन्दुराज्यावसानं जातम्। पाठान-नृपवरेण च पृथ्वीराजभवनमधिकृतम्, राजधानी च तत्र स्थापयाञ्चक्रे। तद्भवनं हिन्दुचिह्नजातं परित्यज्य क्रमेण विजयि-राजविभूतिमेव दधार। अथ गच्छति काले पाठानमहीधराणां केचन पृथ्वीराजभवनं परित्यज्य, अन्तिक एव रम्यां राजधानीं कल्पयामासुः। इत्थं पृथ्वीराजभवनं शनैः शनैर्ध्वंसमेवाभजत। साम्प्रतमपि तत्र पृथ्वीराजकृतस्य मन्दिरस्य अङ्गविशेषमात्रमेव दर्शकानां चेतसि तत्कालीन-कथामुद्बोधयति। अद्यापि तत्र कश्चिन्निर्मलो लौहस्तम्भो दृश्यते। स हि हिन्दूनां रसायनविद्यापारीणत्वं सुष्ठु प्रतिपादयति। केचन कथयन्ति यदयं स्तम्भो भूपालेन खलु अनङ्गपालेन कारित आसीत्। चित्रमेतद् यदयं स्तम्भो बहुतिथे काले गतेऽपि न मालिन्यलेशमपि स्पृशति।

अथ कुतवस्तम्भस्तु श्रीमतां विदित एव। श्रूयते यदयं स्तम्भः पृथ्वीराजमहिष्याः संयुक्ताया यमुनादर्शनार्थं निर्मापितः।

अथ पाठान-राज्यप्रारम्भे कुतवुद्दिनस्तु परिवर्त्तनादिना आत्मनाम्नास्य निर्देशमकार्षीत्। ततः प्रभृत्ययं कुतवस्तम्भ इति नाम्ना बोध्यते। अस्यापि निर्माणविशेषदर्शनेनानुमीयते यदयं स्तम्भोऽपि हिन्दुराजेनैव निर्मापितः। साम्प्रतं पृथ्वीराजदुर्गस्य सीमानिर्देशः पुरातत्त्वविद्भिः कृतः। दुर्गाभ्यन्तरे योगमायादेवीस्थानमपि वर्त्तते। परन्तु साम्प्रतं समन्ताद् दुर्गस्य भग्नस्तूपनिचयो दर्शकानां चित्तं निरतां दुःखसन्तानसन्दानितमेव विदधाति। एवञ्च तोगलकावादनामधेया यात्र तोगलकराज-राजधानी दृश्यते, सापि भग्नप्राकारराजिनिचिता "कालो हि बलवत्तर" इति कालस्य सार्थक्यं प्रतिपादयति।

तथा च साधूक्तम्—"यदुपतेः क्व गता मथुरापुरी, रघुपतेः क्व गतोत्तरकोशला। इति विचिन्त्य कुरुष्व मनः स्थिरं, न सदिदं जगदित्यवधारय॥" इति।

अथ मोगलभूपालानां वासनगरी तु इन्द्रप्रस्थं निकषा, यमुनाया-

स्तीरे पर्वतोपरि स्थापिता। कालवशादियमपि साम्प्रतं दर्शकेभ्यो मोगलसाम्राज्य-सौभाग्य गर्वस्य निदर्शनमात्रं प्रकटयति। अधुनास्तं गतेऽपि मोगलसाम्राज्यरवौ, प्राचीनकीर्त्तिसंरक्षणपरा महानुभावा आङ्गलराजेश्वरा मोगलराजभवनादिकं ध्वंसापचयाद्युपप्लवाद् रक्षितुं विधानमारचितवन्तः।

अथेयं मोगलराज-राजधानी महद्भिः प्राकारैर्यमुनया च परिरक्षिता। समन्ताद् नगरप्रवेशाय समुन्नतानि तोरणानि वर्त्तन्ते।

तेषां च 'देहलीद्वारम्', 'अजमीरद्वारं', 'लाहोरद्वारं', 'काश्मीरद्वार'मित्यादि युक्तं नामधेयमपि कृतमासीत्। नगर्य्याः पूर्वस्यां दिशि यमुनायास्तीरे मोगलराजवासो वर्त्तते। तत्र च प्रथमं सुदीर्घं वक्रं च प्रवेशद्वारमस्ति। ततो रम्यं सङ्गीतगृहं दृश्यते। तस्य पुरतः सभामण्डपं विलसति। तत्र हि सम्राजः कृते कारुकार्य्यखचितं समुन्नतं सिंहासनपीठमद्यापि राजते। तस्य पश्चात् सम्राजां प्रमोदगृहैर्मन्त्रगृहैः स्नानगृहैर्महिषीगृहैरन्यैरपि विविधैर्भवनैः समन्ताद् व्याप्तम्। एकस्य प्रासादस्याभ्यन्तरे लिखितञ्चास्ति—

'स्वर्गो यदि धरायां स्यात् सोऽयं सोऽयं विराजते।' इति।

दुर्गाभ्यन्तरे महिषीभवनानामन्यतमं खलु सम्प्रति कौतुकागारतां प्रापितम्। अत्र हि मोगलभूपालानामस्त्राणि, चित्राणि वस्त्राणि, अन्यान्यपि विविधानि द्रव्याणि सुरक्षितानि वर्त्तन्ते। तेषु खलु सम्राज औरङ्गजेबस्य महानसिः कालपुरुषलीलां सुष्ठु प्रतिपादयतीत्यवदातमेव। अथ दुर्गाद् बहिः, समन्तात् प्राचीनकीर्त्तिकलापा वर्त्तन्ते। तत्र प्रथमतस्तावद् हुमायुनस्य समाधिमन्दिरं प्रेक्षकाणां विस्मयमुत्पादयति। अत्रैव बाहादुरसाह-नामधेयः खलु अन्तिमो मोगलमहीपालः 'सिपाही'विद्रोहावसरे कृताङ्गलराजद्रोहापराधो भयाकुलः प्राणरक्षणाय न्यलीयत। अस्मादेव स्थानात् स गृहीतः संयमितश्च। अनेनैव सह मोगलसाम्राज्यमपि नामशेषमेव जातम्।

अत एव न केवलमिदं हुमायुनस्य, परन्तु मोगलसाम्राज्यस्यापि समाधिमन्दिरमिति जनाः कथयन्ति । अथ मानमन्दिरम् (वेधशालाम्) अधिकृत्य किञ्चिद् वक्तव्यमेव। इदं हि हिन्दूनां ज्योतिर्विद्यानिष्णातत्वं सुतरामवगमयति। अत्र हि पुरा ग्रहादीनां गतिनिर्देशाय समवलम्बितास्तावत् शैलीविशेषा हिन्दूनां बुद्धिपाटवं क्रियाकौशलञ्च सम्यक् प्रतिपादयति ।

ननु विदितमेवेदं श्रीमतां यदियं देहली नगरी तोरणनिचयैः पुरा सुशोभितासीत्। अथ तेषु 'काश्मीरद्वारं' 'सिपाही'-विद्रोहयुद्धचिह्ननिवहमद्यापि वक्षसि दधत् प्राचीनमाभाणकं जनानां मनसि जागरयति।

प्रशमिते 'सिपाही'विद्रोहवह्नौ, आङ्गलराजानुचरैरत्र पर्वतोपरि कश्चिद् विजयस्तम्भोऽपि संस्थापितः। स हि अभ्रंलिहेन शिरसानुदिनम् आङ्गलराजप्रतापोत्कर्षं प्रख्यापयति । एवञ्च कविवरस्य खसरोः समाधिमन्दिरम्, अशोकस्य स्तम्भद्वयम्, सहस्रस्य मानवानामेकदैवोपासनार्थं निर्मापितं 'जुम्मामस्जिद'नामधेयं महम्मदीयानामुपासनागृहम्, अन्यच्च बहुविधं रम्यं हर्म्यमस्या नगर्या गौरवं नितरां वर्धयति। अपि च सम्प्रति आङ्गलराजेश्वरैः, प्राचीने खलु इन्द्रप्रस्थे स्थापिता नवा राजधानी नितरां मनोरमा जाता। राजवर्त्मभिर्दीपैर्मन्त्रगृहैर्विचित्रैः प्रासादैश्चेयं पाण्डवानां द्वितीया नगरीव विराजते। इत्थमत्र बहु द्रष्टव्यमस्ति। नूनं शोच्यास्ते, ये नेमां महानगरीं पश्यन्ति। इति शम्।

# जातिपरिवर्त्तनम्

[ निबन्धकः—श्रीघनश्याम-वेदान्ततीर्थः ]

चेष्टाशतेनापि पटः कदाचिद् घटायमानो न घटत्वमेति।
शूद्रो द्विजाचारसहस्रयुक्तो द्विजायते न द्विज एव स स्यात् ॥१
खरोऽश्ववत् स्याद् यदि शीघ्रगामी सुशिक्षया वाथ यदृच्छया वा।
न जात्वसौ घोटकशब्दवाच्यो लोके भवेत् प्राकृत एष पन्थाः ॥२
न कर्म्मणायाति न वा प्रयाति नित्या च जातिः समवैति नित्यम्।
व्यक्तिष्वनित्यास्विति जन्मनः प्रागूर्द्ध्वं च सा भाति समानरूपा ॥३
न जातु जातेः परिवर्त्तनं भवेद् नवा गवाश्वा नृसुतं प्रसूयते।
उत्कर्षमाप्तुं यदि कर्म्मगौरवं कुर्य्यास्तदा तत् सफलं भवान्तरे ॥४
न कश्चिदात्मोन्नतिसाधनं शमं दमं यमं वा यमभीतिनाशनम्।
समीहते कालवशादधोगतेर्बीजं च जातेः परिवृत्तिमिच्छति ॥५
कुरुष्व कर्म्माखिल-धर्म्मरक्षकं सुकर्म्मवद् धर्म्मगमतीव शर्म्मदम्।
नर्म्मप्रसङ्गं परिहाय सर्वदा ततस्तु जात्युन्नतिमेवमाप्स्यसि ॥६
सत्यादयो येऽखिलशास्त्रसम्मताः साधारणाः सर्वशुभाविरोधिनः।
सुसिद्धिमादौ परिलभ्य तेष्वथाधिकारवान् स्यान्निरतः समुन्नतौ ॥७
सदा सदाचाररतेन चेतसा सुरासुराराध्यपदं परेश्वरम्।
ध्यायेत् सदाहारविहारचेष्टया दयामयोयस्तु तदा दयोदयः ॥८
पूर्वपुण्यवशतो गुरोः कृपालेशतो यदि भवेद्धरेः कृपा।
भाजनं हि न च तत्र जातितो गौरवं किमपि कर्म्मतोऽथवा ॥९
विप्राज्जातो हीनसन्ध्योऽपि वन्द्यो नैवं सन्ध्याशालिनी जातिरन्या।
क्षुद्रोऽश्वत्थः पूजनीयो वटो वा नैवं तालाः संविशालाश्च शालाः ॥१०

पूर्वाचार्य्यादिष्टमार्गप्रकारं पर्य्यालोच्याचर्य्यते यैः स्वधर्म्मः ।
ते विप्रा वा क्षत्रिया वाथ शूद्रा भुक्तिं मुक्तिं चाप्नुवन्तीह शश्वत् ॥११

असंयमाचारविचारशालिनः सदा कदाचारपथानुवर्त्तिनः ।
अजन्त्यधः सद्द्विजवंशसम्भवा अप्यूर्द्ध्वगा नीचजनाः सुमार्गगाः ॥१२

ये स्वधर्म्मपरिनिष्ठिताशयाः शास्त्रसिद्धनियमैरथोद्धताम् ।
वृत्तिमिन्द्रियचयस्य साग्रहं शान्तयन्ति किल ते नरोत्तमाः ॥१३

## भ्रममार्जनम्

एतद्वर्षीय-पत्रिकाया द्वितीयसंख्यायां तृतीय-(एतत्) संख्यायाश्च "वेदान्ते साङ्ख्याधिक्षेपपरतानिरासः" इति शीर्षकप्रबन्धस्य कर्त्तृनामपदांशे "भादुड़ी"ति सम्पातताया- तोपाधि-परिवर्त्तनेन "झाँ" इति भविष्यति ।

// संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रविः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

| August, 1929. | १८५१ शकीये श्रावणे १२श-वर्षस्य ४र्थ-संख्या | Vol. XII. No 4. |
|---|---|---|

## वर्षबिन्दुः

( पूर्वतोऽनुवृत्तः )

[ निबन्धकः—इ. वि. रामशर्म-नम्पूरी ]

साध्वीमणेस्त्वद्गदपाङ्गकोण-समुल्लसत् सत्प्रणयाङ्कुरस्त्वम्।
मनस्यकस्मात्कुपितस्य शुद्धे जातोऽनुतापोऽपि च स त्वमेव॥३२

स्वर्वाहिनीबिन्दुविनिर्गमाय कृत्वा धनुर्जिह्ममधः स शक्रः।
अयःशरैः किं कृतवान् नु सेतुमित्यभ्रकैः शोभितभूषनाशे॥३३

निदाघकाले नितरां दिनानां विराम-चावल-विघातकत्वात्।
प्रतापयन् लोकमभूदिहाब्दः प्रह्लाददाता स हिरण्यदैत्यः॥३४

परोपकारप्रवणस्य मेघः प्रादुर्भवायैव तव व्यतानीत्।
इमां निजां जीवित-दूरयात्रां तदीय-जन्माद्य कृतार्थमासीत्॥३५

अङ्गीक्रियात् काममनर्वदिव्य-सायुज्यमभ्रं तदतीव धन्यम्।
अपार-नीहार-कृपा-रसार्द्रो भवानिहायातु वि-नाथ-बन्धो॥३६

विवारयन् वक्त्रमुदीच्य तत् खं पश्येव चास्ते ह! ह! चातकस्ते।
मनोहरे तस्य गले जवात्त्वमन्तर्विभूषा-मणितां प्रयाहि॥३७

चिरन्तनश्रीमुनियाज्ञवल्क्यवान्तं यथा तित्तिरिपक्षिशावः।
वेदान्तसर्वस्व-रहस्यसारं स चातकः संस्वदिता तथा त्वाम्॥३८
सुधाकरस्याग्रकराङ्कुरं तं यथा चकोरः स तथा तपस्वी।
प्रायोपवेशव्रत-तान्तधीस्त्वामास्वाद्य साक्षादमृताशनः स्यात्॥ ३९
किमत्र चित्रं खलु नीडजस्य क्षुद्राहशान्त्यै तु परानपेक्षम्।
आत्मार्पणं कर्म पुराऽपि चाद्य जीमूतवाहस्य वरिष्ठधर्मः॥४०
तवाथवातीत्य जवादधस्तात् तदत्र रत्नाकरवेदिकायाम्।
शुक्तौ महत्यां पतनं समस्तु दिव्यस्य हव्यस्य हुतार्चिषीव॥४१
महाकवीन्द्रस्य नवाशयः सत्-पद्यस्य मध्ये न यथा समेति।
यथाऽपरोक्षः स च तत्त्वबोधो भक्तान्तरङ्गं परमं प्रयाति॥४२
हा! तावदब्धेरधरे निषण्णां तले विषण्णां भवति प्रविष्टे।
तां शुक्तिकां सा तरसैव च स्यात् कान्तिच्छटा-कन्दलकामधेनुः॥४३
कालक्रमात् त्वं कमनीयरूपः कल्याणमुक्ताफलतल्लजः स्याः।
तारुण्यवल्यास्तरलायताक्ष्या नासाग्रभूषा-नव-रत्नराजः॥४४
अनङ्गसाम्राज्यपताकिकाया नासामणिस्तत्तरुणीमणेस्त्वम्।
बिम्बाधराकीर्णसितं स्मितं तत् करिष्यसि द्राक् पुनरुक्तशोभम्॥४५
तवाथवाऽग्र्योपवनाङ्गणस्थे महातपक्लान्तदले स्थितिः स्यात्।
'रोसा' प्रसूने शुकशावकस्य चञ्चौ यथा चारुपयःकणस्य॥४६
मुखस्य कान्तिं मुकुरे निरीक्ष्य विचालयन्तीव शिरो वराङ्गी।
'रोसा'भिधा सा तरसा धुता स्यात् स्वकीयमाध्वीरसपानमत्ता॥४७
पानीयबिन्दो भवलाक्षताङ्ग-विलेपनानां कुशलेन तस्य।
सुमस्य नेच्छास्त्यपरे दलानां लावण्य-पीयूष-सरोऽवगाहे॥४८
शनैः शनैर्बालपलाशपत्र-गारुत्मतश्रीमणिमञ्जगं तम्।
समौक्तिकं कुङ्कुमविग्रहं स्यादायुः समालोक्य कृतार्थजन्मा॥४९
भूत्वा मधुस्वादुकणाङ्कुरस्त्वं नीत्वा सुमे तत्र कियद्दिनानि।
मन्दानिलाय भ्रमरार्भकाय विभज्य दद्याः स्वतनुस्वमत्र॥५०

पलाशपद्यच्छदतल्पजान्तर्लग्नं भवन्तं श्रियि नृत्तवत्याम् ।
मन्दिष्ठपट्टास्तरणे विशीर्णं मञ्जीरमाणिक्यमिवेक्षिताहे ॥५१
केकारवेण स्तनिताय दत्त्वा प्रत्युक्तिमग्रे प्रमदोन्मदाढ्यम् ।
प्रसार्य पिच्छं विवलच्छिखी स कृषीवलान्तःप्रतिबिम्बरूपः ॥५२
यत्र स्थले त्वं परमृश्यशृङ्गसमः सकृन्न्यस्यसि पादपद्मम् ।
प्रत्यक्षगारुत्मतपद्मराग-पद्मालयायाः स विशिष्टसौधः ॥५३
महाजनास्ते भवता प्रहीणं महीविभागं मरुमामनन्ति ।
सच्चित्स्वरूपस्य कृपाकटाक्षैरलक्षितं कल्मषशालिनञ्च ॥५४
यद्येकदा ते स-सहोदरस्य सान्निध्यसौभाग्यमजेन सृष्टा ।
प्रतप्तया वालुकया लभेत सुशाद्वला स्यादपि सा 'सहारा' ॥५५
त्वणार्धमायुस्त्वणमात्रमङ्गं कृते परेषामुभयं च दत्त्वा ।
स्वजीवितोद्देशनिवृत्तिमीप्सुं वृणोम्यहं देशिकशेखरं त्वाम् ॥५६
मोदामहे नैव नभःस्थितं त्वां स्तुमो भवन्तं तमधः पतन्तम् ।
दृष्टं कृतार्थीकृतजीवितानां किरीटमाणिक्य ! तदेमि तेऽपि ॥५७
आगामिनां त्वं जनुषां शतेऽपि परोपकारव्रतबद्धकक्षः ।
आकल्पमादित्यसमस्य ते सा दैनन्दिनव्याप्तिरिव धन्या ॥५८
युद्धाय सज्जस्य भटस्य लघ्वी मुखप्रभा कापि रिपूंस्तु जित्वा ।
उरश्छदप्रश्लथनोत्सुकस्य योधप्रभोः पूर्णमुखप्रभाऽन्या ॥ ५९
दिवो मुखं मृष्टकलङ्कपङ्कम् छहक् च भूमेः शिशिरत्वमागात् ।
सर्वत्र सन्तुष्टिरलं व्यलासीत् सर्वं शुभं त्वत्करुणाविलासात् ॥६०
जयाग्रकल्याणगुणैकसिन्धो ! जयाद्य विश्वोत्तरविश्वबन्धो ! ।
जयात्र विख्यापितसर्वजन्तो ! जयाग्रपर्जन्य-कृपाम्बुबिन्दो ! ॥६१

# सार्वभौमो धर्मः

( पूर्वतोऽनुवृत्तः )

[ निबन्धकः—श्री·········                    ]

मोहं रुणद्धि विमलीकुरुते च बुद्धिम्
सूते च संस्कृतपदव्यवहारशक्तिम् ।
शास्त्रान्तराभ्यसन-योग्यतया युनक्ति
तर्कश्रमो न तनुते कमिहोपकारम् ? ॥

कर्म्म ब्रह्मविचारणां विजहतो भोगापवर्गप्रदां
घोषं कञ्चन कण्ठशोषपुलकं कुर्वन्त्यमी तार्किकाः ।
प्रत्यक्षं न पुनाति नापहरते पापानि पीलुच्छटा
व्याप्तिर्नावति नैव पात्यनुमितिर्नो पक्षता रक्षति ॥

आदौ धर्म्मे प्रमाणं विविध-विधिभिदा शेषतां च प्रयुक्तिं
पौर्वापर्य्याधिकारौ तदनु बहुविधं चातिदेशं तथोहम् ।
बाधं तन्त्रं प्रसङ्गं नयमनय-शतैः सम्यगालोचयद्भ्यो
भिन्ना मीमांसकेभ्यो विदधति भुवि के सादरं वेदरक्षाम् ॥

मीमांसकाः कतिचिदत्र मिलन्ति वेद-
प्रामाण्यसाधनकृतोऽपि न तेऽभिवन्द्याः ।
उद्घोषितोऽप्युपनिषद्भिरशेषशेष-
ब्रह्मैव नाभ्युपगतः पुरुषत्तमो यैः ॥

* * * *

इदमेव निरूपयद्भिः पौराणिकैः कथ्यते—

अक्षपादप्रणीते च काणादे साङ्ख्य-योगयोः ।
त्याज्यः श्रुतिविरुद्धोऽंशः श्रुत्येकशरणैर्नृभिः ॥

जैमिनीये च वैयासे विरुद्धांशो न कश्चन।
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ ॥

सुतरां व्यावहारिकं वस्तु परमपरञ्च पारमार्थिकमिति धिय
शास्त्राणां षसामपि वर्त्तत एव लच्चैक्य, प्रतिपादनसाम्यमविरोध
श्चेति न तिरोहितं किञ्चित्। पशुपतिभक्ता नारायणभक्ता इतरेऽपि
तत्तद्देवानां स्वविधानानुरूपं पूजोपकल्पनं कुर्वन्ति, स्वपरभेदेन
साम्यं वैषम्यं च तेषामपि सिद्धान्तेऽन्तःपतति परमितस्तेऽपि गतार्थाः

स्थितमिदानीमास्तिकानां मतम्। नास्तिकानां पुनर्मतपरीच्चावस
तेषामग्रणीश्चार्वाक एव पुरतः समायाति। लोकायतिकापरपर्य्या
सोऽयं प्रत्यच्चमात्रप्रमाणविभवः कस्यापि वस्तुन्यात्मापरविचारनि
शेषमस्ति निच्चिपन् पापात्, लोभात्, कामात् मोहाद्वा मनागप्यात
भयं वा नानुचिन्तयन् देहमेवात्मानमध्यवस्यति। एष च पुनरालस
ग्रहग्रहीतो नैसर्गिकेण वेदद्रोहेण परमात्माप्रत्ययेन च पुरस्कृतः "
स्वर्गो नापवर्गो वे"ति बहुशः प्रगल्भते।

चार्वाकादीषदधिकविवेकवन्तो माध्यमिक-योगाचार-सौत्रान्तिव
वैभाषिकाश्चतुर्विधा बौद्धाः सर्वशून्यत्वं वाह्यशून्यत्वं वाह्यार्थानुमेय
वाह्यार्थप्रत्यच्चत्वं च पुरस्कृत्य भगवतो बुद्धस्य नास्तिकत्ववादानुद्घो
यन्ति। आद्याः "यत् सत् तत् च्चणिकं यथा जलधरः सन्तश्च भा
अमी"-त्यादि-नयेन कृत्स्नं वस्तुजातं शून्यमेवेति प्रत्यवतिष्ठन्ते। द्वितीः
योगाचारः—अनादिवासनावशतया कृते वाह्यार्थाननेकाकारैरवभार
मानां बुद्धिं केवलां बोधयति। स हि भगवदुपदेशं "सर्वं च्चणिकं च्चणि
दुःखं दुःखं स्वलच्चणं स्वलच्चणं शून्यं शून्यम्" निशम्य तस्य भावनाचतुष्ट
प्रचयबलान्निखिलवासनोच्छेदविगलित-विविधविषयाकारोपप्लव-विशु
विज्ञानोदय एव महोदय इति मन्यते। सौत्रान्तिका वाह्यान् पदाथ
ननुमेयान् मन्यन्ते, वैभाषिकाश्च पुनः शून्यविज्ञानवादादीनां म
पारस्परिकं विरोधं विलोकयन्ति।

आर्हता विवसनाः सौगतानां क्षणिकत्वं खण्डयन्तः सप्तभङ्गी-न्यायानुसारिणो जीवा-जीवा-स्रव-संवर-निर्जर-बन्ध-मोक्षान् पदार्था-नभ्युपगम्य शरीरपरिमाणं जीवं मन्यन्ते ।

तेषु तेषु स्थलेषु समीचीनतया आस्तिकदर्शनैः खण्डितास्तदिमे नास्तिका अपि निम्नवर्गीयच्छात्राणां युक्तिजालमिव तर्कजालमुपन्यस्य स्वीयं मतं प्रचिख्यापयिषवः, वकुलमालतीपारिजाततरव इव पुष्प-राशिभिः शरैर्मन्दरशृङ्गं प्रहर्तुमभ्युद्यताः, आस्तिकदर्शनानामलङ्कारा-यैव जायन्ते । चार्वाको लोकदृष्टिं पुरस्कुरुते, परन्तु बौद्धा आर्हताश्च ततः कमप्युदारतरं विचारमादाय प्राधान्यं ततः समधिगच्छन्ति । लौकिकसुखैषणया तत्रापि च मर्यादाभङ्गमङ्गीकृत्य कर्मकरणान्नितरां क्षोदीयान् खलु चार्वाकविचारः । नायमध्यात्मविवेचनापराङ्मुखः स्रक्चन्दनवनितादिष्वेव विषयेषु लग्नो जातुचिच्चेतयितारमात्मानं स्वप्नेऽपि ध्यायति । सौगतानामपि क्षणिकत्वादिकं दुस्तर्कं युक्त्याभासञ्च कक्षीकृत्य योद्धुं प्रवृत्तिरे अध्यात्मसंगरे । परन्तु तेऽपि पराहता एवा-स्तिककुञ्जरैः । यत् किमपि भवतु, 'ऋणं कृत्वा घृतं पिब'स्तु चार्वाकेषु न लोके कोऽपि प्रत्येति, दूरतस्तु परमात्मसमीपे तेषां चर्चा तदिह क्रम-विचारचिन्तायां दर्शनानां प्रथमभूमिकासु इमे चार्वाकसौगता-दय एव पदमाप्नुवन्ति । "तुषकणोपहितान् व्रीहीन्" "दुःखोपसृष्टं सुखञ्च" कामयमाना अधमपुरुषार्थपक्षपातिनोऽनुपपन्नविचारा अपि तस्मादेते मैत्रीकरुणादृग्निक्षेपेण समुद्धरणीया एवेति कः संशयीत ? आरम्भात् प्रभृत्येव वेदवादनिन्दनपरैराप्तपरिपन्थिभिर्नास्तिकैरास्ति-कानां कोऽपि विरोध एव लक्ष्यीक्रियते, परं कारणैरुपरिष्टान्निर्दिष्टै-स्तेषामपि स एव गन्तव्योऽध्वा ।

तदेतत् स्वल्पमतीनां नास्तिकानां मत कापिलस्य ब्रह्मसूत्रकृतश्च सूत्रनिर्माणकालात् प्रागेव भारते प्रासरदिति तेषां खण्डनया प्रतीयते ।

उपनिषत्स्वपि गुरुरात्मावबोधनाय समागतं शिष्यं क्रमशः प्राणादीनां परीक्षया देहादिभ्यः पृथक्स्वरूपमात्मानं ग्राहयतीति मन्दधियां प्रकृतिमनुशीलयन्त्याः श्रुतेरुभयपक्षवैशद्यकारिणी पद्धतिः। अवश्य-मेव सूत्रकाराणां बादरायणादीनां केचन सन्निहिताः प्रतिवेशिन एव तथाभूतं सिद्धान्तं कस्मैचन स्वार्थानुसन्धानाय प्रावर्त्तयन्निति प्रवादः सार्थकः। बृहस्पतिर्वा भवतु कश्चनान्यो वा भवतु, कालक्रमेण तैस्तै-रेव विचारैः सम्भाव्यमानं कार्य्यसाधनं कर्त्तुं दुष्टेनापि पथानुयान्त्येव विपश्चितः—"घनाम्बुना राजपथे हि पिच्छिले क्वचिद् बुधैरप्यपथेन गम्यते।" परन्तु—सौगतानामार्हतानाञ्च मतं भगवतो बुद्धस्य पार्श्व-नाथमहावीरादेश्च प्रादुर्भावानन्तरं प्रचलितम्। बुद्धदेवस्य निर्वाणकाले प्रारम्भोन्मुखः सौगतो धर्मस्तन्मृत्योरनन्तरं बिम्बिसारा-जातशत्रुप्रभृ-तिभिः सोत्साहमुत्थापितो राज्ञः अशोकस्य समये परं समुदजृम्भत। तेन चात्मधर्मसमुन्नतये न केवलं भारत एव वर्षे, अपि तु भारतवर्षं परितः सुदूरव्यापिषु देशेष्वपि उपदेशाः शिला-प्रस्तरादिलेखेभ्यः, उपदेशकैश्च प्रेषिताः। किमधिकं पुत्रं पुत्रीञ्च तदर्थमसौ बहिर्देशं संप्रेष्य तथा प्राचारयद्धर्मं यथा संसारस्याद्यापि कियन्तमंशं सौगतेन धर्मेणाक्रान्तं निभालयामः। तथैव जैनानामपि सिद्धान्तो जीवाहिंसा-मूलकः प्रचरति। एष्वेव कालेषु प्रसिद्धिं गते बौद्धधर्मे भगवता शङ्करेण वैदिकधर्मस्य निःश्वासमात्रेणानुमित-जीवातोः सकरग्रहमुद्धारं कर्त्तुं भूतले आत्मावतारितः। प्रस्थानत्रयीं विधाय बहूंश्चोपदेशकान् शिष्यानुत्पाद्य राजशक्तितोऽपि साहाय्यमर्जितम्। एतदुक्तं भवति—सूत्रकृतां कालादेव प्रचलतामास्तिक नास्तिकविचा-राणां भाष्यकृतां कालेऽपि भूरिशः प्रचारोऽभवदिति विद्वच्चूडामणीनां वाचस्पत्युदयनादीनां सोपष्टम्भखण्डनैरवसीयते, यद्यपि सततमेवा-नास्थया ताटस्थ्येन च समुपेक्षिता एव नास्तिका आसन्। प्राक्तना राजानोऽपि सौगतमतानुयायिनः स्वधर्मप्रचाराय बलात्कारं नाकु-

र्वन्, नापि यावनीं शिखाकर्त्तन-सूत्रोच्छेदनादिकां परिपाटीमका-मयन्त।

आस्तिका दर्शनकृतोऽवतारवादं चातुर्वर्ण्यस्थापनं प्रामाण्यसम्बन्धे आप्तवाक्यानामनुशीलनञ्च साधु मन्यन्ते, परन्तु नास्तिकाः सर्वमेतद्विरुध्य यथाकामं धर्मपरिवृत्तिं सहमाना लोकोपकारमात्रपरेषु समधिकं श्रद्दधानाश्चिरादागतामपि कौलिकीं परिपाटीं शंकाकलङ्कग्रस्तामिव कल्पयन्तः प्रतिपलं परीचन्ते। अध्यात्मवादस्य प्रचारो यतः प्रभृति विरलो जातः, यतश्च सौगतैर्दिक्पटैर्विभिन्नमतानुयायिभिश्च नास्तिकैर्भारते पदं कृतं, ततः प्रभृत्येव परमात्मचिन्तने शैथिल्यमापतितं, भौतिकेषु च कामनासु क्रमशः प्रवृत्तिरुन्नता। जीवात्मवादस्य चर्चया येषां कालस्तरुतले याति, त एव साधारणैर्मुद्राकर्पटाद्यचिन्तने व्यापृताः पथ्यन्तरमेव समाश्रयन्। सोऽयं धर्माणां संक्रान्तिकालस्तथाविधां परिस्थितिमुपास्थापयद् येन उपदेशानां सर्वत्र सम्भूतं दुर्भिक्षम्। यवनानां साम्राज्ये परदारापहरणमार्थ्याणां शिरश्छेदः, परद्रव्यलुण्ठनञ्च तथा प्रवृद्धिं गतं, येन सकलेयं भारतधरा भग्नावशेषमपि धर्ममन्दिरं पुनरवस्थापयितुं कृच्छ्राद्देवापारयत्। परःशता मानवा यावनं मतमङ्गीकृत्य श्रुतिदर्शनोपपादितं सिद्धान्तं व्यस्मारयन्। शतञ्च पुरुषाः सबलात्कारमाकारिता दुहितॄरपि तेभ्यः प्रायच्छन्। यद्यपि तेष्वपि कालेषु धीरधौरेयाणां सहस्रं प्राणैः पणैः तैः सह समरे निपातमाप, परन्तु धार्म्मिको ह्रासोऽन्तर्वृद्धिं गच्छन् व्रण इव वहिरनवलोक्यमानोऽपि अन्तर्महतीं समृद्धिं विधाय समस्तमेव देशमेकपदे जग्रास। । परन्तु सर्वत्र नैराश्यनीहारावृतेऽपि भारते उषसि नभोमार्गे विकीर्णारुणरागरञ्जिता लेखेव तदानीमपि परमात्मना बहूनां हृदये धर्मबीजं सारवती शक्तिश्च समर्पिते। एतादृशेष्वेव धर्मसङ्कटेषु पूज्यपादाचार्य्याः श्रीमन्तो रामानुजस्वामिनः प्रादुरभूवन्, यस्योपदेशसारैर्भक्तिभावनापरिप्लावितैर्भूयाम्

भागो धर्म्ममर्म्मज्ञः सम्पन्नः । 'हिन्दीभाषामवलम्ब्य कवीरादयोऽपि दार्शनिकानां भावानां प्रचाराय समुदयतन्त । श्रीचैतन्यदेवश्च वङ्गभूमिं कीर्त्तनकला-सुधाधारया प्लावयन् नवधा भक्तिं विस्तार्य्य चन्द्र इव चमच्चकार वार्त्तोन्मुखांश्च वङ्गान् ररक्ष । एषां समये विप्लव-तमोमालया साम्राज्यगगनं सर्वदा परीतमासीत्, निशाचराणां कवलमिव च भारतीयाः पाटच्चरैरैकागारिकैर्दस्युभिश्च पर्य्यपीडयन्त । राजनीति-निराधारापि धर्म्मनीतिः समाजशृङ्खलायाः विचारविभागस्य च विलीय-माने सत्त्वे लोकैरुदीक्ष्यमाणा मन्थरं पदं चक्रे यावन्नानकादिभिः पञ्चनदीयैः संस्थापिता धर्म्मान्तरङ्गा समाजशृङ्खलाभित्तिः कापि चमूरिव संघट्टिता, यानुपदमेव वास्तविकं चमूपदमलञ्चकार । अयमाशयः— दार्शनिको धार्मिको वा विचारो विरलं विलोक्यमानानां संस्कृत-व्यव-सायिनामिव हृदये श्रितः ; इतरेषां विप्लवमये जीवने पदमधान्मोह-मयी अज्ञानता । केचिच्चिरात् विलासदाम्ना संदानिताः कामकुण्डे आत्मानं जुहुवुरन्ये च यावनानामाततायिनां दूरतरैः कल्पनातीतै-रत्याचारैर्जीविनोऽपि मृता इव दिनान्यगणयन् । जीवो वा पर-मात्मा वा भक्तिर्वा ज्ञानं वेति विमर्शः केवलं संस्कृतज्ञानां कवीनां हृदये व्यराजत । दिष्ट्या तदानीं सूरदास-तुलसीदास-समर्थरामदास-प्रभृतिभिः गीतगोविन्द-प्रबोधचन्द्रोदय-चन्द्रप्रभचरित-बुद्धचरित-प्रभृति-कर्त्तृभिरिव काव्यसंगीतसुधया धर्म्मकर्म्ममार्गे लोकान् व्यापार-यितु सुपक्रान्तम् । एषामेव वाणीविभूत्या कथञ्चिल्लुप्ता अपि श्रुतिस्मृति-दर्शनश्रवणमननाभिलाषाः पुनरपि समुज्जीविताः । हन्त ! अद्यापि तामेव परिस्थितिं पश्यतां हृदयेषु तथैव कष्टं भवति । राष्ट्रे सर्वत्रोद्य-द्यीयमानं जातीयं वैमनस्यं राष्ट्रस्यान्तःकरणं शातयति । पाश्चात्त्य-चाकचिक्यमुग्धास्तदनुकरणपरायणाः पाश्चात्त्यवेशभाषाभावभूषितामेव भारतभूमिं द्रष्टुं प्रयतन्ते, नाल्पमपि च ततो हानिं विभावयन्ति ।

यूरोपीय-दर्शनकाराणां मताधिकानां कियन्तश्चन पूर्वतनाश्चार्वाका

इव भूतोपासका जडचेतनभेदं स्थूलमुपादाय विवेचयन्तः परमात्मतत्त्ववञ्चिता एवासन्, परन्तु कालान्तरे "साक्रटिज"मारभ्य तच्छिष्यपरम्परया आत्मानात्मविचारः प्रवर्त्तितः। "प्लेटो" "अरिस्टेटल" प्रमुखैस्तदानीमीश्वरसत्ता स्वीकृता, तमेव परमं मत्वा तद्भक्तिकर्म्मणि च व्यापारिता जनाः। पश्चान्मनोविज्ञाना-(Psychology)-ऽनुभवपरीक्षानुभव-वादादीनां मतानां प्रसिद्धिरभूत्। एषां "कांटस्य" परीक्षावादेन प्राधान्यमलुप्यत, संविद्वस्त्वनुभववादिनश्च परमं स्थानमवापुः। अथ तु मनोविज्ञानादिष्वेव नवनवाविष्कारेषु पाश्चात्यदार्शनिकानां मनः संलग्नम्। ते प्रत्यक्षमनुभवनीयानां पदार्थानां पुरतः कल्पनागतं वस्तुजातं नाभिनन्दन्ति। विज्ञानवादिनस्तर्कपराः प्रायेण हि परमात्मसत्तां पश्चात्कृत्य वस्तूनि अनुसन्दधते। तेषां हृदये तात्त्विकी रहस्यजिज्ञासा तिष्ठतीति न ते तत्रान्तःकरणं व्यापारयन्ति। मानवीयशक्तेरतुलनीयं बलमिति ध्यायता विज्ञानवादिना सह स्थूलतो दूरं वृद्धिमुपयाति परमेश्वरवादिनां विवादः। भारतीयाः शास्त्रकारास्तु—

"योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः।
स साधुभिर्बहिष्कार्य्यो नास्तिको वेदनिन्दकः॥"
"भवानीशङ्करौ वन्दे श्रद्धा-विश्वासरूपिणौ।
याभ्यां विना न पश्यन्ति सिद्धाः स्वान्तःस्थमीश्वरम्॥" इति

जल्पन्तस्तर्कपरिशीलितेन आस्तिक्येन विचारमेव सर्वत्र प्रशंसन्ति, न तु विपरीतम्। विलोक्यते—वर्त्तमानसमये विज्ञानोदयेन सह नवनवेषु पदार्थेषु आविष्क्रियमाणेषु भौतिकविभूतिकुहकाच्छन्ना दूरङ्गता क्रन्दति वराकी शान्तिः। का कथा ईश्वर-चिन्ताया अध्यात्मचर्चाया वा? विज्ञानवादेन क्रियमाणां क्षतिं वीक्ष्य तज्जनितासुपकृतिञ्चोदीक्ष्य सर्वथा लोभपाशिता भारतीयास्तत्रापि प्रविशन्ति;

परन्तु परमात्मनोऽनुकम्पया माभूत् तेषामात्मविनाशो भारतीयत्वस्य च प्रलय इति परमात्मानं वयं सदैव याचामहे।

पुराणेभ्यः प्रतीयते पुरा आपामरसाधारणं सर्वेषां परमात्मानुचिन्तनं वर्णसमाजानुगुणं कर्त्तव्यञ्चाभीप्सितमासीत्। प्रजा पापेभ्यो भीता पुण्यकर्म्मसु रमते स्म। दुःखात् त्रस्यद्भिः सर्वैरेव संसारसागरसंतरणतरणिकल्पः परमात्मचरणः शरणीकरणीयो ज्ञायते स्म। ते स्वयं शान्तिपूर्वं तिष्ठासन्ति स्मेति न कमपि प्रतिवेशिनमप्यद्रुह्यन्। भूतद्रोहं विहायाहिंसया जीवनं यापयन्तस्ते जनप्रियमात्मानमन्वतिष्ठन्।

"बाइबिल"-"कुरान" प्रभृति-विदेशीयग्रन्थानां तत्तद्देशीयानां धर्म्माचार्य्याणाञ्च विचारेणास्माकं सत्यपि विरोधबाहुल्ये परमात्मविषये कर्म्मादिविधानविधौ यमनियमादिपालने च भवत्येव तुला।

तदेभिर्विवरणैः प्रकृत्यैवायमनुयोगो हृदये स्थानमधिकुरुते "कच्चिदीश्वर एक एवास्तुरत त्रिचतुराः?" "ईश्वरीयोपदेशः किं बहुविधो भवति?" परमेतस्योत्तरं पारमार्थिकग्रन्थेषु सर्वत्रैव समानरूपेणान्तर्निहितं विलोक्यते। समाजसंस्था-देश-कालप्रकृतिवैचित्र्येण विचारवैचित्र्यं मानवानां भवति, परन्तु तेऽपि परमात्मशक्तेरङ्गरूपं दधाना यान् विषयान् समभावेन स्थापयन्ति, त एव विषयाः परमात्मनो ज्ञानसंदेशात्मना विनिर्दिश्यन्ते। नास्ति कोऽपि देशो यत्र धर्म्मग्रन्थेषु अहिंसा-सत्या-स्तेय-ब्रह्मचर्य्या-परिग्रहाभिधस्य यमस्य, शौच-सन्तोष-तपः-स्वाध्यायेश्वर-प्रणिधानात्मकस्य च नियमस्य न स्यादुत्कर्षः, नापि भूतदयायाः समवेदनायाश्च मानवजातिर्भवेदुपदेशः। सुतरां नास्त्यत्र अणीयानपि संशयलेशो यत् समग्राणां दर्शनानां, पुराणानां, धर्मग्रन्थानां चैकमेव तत्त्व, समानमेव रहस्यं वस्तुतो विद्यते; यत्र (१) परमात्मनि आत्मसमर्पणम् (२) विश्वबन्धुत्वम् (३) यमनियमादीनां परिपालनम् (४) सचराचरजगता समवेदनाप्रकाशः—इति विषया अन्त-

भवन्ति। एवमेव विषयं प्रदर्शयता भगवता श्रीकृष्णेन गीतासु गीतम्—

"यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय ! तत् कुरुष्व मदर्पणम् ॥"

उपनिषदश्च गायन्ति—

"मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।"
"सह नाववतु सह नौ भुनक्तु सह वीर्य्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥" इति शम्

---

## कविः कृष्णकान्तशिरोरत्नः

[ निबन्धकः—श्रीहरगोविन्दशिरोमणिः ]

पञ्चचत्वारिंशद्वर्षेभ्य ऊर्द्ध्वमिह नवद्वीप-नगरे शिरोरत्नोपाधिकः कृष्णकान्तनामा कश्चिदध्यापकः प्रादुरासीत्। स च वन्द्योपाध्याय-वंश-शिरोरत्नमिव नवद्वीपनिवासिनां विदुषां परमादरपात्रं समजायत। कवित्वेन पाण्डित्येन बहुदर्शितया च तस्य ख्यातिः सर्वत्र सुविदिताऽभूत्। सोऽयं नैयायिकप्रधानस्य गोलोकनाथ-न्यायरत्न-महोदयस्य परमप्रेयानन्तेवासी बभूव। गुरोर्गृहीतविद्यः शिरोरत्न-महाशयः स्वयं चतुष्पाठीं निर्माय बहून् छात्रानध्यापयाञ्चकार। तस्य खलु पाठना-रीतिरेवं हितसाधनी शिष्याणामभवत्, यदेकत्र सुधियः शिष्याः सुबहूनि शास्त्राणि समधीत्य कृतविद्या अजायन्त। तस्य चायमुपदेशश्छात्रसमाजे तदानीं वरीवर्त्ति स्म, यथा—

अनुशासनमुल्लङ्घ्य न कश्चित् पण्डितो भवेत् ।
भूषणं देववाण्या हि कोषव्याकरणे मतम् ॥

यस्य किल तच्छात्रेषु कवित्वप्रतिभाऽन्तर्जागर्त्ति, तस्यापि तदुद्-बोधनमस्मादेव स्वोपाध्यायात् सुतरामुन्मिषति। यतोऽयमध्यापकः कवित्वप्रतिभया नितरां प्रदीप्तस्तस्थौ। सत्सु बहुषु, विद्वज्जनेन कविता-घटनादौ मुख्यत्वमस्यैव तदानीं जागराम्बभूव नवद्वीप-नगरे।

एकदा तु नवद्वीपवासिनां विदुषां कवित्वशक्तिं जिज्ञासवः केचन भद्रमुखा 'रमाबाइ' नामधेयां द्वितीयां सरस्वतीमिव काञ्चन दाक्षि-णात्य-विदुषीं कृष्णनगर-राजधानीमानिन्युः। जाता च सुमहती सभा 'विष्णुमहल'नामक-राजसभामण्डपे। तत्र नवद्वीपात् तदितर-स्थानेभ्यश्च बहवो विद्वांसः समाजग्मुः। तान् प्रति नृपतिघोषणेव काचिद् घोषणा निरगात्। येयं विदुषी कृपया राजसभामागता, इयं नाम्ना रमापि विद्यया सरस्वतीव शोभते, काचित् समस्याऽस्यै दीयताम् भवद्भिरनयासौ झटिति पूरयितव्येति। श्रुत्वैवं नवद्वीपस्थ-पण्डितसमाज्ञादुत्थितेयं समस्या,—

"भृङ्गैः सत्प्रतिपक्षतां प्रविदधन्मा धाव रे पद्मिनीम्।"

रमया च पञ्चषान् क्षणान् ध्यायन्त्या पूरितेयम्, यथा—

मत्तेभाच्च सरः परीत्य सततं दूरीकृतान्याहितं

सम्भ्रान्तः किल वासितामभिसमं गच्छन् निरीच्छां त्वयि।

अत्रानन्यसुजीवनैर्मधुमदामोदान्धधीभिः परं

"भृङ्गैः सत्प्रतिपक्षतां प्रविदधन्मा धाव रे पद्मिनीम्"॥

पत्रारूढ़मिदं पूरणं रमासहचरेण श्रीनिवास-शास्त्रिणा नाम केनचित् यूना पण्डितेन सभायामुत्थाय श्रावितं सभासद्भ्यः।

पूरणमिदं निर्म्मलं मलिनं वेति केनचित् सभासदा कथिते कृष्ण-कान्तशिरोरत्न एष उक्तवान्,—"सुष्ठु पूरितं श्रीमत्या, अस्याश्च समस्या-पूरणशक्तिर्नितरां गरीयसी, दोषास्तत्र केचित् सन्ति, यदि भवतां शुश्रूषा बलवती भवेत्, तर्हि तदुल्लेखो मया कर्त्तुं शक्यत" इति। बलवन्तः खलु दोषा ग्रहणीया इति केनचिदुक्ते प्रत्युक्तं शिरोरत्न-

महाशयेन,—अत्र मत्तेभस्य भृङ्गैः सह सत्प्रतिपक्षता कदापि न सम्भवति, यतः सत्प्रतिपक्षताया लक्षणं न्यायमते यदुक्तं—"साध्याभावव्याप्यवत् पक्षः सत्प्रतिपक्षः।" "ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावव्याप्यवद् ह्रदादिः" इति सत्प्रतिपक्षग्रन्थः। अन्यच्च गङ्गेशोपाध्याय-कृत-चिन्तामणिग्रन्थेन सत्प्रतिपक्षशब्दस्य यादृगर्थः प्रकटितस्तन्मतमप्युल्लिख्य तेन शिरोरत्नमहाशयेन यदुक्तं तच्चास्माभिरेवं बुद्धम्, विरोध्युपस्थापनसमर्थसमानबलत्वं * सत्प्रतिपक्षत्वमिति। तथा सति रमा-पूरितायां समस्यायां सत्प्रतिपक्षतैव भृङ्गाणां मत्तगजेन न घटितुमर्हति। अन्ये दोषास्तावदालङ्कारिकैर्द्रष्टव्या इति। अथ चैकेनोक्तम्, "भवतामेकेन समस्येयं पूर्य्यतां तावत्" ततः कृष्णकान्तशिरोरत्नेनैव पूरितेयं समस्या पुनः। यथा—

उद्गच्छन्नव-भानु-भानु-निकरासङ्गोन्नताङ्गप्रभां
निष्यन्दन्मकरन्द-नन्दितमनोलोलालिवृन्दस्थलीम्।
मुग्धोन्मत्तपिपीलिको विधिवशात् पृष्ठे विपक्षोद्गमाद्
"भृङ्गैः सत्प्रतिपक्षतां प्रविदधन्मा धाव रे पद्मिनीम्"॥

तत्र पिपीलिकाशब्दो नित्यस्त्रीलिङ्गत्वं वहन्नपि शिरोरत्नकविना पुंलिङ्गत्वेन निरूपितः। सत्यामप्यमरकोषे शब्दस्यास्य नित्यस्त्रीलिङ्गतायां तट्टीकाकृता केनचित् पिपीलिकाशब्दस्य पाक्षिकस्त्रीलिङ्गतैव विहिता, दत्तञ्च तेन महाभारतीयमुदाहरणं, यथा—

"योजनानां सहस्राणि गच्छन् याति पिपीलिकः।
अगच्छन् वैनतेयोऽपि पादमेकं न गच्छति॥" इति।

तथा सति पिपीलिक इति पुंलिङ्गः शब्दोऽपि लभ्यते। अतोऽत्र कृष्णकान्तेन कविना पिपीलिक इति शब्दो गृहीतः। 'उ' इति

---

* साध्यविरोध्युपस्थापनसमर्थ-समानबलोपस्थित्या प्रतिरुद्धकार्य्यक-लिङ्गत्वं सत्प्रतिपक्षत्वमिति चिन्तामणिः। न तु तावन्मात्रकेणोपपत्तिः। सं-सा प-सः।

सम्बोधनसूचकमव्ययम्। पिपीलिक+उ='पिपीलिको' इति श्लोके निबद्धः। मुग्धेति उन्मत्तेति च सार्थकं सम्बोधनं मन्यताम्। अस्मिन् श्लोके कृष्णकान्त-पूरिते सप्रतिपन्नताया हानिरपि नास्ति। भृङ्गश्चोत्तमबलः पिपीलिकश्चातिदुर्बलस्तस्मात्। अधिकबलं प्रति दुर्बलस्य क्रुध्यतो धावनं मध्यस्थेन सज्जनेन निषिध्यत एव। अतः सर्वथा सङ्गच्छते तदर्थः। अन्यच्च, दोषः कोऽप्यलङ्कारशास्त्रोक्तो न चात्र लक्ष्यते।

एकदा तु नवद्वीपस्थ-हरिभक्तिप्रदायिन्यां सभायां कश्चिद्दाक्षिणात्यः परमहंसोऽशेषशास्त्रवित् समागतः श्रोतुं वङ्गीयपण्डितानां वाग्मिताम्। तस्यागमनं दृष्ट्वा वक्तृणामभिभाषणं भवितुमारब्धं संस्कृतभाषया। परन्तु न तत् समीचीनमभूत्। तदवगम्य क्षोभमाप्तः सभापतिर्व्रजनाथविद्यारत्नमहोदयः। ततस्तेन कृष्णकान्तशिरोरत्नो न्ययोजि वक्तव्यं वक्तुम्। अनेन तु उत्थायैव कश्चित् श्लोकः स्वकृतः पठितः। व्याख्यातश्च स देवभाषया। श्लोकश्चायम्,—

वाणीं सद्रञ्जनार्थं प्रतिगृहमनिशं नर्त्तयामो वयं यां
सा भूत्वा दग्धदेहा जठरज-दहनैरस्मदीयैर्विपन्ना।
हंसं दृष्ट्वा भवन्तं परममिह पुनर्लज्जया व्याकुलात्मा
नो वक्त्रात् स्वं समर्था प्रकटयितुमितो वस्त्रहीना यतः स्त्री॥

श्लोकमिमं तद्व्याख्यानञ्च श्रुत्वा तेन परिव्राजकाचार्य्येण महाधीरेण वक्तुमारब्धमावेगभरेण, 'अहो कवित्वमहो कवित्वं श्रीमतः शिरोरत्नपादस्य! अस्य किल नैयायिक-कवेः पाण्डित्येन नितरामानन्दिता वय"मिति।

धारा-नगर्य्यां भोजराजसभायां द्वितीयः कालिदास इव सर्वथार्थं नवद्वीपस्थ-पण्डितसमाजे समादृत आसीत्।

अथैकदा नवद्वीपस्थ-हरिभक्तिप्रदायिन्यां सभायां श्रीचैतन्यदेवस्य भगवत्त्वं स्वीकृत्य स्मार्त्तप्रधानतया परमविख्यातः पण्डितो व्रजनाथ-

विद्यारत्नमहोदयः स्वमतं यदा प्रचारयामास, अन्ये च बहवः पण्डितास्तत्र खोचक्रुः, तेन च महान् विरोधकलकलः पण्डित-समूहं विचालयाम्बभूव, तस्मिन् समये पण्डितपूर्णसभायामनेनैव शिरोरत्नकविना काचिद् गौराङ्गविषयिणी मधुरमधुरा वाग्रचना कृता। तया च विरोधभञ्जनं समजनि, जयशब्दश्च कृष्णकान्तमाश्रितः। बाहुल्यभयात् तदुद्धरणे शक्तमतिर्न भवामि।

यथाऽस्य शिरोरत्नकवेः पाण्डित्यं विश्वतोमुखं, तथास्तिक्यबुद्धिरपि चित्ताकर्षिणी सर्वेषाम्। नवद्वीप-नगरे पश्चिमपल्लयामेकं शिव-मन्दिरं वर्त्तते। तच्च "बुड़ाशिवतले"ति ख्यातम्। तस्मिन्नेकं शिव-लिङ्गं जागर्त्तितराम्। इदञ्च लिङ्गशरीरे नेत्रयुगलाभ्यां श्मश्रुणा प्रहसदोष्ठपुटेन च भक्तानां मानसं रञ्जयति। नवद्वीपवासिभिश्च जाग्रद्दैवततया परया भक्त्या पूज्यते भोज्यते प्रणम्यते चेदम्।

असौ शिवः शिरोरत्नकविनानेन प्रत्यहं नियमपूर्वकं समर्च्यते स्म, महिम्नस्तोत्रपाठेन स्तूयते स्म, प्रणम्यते स्म च। अयमसौ महादेवो नवद्वीपवासिभिर्भक्तिदत्तैर्धनैर्धनवानप्यस्ति। यत्र धनं, तत्र तदध्यक्षेणापि प्रयोजनं वर्त्तते। तदयं शिरोरत्नकविः सर्वसम्मतिक्रमेणास्य देवस्य धनाध्यक्षः संवृत्तः; अस्यैव कवेः परमप्रयत्नेन देवस्यैतस्य यात्राः सर्वाः सुष्ठु सम्पादिता भवन्ति स्म। विशेषतः प्रतिवर्षं चैत्रस्य शेषभागे 'गाजन' इत्याख्यया ख्यातो महानुत्सवो यथावदनेनैव निर्वाहितोऽभवच्च। अपरश्चास्यैव देवस्य विवाहो नाम कश्चिदुत्सवो नव-द्वीप-निवासिनां भद्रमुख्याणामितरेषाञ्च परमसम्मतो भवतितराम्। एत-स्मिन् कर्म्मणि खलु कृष्णकान्तशिरोरत्नकविः पिता यथा पुत्रोद्वाहे यतते, तथा यतमान एवातिष्ठत्। अस्यैव निर्देशेन शिल्पिभिः कुम्भ-कारैः देव-दानव-मानव-विशेषाणां मूर्त्तिशतं निर्म्माय सज्जितमकारि। तेन च दर्शकशतानां प्रीतिशतञ्च परिस्फुरति स्म।

एकदा तु कुमारसम्भवमहाकाव्यस्य पाठनाकाले महाकविना

कालिदासेन तृतीयसर्गे हिमालयस्य कस्मिंश्चित् सानौ नीलकण्ठस्य योगपीठो यथा व्यरचि, तच्चिन्तयन्नेव शिरोरत्नकविश्छात्राणां समीपे व्यक्तमुवाच, अस्मिन् वर्षे शिवोत्सवस्य सम्पादनसमये मयापि महाकविकालिदासकृतेः कुमारसम्भवमहाकाव्यस्य तृतीयसर्गरचना मूर्त्तिमती कारिष्यते इति।

तद्यथा कथितं प्रयत्नवशात् तथैव घटितम्। योगासने समुपविष्टः शिवस्तथावद् भाति। गिरिराजेन तस्यातिथ्यं साधयितुं प्रेषिता स्वकन्या विवाहयोग्या पार्वती। या खलु "सती सती योगविसृष्ट-देहा तां जन्मने शैलवधूं प्रपेदे"। तथा पञ्चबाणः कामः शिवसमाधिभङ्गाय शरं सन्धातुमुद्यतो रत्या स्वप्रियया सख्या च वसन्तेन सह तत्रोपस्थितः। अकाल-वसन्तोदयश्च तस्मिन् शृङ्गे जातस्तदानीम्। कुसुमितं तद् गिरिशृङ्गवनम्। कोकिलालापः सर्वत्र। भ्रमरगुञ्जनं प्रतिपुष्पं श्रूयते च। किशलयसज्जा च प्रतिवृक्षेण प्रतिलतया चाङ्गीकृता। काले चैतादृशे परमयोगीश्वरस्य महादेवस्यापि धैर्य्यच्युतिर्जाता। अथ धैर्य्याच्युतः शिवः "उमामुखे बिम्बफलाधरोष्ठे" दृष्टिं निवेशयन्नपि कथमेवं चित्तवैकल्यं जातमित्यनुसन्दधत् तथाविधं कन्दर्पं दृष्टवान्। तदानीं जातक्रोधस्य त्रिनेत्रस्य तृतीयादक्ष्णो महाप्रतापो वह्निरुदगात्। तद् दृष्ट्वा व्योमचराणां —

"क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति।
तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार॥" इति।

यथैव वर्णना महाकवेस्तथैव घटिता मूर्त्तयो रामपालेन कृतिना। एतेन खलु कारुकार्य्येण सर्वत्र प्रशंसां लभमानोऽपि स शिल्पी विसूचिका-रोगेण सद्य एव गतप्राणो मन्ये शिवलोकं गतः। यस्य च निदेशमाश्रित्य निर्म्माणमिदं सङ्घटितं सोऽपि शिरोरत्नकविस्तेनैव रोगेण गङ्गातीरमासाद्य शिवत्वमाप। छात्राणां तथा नवद्वीपवासिनां

सतामश्रुपातो महानपि न तस्य प्रज्वलितं चितानलं निर्वापयितुं क्षमोऽभवत्।

कविरयं चतुरः पुत्रान् लभमानोऽपि मृत्युकाले एकमेव पौत्रं वंशप्ररोहं रक्षन् चिराय नेत्रे निमिमील।

अस्य कृतयस्तावत् तिस्रः,—एकं 'संशय-तमोहरो' नाम पुस्तकं मुद्रितम्, द्वितीयः 'सत्काव्यकल्पद्रुमो' नाम मुद्रितो ग्रन्थः, तृतीयो 'विधवाविवाहप्रतिवादो' नाम वङ्गभाषया रचितो ग्रन्थविशेषः, स चाप्यमुद्रित एव विलुप्तः। सत्काव्यकल्पद्रुमग्रन्थो मत्समीपे वर्त्तते हस्तलिखितः। यस्यायमाद्यः श्लोकः,—

ध्यात्वा शङ्करपादपद्मयुगलं प्राचीनपद्यावलीं
संगृह्य स्वकृतं तथा सुकवितावृन्दं सदानन्ददम्।
साहित्यार्णव-रत्नराजि-सदृशं श्रीकृष्णकान्तः कवि-
र्धीराभीष्टफलप्रदं प्रतनुते सत्काव्यकल्पद्रुमम्॥ इति शम्।

---

## वेदान्ते सांख्याधिक्षेपपरतानिरासः

( पूर्वानुवृत्तः )

[ निबन्धकः—श्रीशरच्चन्द्रखाँ एम् ए वि एल् ]

"कामाच्च नानुमानापेक्षे"ति सूत्रस्य सांख्यप्रकृतिवाद-खण्डनपर यद् व्याख्यानं, तद् भ्रमात्मकमिति प्रदर्शयितुम् तत्सूत्रस्योपक्रमोपसंहार-प्रदर्शनाय आनन्दमयाधिकरणं संक्षेपतो व्याख्यायते। सर्वश्रुतिसमन्वयादवगम्यते सृष्टिस्थितिलयहेतुः ब्रह्म एव, न अन्नप्राणादीति "तत्तु समन्वयादि"ति सूत्रेणोपन्यस्य तस्य हेतुप्रदर्शनार्थं प्रथममुक्तमीक्षत्यधिकरणम्। हेत्वन्तरप्रदर्शनाय प्रारभ्यत आनन्दमयाधिकरणम्।

१।१।१२। आनन्दमयोऽभ्यासात् ।

"तस्माद् वा एतस्माद् विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः" (तै० २।५) इत्यादिषु पुनः पुनः श्रूयते आत्मा आनन्दमय इति। अतो जन्माद्यस्य यतस्तद् ब्रह्म, न अन्नप्राणाद्यचेतनमानन्दशून्यम्।

१।१।१३। विकारशब्दान्नेति चेन्न प्राचुर्यात् ।

विकारार्थे मयट्प्रत्ययदर्शनाद् भवति विकारि आनन्दमयं ब्रह्म इति शङ्कामपाकरोति। "न" चात्र विकारार्थे मयट्प्रत्ययः। "तत्-प्रकृतवचने मयट्" (पा० ५।४।२१) इति प्राचुर्यार्थेऽपि दृश्यते मयट्-प्रत्ययः। यथा अन्नप्रचुरो यज्ञ इत्यर्थे दृश्यते "अन्नमयो यज्ञ" इति।

१।१।१४। तद्धेतुव्यपदेशाच्च ।

"एष ह्येवानन्दयति" इत्यादौ श्रूयते आनन्दहेतुत्वं ब्रह्मणः। यो हि अन्यानानन्दयति स प्रचुरानन्द इति निःसन्देहमवगम्यते।

१।१।१५। मान्त्रवर्णिकमेव च गीयते ।

"अन्योऽन्तर आत्माऽऽनन्दमयः" (तै० २।५) इति पर एवात्मा-ऽऽनन्दमयः सृष्टिस्थितिलयकर्त्ता।

आनन्दमयस्यात्मनः सृष्टिस्थितिलयकारित्वस्थापनात् "सर्वेऽस्मै देवा बलिमावहन्ती"त्यादिषु (तै० १।५।३) विज्ञानात्मनः परमै-श्वर्यश्रुतेः भवितुमर्हति आनन्दमयो विज्ञानात्मा जीवः सृष्टि-स्थितिलयकर्त्तेति पक्षं निराकरोति—

१।१।१६। नेतरोऽनुपपत्तेः ।

इतरो जीवो न भवितुमर्हति सृष्टिस्थितिलयकर्त्ता। कुतः अनुप-पत्तेः। सृष्टिस्थितिलयकर्तृसम्बन्धिनीनां श्रुतीनां दृश्यते जीव-विषये असङ्गतिः। हेत्वन्तरमाह—

१।१।१७। भेद-व्यपदेशाच्च ।

"रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" (तै० २।७) इति श्रुतेरवगम्यते परब्रह्मानन्दस्यांशभाक् जीव इति। अतः परा-

परयोर्भेदः ; जीवेऽनुपपन्नञ्च सृष्ट्यादिकर्तृत्वम् । "तस्माद् वा एतस्माद् विज्ञानमयादन्योऽन्तर आत्माऽनन्दमयः" (तै० २।५) इत्यादौ विज्ञानमयात् जीवात् परमात्मनो भेदः स्पष्टमेवोक्तः ।

१।१।१८। कामाच्च नानुमानापेक्षा ।

"सोऽकामयत बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्च" ( तै० २।६ ) इति श्रूयते पूर्वोक्त-तैत्तिरीयानन्दमयप्रकरणे । स परमात्मा सृष्टिकामः तत्कामादेव उपादानादि-साधनान्तरं विना "इदं सर्वमसृजत यदिदं किञ्च" । विज्ञानमये जीवे नैतत् सम्भवति । अतो न ऐश्वर्य्यवतो जीवात् सृष्टिरित्यनुमानापेक्षा । वक्ष्यति च "जगद्व्यापारवर्ज"मित्यादि (४।४।१७) सूत्रान्तर्गत"च"-शब्दो हेतुसमुच्चये प्रयुक्तः । "एवा"र्थे प्रयुक्त इति निम्बार्काचार्य्यपादाः । अथवा "सोऽकामयत बहु स्यां प्रजायेये"ति जगत्स्रष्टुः कामना दृश्यते । सच्चिदानन्दरूपस्य ब्रह्मणो न सम्भवति कामना ; अपूर्णस्यैव कामनासम्भवात् । यस्मात् जगत्स्रष्टा कामनायुक्तस्तस्माद् विज्ञानमयो जीव एव जगत्स्रष्टा इत्यनुमानापेक्षा नास्ति । कुत इत्यत आह—

१।१।१९ । अस्मिन्नस्य च तद्योगं शास्ति ।

"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवती"त्यादिषु श्रूयते परमात्मनि जीवात्मनः प्रतिष्ठादि । अस्मिन् परब्रह्मणि अस्य जीवस्य च तदात्मना योगस्तद्योग इति श्रीशङ्कराचार्य्यपादाः । तस्य आनन्दस्य योगस्तद्योग इति श्रीनिम्बार्काचार्य्यपादाः । तं शास्ति वदति श्रुतिरिति शेषः । "कामाच्च नानुमानापेक्षे"ति अष्टादशश्लोकस्य पूर्ववर्त्तिषु सूत्रेषु तथा परवर्त्तिनि सूत्रेऽपि जीवस्य सृष्ट्यादिकर्तृत्वं निराकृतम् । अष्टादशश्लोकस्थात् "च"-शब्दात् सूचितं सप्तदशाष्टादशसूत्रयोरेकविषयत्वम् । तयोनविंशश्लोकस्थात् "च"-शब्दात सचितम अष्टादशोनविंशसूत्रयो-

रेकविषयत्वम्। अतोऽष्टादशसूत्रमपि जीवविषयमिति यथाऽस्माभि-र्व्याख्यातं तथा भवितुमर्हति साधुसम्मतम्। सांख्यप्रकृतिवाद-खण्डन-पक्षे व्याख्यातेऽष्टादशसूत्रे भवति प्रकरणभङ्गदोषोऽ"नुमान"-शब्दस्य काल्पनिकार्थदोषप्रसक्तिश्चेति।

---

## रजनी

(पूर्वतोऽनुवृत्ता)

[निबन्धिका—श्रीमती रेणुदेवी]

किमिति मया किमपि काम्यमन्विष्यापि न प्राप्यते? संसारोऽयं परिपूर्णः सङ्ख्यातीतै रत्ननिचयैः, नात्र किं किमपि मे प्रार्थनीयं वर्त्तते? यत्रास्मिन् संसारे दुरवेक्षणीयानाम् अनन्तानां क्षुद्राणां कीटपतङ्गानाम् एकैकोऽपि अनन्तनैपुण्यपदम् अनन्तज्ञानस्य आधारः, यत्रास्मिन् जगति पथि-प्रान्त-निपतिता क्षुद्रैका सिकताकणापि अनन्त-रत्नप्रभवस्य नगाधिराजस्य क्षुद्रांशः, किं तस्मिन् जगति न मे किमपि वर्त्तते काम्यं वस्तु? अथवा को नामाहम्? ज्ञाताखिलतत्त्वानां करकमल-कलितामलक-फलवदखिलं जगदिदम् अवलोकयतां तेषां तेषां महामहोपाध्यायानां सम्भूय यावज्जीवं तत्त्वं पर्य्यालोचयतामपि एतस्य क्षुद्रस्य नीहारकणस्य शर्कराकणिकायाः क्षुद्रकुसुमस्य वा गुणवर्णनं सामर्थ्यमतिक्रामति; किं तथापि न मे किञ्चिदस्ति काम्यं वस्तु? को नामाहम्?

अवलोकय तावत्। वसुन्धरायामस्यां वर्त्तन्ते मनुष्याणां कोटयः। न हि ते सम्यक् केनापि परिगणय्य निर्णीताः। तथापि बहुकोटय इत्यत्र नास्ति संशयलेशः। तेषु च प्रत्येकं वर्त्तन्ते संख्यान-मतीताः गुणाः, सर्वे एव ते भक्तिप्रकर्षस्य, प्रीतिपरम्परायाः, दयायाः धर्म्मादीनाञ्चाधाराः। सर्व्वे एव ते पूज्याः आदर्शभूताश्च, तथापि न किं

वर्त्तते मे किमपि काम्यं वस्तु। कीदृशोऽस्मि ? ममाप्यासीदेकं वाञ्छिततमं वस्तु, अद्यापि तथैव वर्त्तते च। किन्तु न स मे मनोरथः कदापि परिपूर्णतामेष्यतीति हृदयात् चिराय समुन्मूलितः। न तं पुनरुज्जीवयितुमिच्छामि। किं नास्ति ततोऽन्यत् किमपि वाञ्छितं वस्तु? अतोऽहमन्विष्यामि किं करिष्यामीति। अतीतेष्वेषु हायनेषु स्वयमहं प्रश्नमिमं समाधातुं कृतप्रयत्नोऽस्मि, न चालमस्मि समाधातुम्।

ये च मे हितैषिणो बान्धवा वर्त्तन्ते, ते मया जिज्ञास्यमानाः प्रत्यूचुः, यदि ते न वर्त्तते स्वार्थे कर्म्म, परार्थे यतस्व, यथाशक्ति विधेहि लोकानाम् उपकारम्। कथेयं चिरन्तनी, किन्तु कथं लोकानाम् उपकारः सिध्यतीति नास्ति निर्णयः। राम-मातुरपत्यं ज्वरेणाक्रान्तं, कुरुष्व तस्य रोगपरीक्षां, विधेहि भैषज्यप्रयोगव्यापारम्; उन्मतस्य रघोर्नास्ति गात्रवस्त्रं, देहि कम्बलम्; शान्ताया जननी विधवा जाता, वितर मासिकीं वृत्तिम्; सुन्दर-नापितस्य तनयः शक्नोत्यध्येतुं पाठशालायां, कुरु तस्य वेतनानुकूल्यम्। किमयमेव परोपकारः। अस्तु वा तावदयमेव तथैव, किन्तु नानेन शक्यते समयातिपातः कर्त्तुम्। कियान् समयस्तावदनेनातिपतति? कीदृशो वा परिश्रमो भवति? कतीनां वा मानसिक-शक्तीनां कियती वा सम्भाव्यते समुत्तेजना? नाहम् एवं ब्रवीमि यदिमान्यपि यथाशक्ति कर्म्माण्यस्माभिरनुष्ठीयन्ते। किन्तु यावन्मात्रमेतादृशं कार्य्यमनुष्ठीयते तावता तु एतावन्निर्णीतमेव, यथा नैवं भविष्यति मे कृतकृत्यता। यदेव मे योग्यं कर्म्म, यत्र च निरतिशयमनुरज्यते मे चित्तं, तदेव अहम् अन्विष्यामि।

अन्यादृशश्चायमुपकारप्रकार आविर्भूतो दृश्यते। यथा मित्रमेलनं, सङ्घस्थापनं, प्रतिनिधिनिर्वाहः, सभानियमः, समाजपद्धतिः, वाग्मितावसरः, नियमनिर्द्धारणम्, आवेदनं, निवेदनं, समवेदनञ्च, नाहम् एतेषु सोत्साहः। एकदा कमपि बन्धुम् एतत् सर्वमेव पर्य्यालोचयन्तम् अवलोकयतो मे सहसा विजिज्ञासा जाता, किमिद-

मिति ? तेन च व्याहृतं, न किञ्चित्, केवलं भिन्नापद्धतिभेदः। नायं च मम क्षुद्रबुद्धिगोचरः ।

अयमप्यपरो रोगस्यास्य विकारप्रकारः प्रकटितो वोच्यते। सम्पाद्यतां विधवानां विवाहः, प्रतिबध्यतां परिणयः कुलीनानां ब्राह्मणानां, दूरीक्रियतां जातिभेदः, स्त्रियश्च गाव इव गोशालासु बद्धाः, अपक्रियतां तासां बन्धनं, चरन्तु ताः सुखेनेति। मम तु गाव एव न सन्ति न वा परगोशालासु सम्बन्धविशेषः कश्चित्। न वा जातिभेदतिरोधाने सम्मतिमानस्मि। न च तथाविधः सुशिक्षितोऽस्मि। इदानीमपि अन्त्यजैः सह भोजनं परिणयसम्बन्धो वा न मे मनोरथविषयः। किञ्च शिरोमणिमहाशयकृतो यस्तिरस्कारो निःशब्दं मया सहनीयः न तं हड्डीकादिभिः क्रियमाणं सोढुमिच्छामि। सुतरां तिष्ठतु मे जातिः। यथेच्छं क्रियताम् अभिलाषवता विधवाविवाहः, तिष्ठन्तु च युवानः चिर-कौमार्य्यव्रतधारिणः, एकपत्नीव्रतयन्त्रणामनुभवन्तु कौलीन्यवन्तः। न तत्र मे कापि विप्रतिपत्तिः।

किन्तु एषां पोषकतायां क्रियमाणायामपि किमिदं लोकहितं भविष्यतीति न मे प्रतीतिविषयः। अतो न मे वङ्गसमाजे किञ्चित् सत्यम्। नात्र वा कस्यचित् कश्चिदस्मि। न वा कुत्रापि कस्यापि कश्चिदस्मि। अहं केवलम् अहमेवेति। नान्यत् किञ्चित्। इदमेव मे दुःखम्। विस्मृतप्राया लवङ्गलताया हस्तलिपिः।

यदा त्वेवमेव मानसदशा-विशेष-विपर्य्यस्तश्चञ्चलचित्त आसम्, तदैव वाराणस्यां गोविन्ददत्तेन वर्णितो मे पुरतो रजनीप्रसङ्गः। चिन्तितञ्च मया, मन्ये महेश्वरेण समर्पितो मय्येको गुरुतरः कार्य्यभारः। संसारेऽस्मिन् लब्धं मया किञ्चित् कर्म्म। शक्यते च कर्त्तुमनन्यसाधारणो रजन्या अयमुपकारः। निष्कर्म्मणा च मया कथमिदमेव नानुष्ठीयते कर्म्म, किमेतन्नाम योग्यं कर्म्म।

अत्र तु प्रसङ्गतः कीर्त्यते शचीन्द्रनाथस्य पूर्वपुरुषाणां परिचयः। आसीद् भवानीनगरग्रामवास्तव्यः केवलराममित्रो नाम कायस्थ-कुलोत्पन्नः कश्चित्। तदात्मजो वाञ्छारामो नाम, येन बुद्धिबलेन धनान्युपार्ज्जयता परिवर्द्धयता च क्रमशः परिक्रीता निखिला तदन्व-वायजातैरधुनाप्युपभुज्यमाना महती भूमिसम्पत्। तेन च राम-सदयो नाम पुत्रो लब्धः। यदात्मजयोरवरजः शचीन्द्रनाथः।

आसीच्च मनोहरदासनामधेयः कश्चित् परममित्रं वाञ्छारामस्य। येन सहायभूतेन वाञ्छारामो विपुलमिदमैश्वर्य्यजातमाससाद। मनोहरदासेन च प्राणानप्यपरिगणय्य सम्पादितमासीत्तस्य कार्य्य-जातम्, स्वयन्तु कदापि न कृतो धनसञ्चयः। अनया च गुणपरम्परया तस्य वशीभूतो वाञ्छारामोऽपि तस्मिन् सहोदर इव स्नेहसन्ततिं बभार। प्राप च तस्मात् वयसा ज्येष्ठत्वेन ज्यायसीव भ्रातरि बहु-मानपरम्पराम्। नाभूच्च पितरि तस्य महती सम्प्रीतिः। मन्ये च तत्र नैकतरस्यैव दोष इति।

अथैकदा रामसदयेन सार्द्धं मनोहरदासस्य प्रावर्त्तत कश्चित् कर्कशः कलहः। ततो मनोहरदासो रामसदयकृतं सहनातीतम् अपमानमसहमानो वाञ्छाराममित्राय यथायथं सर्वं कथयित्वा तेन बहुधा पुनः पुनरनुनीयमानोऽपि तदनुरोधवचनमनाकर्ण्य परिवार-परिवृतो मित्रार्पितकार्य्यभारेण सहैव भवानीनगरं परित्यज्य निर्जगाम। स कुत्र गतः स्थितो वेति न केनापि विदितमासीत्।

( क्रमशः )

# मनोदूतम्

( पूर्वतोऽनुवृत्तम् )

श्रीचैतन्यदेवमातुल-कवीन्द्र-विष्णुदासविरचितम्

[ श्रीचिन्ताहरणकाव्यतीर्थ-(एम्-ए) सम्पादितम् ]

यत्र स्वयं वसति चन्द्रकिरीटमौलि-
रत्नांशुरञ्जितपदाम्बुरुहो मुरारिः ।
निर्णीयतेऽतिलघुकेन जगन्निवास-
वासस्य यस्य महिमा न हि मादृशेन ॥ २८ ॥

तेषाञ्च गोकुलनिवासकृतां जनानां
किं भागधेयमनुगेयमगेयमेव ।
यन्माधवं निगम-कानन-गूढमेते
पश्यन्ति चारु नटयन्ति परिष्वजन्ते ॥ २९ ॥

प्रातर्मुकुन्दकलवेणुनिनादभिन्नै-
र्गोकाश्रवारितदपत्यरवैर्जनानाम् (?) ।
धेनुं वनं नयत रे व्रजतेति बाल-
कोलाहलैश्च वधिरा श्रुतिरेव यत्र ॥ ३० ॥

सायन्तनस्य च करीष-कपोटयोने-
र्धूमस्तरोरुपरि बद्धविचित्रमालः ।
यत्रान्तरोच्चचलितोऽचल-वाजि-कक्षां
यातो जनस्य हृदयं क्षणमावृणोति ॥ ३१ ॥

---

28. a चन्द्रकिरीट—D. दन्तिपतीश—I.

29. c -कानन—D. -कारण—I. d चारु—D. चार—I.

30. c -वन—D. कल—I. रे—D. वै—I. d -स्तु—D. -श्च—I.

---

३१ । करीषोत्पन्नस्य कपोटयोनेरग्नेः । अचलस्य पर्वतस्य वाजिभिः कक्षां समताम् ।

दोहारवः क्वचन कुत्र च वत्सरोधः
क्रीडानिमग्नसुतलालसमानसायाः ।
भाण्डस्य दाहविषये गृहिणा गृहिण्यः
कुत्रापि वृद्धकुलमृद्धसभं नियुक्ताः (?) ॥ ३२ ॥

श्रीमान् स्वधर्मकुशलः कुशलं जनानां
नित्यं दिशन्नधिपतिः पशुपालकानाम् ।
पत्न्यात्मनः प्रतिमयैव यशोदयाऽऽस्ते
तत्रैव नन्द इति कश्चन वन्दनीयः ॥ ३३ ॥

तस्य व्रजे मकरकुण्डलिनं सवेणु-
वेत्रं दलत्कमलपत्रसवर्णनेत्रम् ।
बालं तमाल-तरु-कज्जलनीलिमान-
मानन्दमाकलय मानस माधवाख्यम् ॥ ३४ ॥

वक्त्रे दृशि श्रवसि गण्डतलेऽधरोष्ठे
कण्ठे भुजेऽङ्गुलिदले हृदि पृष्ठतोऽस्य ।
मध्ये तथोरुयुगले चरणे नखेन्दा-
वस्मात्ततस्तत इतोऽपि चिरं निषीद ॥ ३५ ॥

तस्मिन् वसन्ति समवेशवयोविलासाः
श्यामाः कति व्रजसुतास्तमवैमि कस्मात् ।
एतत् किमङ्ग निखिलं निपुणं निरूप्य
न स्पन्दसेऽपि यत एव मनः स एषः ॥ ३६ ॥

---

**32.** a दोहारवः—D. देहोरव.,—I. वोत्स—I. वत्स—D. b विषये .—I -विषये—D. गृहिणा—D. ग्रहिणी—I.

**34.** a सवेणु—D. सवेल—I. b वेत्रं—D. वेहं—I.

**36.** c किमङ्गलिखितं विपुलं—I. d -रत एव मनस एव—I.'

किं वर्ण्यमस्य चरणं श्रवणं शरीरं
नेत्रं मनोऽपि चरिताज्जगदेकचित्रात् ।
पङ्के निमग्नमिव जीर्णमनेकपं के
यत्नान्मनागपि समुद्धृतिमानयन्तु ॥ ३७ ॥

श्यामाः पुनः सुमणिकुण्डलिनः शिखण्डि-
खण्डप्रवालमणिकाञ्चनकण्ठभूषाः ।
बालास्तथापि नितरां प्रतिभान्ति भानो-
र्दीपाङ्कुरा इव पुरो भुवि नन्दसूनोः ॥ ३८ ॥

तत्तादृगद्भुतमहामहिमामृताब्धे-
रावर्त्तमण्डलमनन्तमिमं प्रतीहि ।
चेतस्तथाहि नयनञ्च मनश्च दैवाद्
यातं परिभ्रमति भूरि न कस्य तस्मिन् ॥ ३९ ॥

त्वं देववृन्द-मुनि-मानस-राजहंसं
गोपाल-बालक-विलासकृताभिलाषम् ।
गो-गोप-गोपसुत-गोपवधू-समेतं
चेतोऽवधेहि गतसंशयमेकमेव ॥ ४० ॥

कोऽप्येष नृत्यति दृशो नटयन् जनाना-
मुन्नायतीन्द्रियगणं जडयन् कुतोऽपि ।
आलोकनैकपरमान् विहगान् मृगांश्च
कुर्वन् गवां क्वचन चारयते कुलानि ॥ ४१ ॥

गावश्च वत्सनिवहैस्समुदीक्ष्य दूरा-
दुत्पूरकर्णपुटकं तरसाभिपत्य ।
आलोकयन्त्यनवलोकितवत् सदापि
जिघ्रन्त्यपूर्ववदलीढवदालिहन्ति ॥ ४२ ॥

अङ्के क्वचित् कुल-कुरङ्गविलोचनायाः
पङ्केषु कदापि पशुपाङ्गन-वेदिकायाः ।
सङ्केतवञ्जुलवने विजने कदाचि-
दङ्केतरत्र हृदि पुण्यवतः कुतोऽपि ॥ ४३ ॥

दूरेऽपि वाङ्मनसयोर्मुनिपुङ्गवानां
भू-रेणुचुम्बिततनुः पशुपाङ्गनेऽपि ।
यो मृग्यते श्रुतिवधूभिरपौरुषेयेन
गोपाङ्गनाभिरभितः परिपोष्यते सः ॥ ४४ ॥

एवं व्रजे व्रजसुतैः सह यत्र यत्र
क्रीडत्यनेकजलसन्तरणैकहेतुः ।
चेतः प्रसादकलिकावधि तत्र तत्र
प्रेमोत्तरेण भवतापि विलोकनीयः ॥ ४५ ॥

तस्याग्रतः स्फुटसरोरुहमाकरन्द-
गन्धान्वितालि-निकुरम्ब-करम्बितेन ।
चित्राम्बुरम्बुरुहिणीगहनेन चेतः
श्यामास्ति कापि यमुनेति तरङ्गिणीयम् ॥ ४६ ॥

---

**42.** b -द्रुतपुच्छ—D.

**43.** c—I. पुस्तके एषा पङ्क्तिरन्तराऽन्तरा लुटिताऽत्यन्तमशुद्धा च ।

**45.** b -त्यनन्तजन—D. त्यनेकजल—I. c -विधि—I. -वधि—D.

**46.** b चुम्बितेन—D. पत्रकोणे 'र' इत्यत्र 'चु' इति निर्दिष्टमास्ते ।

---

४६ तस्य व्रजस्य चित्राम्बुः रम्यसलिला । अम्बुरुहिणीगहनेन उपलक्षितेति यावत् ।

यासां तरन्ति पुरुषाः पयसापि सद्यः
क्ष्मामण्डलैकमहिताः कति ता न नद्यः ।
अन्या पुनर्मिहिरजा यदिहोरुकीर्त्तेः
स्नानावगाहनविनोदनपानचर्य्याः ॥ ॥७ ॥

अम्भोधरद्युति विनिद्रविषप्रसून-
विश्लिष्टधूलिचयचम्पकमम्बु यस्याः ।
वक्षःस्थलं तरुणकुङ्कुमपङ्कगौरं
लक्ष्मीप्रियस्य हृदयानुचरीकरोति ॥ ४८ ॥

कृष्णं तमालतरुकज्जलभासि यस्याः
स्मेराम्बुजे पयसि संह्रुतमम्बुजाक्षम् ।
गोप्यश्चिरेण परितः परिलोभयन्त्यः
स्पर्शानुजातपुलकैरयमित्यवेयुः ॥ ४९ ॥

यस्यास्तटो त्रिजगतीजनमण्डनेन
श्रीपुण्डरीकनयनस्य पदद्वयेन ।
वज्र-ध्वजा-ङ्कुश-कुशेशयराजितेन
प्रायः पवित्रसिकतापरिचित्रितेव ॥ ५० ॥

---

48. b -चम्पक—I. -चुम्बित—D. d. करोति—D, I.

49. b सङ्गत—D. संहृत—I.

---

४७। अन्या अनन्यसाधारणी इत्यर्थः ।

४८। हि हृदय अनुचरीकरोति अनुकरोति ।

४९। परिलोभयन्त्यः अन्विष्यन्त्य इत्यर्थः। अवेयुः प्रतीयुः प्रत्यभिज्ञातवत्य इति यावत् ।

यस्याः क्षणं क्वचन रोधसि धावमानं
श्यामाम्बुदाभमरुणेक्षणपाणिपादम् ।
स्मेरारविन्दकुलसङ्गतमङ्ग तस्या-
स्तुङ्गं तरङ्गमिव माधवमात्रवेहि ॥ ५१ ॥

तस्याः समीप-नव-नीप-वनालिकुञ्जे
स्मेर-प्रसूनचय-चञ्चल-चञ्चरीके ।
सन्त्यक्ष्यसि प्रथमपल्लवकम्पिते न
तल्पे न चारुणि मनः सरसीरुहाक्षम् ॥ ५२ ॥

कह्लार-कोकनद-कैरव-पुण्डरीक-
मिन्दीवरञ्च मधुगन्धहृतालिवृन्दम् ।
कादम्बहंसवकसारसचक्रवाक-
दात्यूह-मद्गु-जलकुक्कुडमस्ति यत्र ॥ ५३ ॥

स्वच्छाम्भसां विकचवारिरुहाञ्च येषां
कच्छस्थलीञ्च घनकोमलशाद्वलाढ्याम् ।
निद्रान्ति मन्दमृदुचन्दनगन्धवाह-
स्पृष्टाः स्वपृष्ठविनिवेशितकण्ठमेणाः ॥ ५४ ॥

---

**51.** c -सङ्कुल—D. -सङ्गत—I. d तुङ्गम्' इति D. पुस्तके त्रुटितम् ।

**53.** b -हृता इति D. पुस्तक पत्रकोणे निर्दिष्टं पाठान्तरम् । I पुस्तके अनन्तरं पङ्क्तिद्वयं मसीलोपात् सुतरामविस्पष्टतामुपगतम् ।

**54.** c निद्राति—I, D. पुस्तकपत्रकोणे । विभ्रन्ति—D.

---

५२ । सरसीरुहाक्षं क्षणं न सन्त्यक्ष्यसि इति न इत्यन्वयः ।

५४ । कच्छस्थलीं गत्वा इति शेषः । एणाः मृगाः ।

तैस्तैरपङ्किलतटैस्तटचारुभूमि-
भूमीरुहप्रहततापमतापरम्यैः ।
तीर्थैरिव द्विजगणैः परितः परीतै-
रेवं सरोभिरभिशोभितसंविभागम् ॥ ५५ ॥

हिन्ताल-ताल-वट-शाल-रसाल-जाल-
ताली-तमाल-क्रतमाल-पियाल-कोलैः ।
जम्बीर-वीरतरु-बिल्वकदम्ब-जम्बू-
खर्जूर-निम्ब-हरिचन्दन-सिन्धुवारैः ॥ ५६ ॥

शेफालिका-स्थलसरोरुह-कर्णिकार-
वासन्तिका वकुल-चम्पक-वाण-कुन्दैः ।
कङ्केलि-किंशुक-मधूक-जवा-प्रियङ्गु-
मल्ली-लवङ्गलतिका-वनमालिकाभिः ॥ ५७ ॥

एतैर्दलानि कुसुमानि फलानि सम्यक्
श्रीजानिपाणिकमलग्रहमानितानि ।
रम्याणि सर्वसमयेऽपि श्रमन्दधानै-
र्नीरन्ध्रमावृतमनावृतपुष्पपुञ्जैः ॥ ५८ ॥

---

**55**. a -रुपंल—I. -रपङ्किल—D. भूमिः—I. भूमि—D. b. भूमि—I. भूमी—D. -रम्ये—I. i -रम्यैः—D.

**56.** d -रैः—D. -रिं—I

**57.** c किन्नि—I. कङ्केलि—D.

---

५८। श्रमन्दधानैः श्रान्तैरित्यर्थः । अनावृतपुष्पपुञ्जैरच्युसपुष्पसमूहैर्मुनिभि-रित्यर्थः आवृतमध्युषितम् ।

यागाङ्गनस्थलमिवोज्ज्वलकृष्णवर्त्म
शाखाश्रितैर्द्विजगणैर्महितं सुघोषैः ।
तस्यैव नातिशयदूरतरं व्रजस्य
वृन्दावनं रसमयं वनमस्ति चेतः ॥५९

तस्मिन् क्षणं शिखिशिखण्डकृतावतंसं
वंशं मनागधरसीमनि सन्दधानम् ।
गोरोचनापटुपटीरकृताङ्गरागं
तं सानुरागमनिशं हृदयावधेहि ॥ ६०

तस्मिन्नयं मुरलिकां मुखरीकरोति
तत्राश्मनस्तत इतः सरिदाविरासीत् ।
अर्धावलीढगलितैः प्रथमैर्मृगाणां
चीर्णीतलञ्च कवलैरपिधीयते स्म ॥ ६१ ॥

तत्र प्रयातमनु नादितवेणुदण्डं
पीताम्बरं विदलदञ्जनपुञ्जकान्तिम् ।
आरब्धताण्डवरसैः परिवृत्तकण्ठ-
कान्तैः शिखण्डिभिरनुव्रज वीक्ष्यमाणम् ॥ ६२ ॥

# बोपदेवकृता मुग्धबोधटीका

[ निबन्धकः—श्रीचिन्ताहरण-चक्रवर्त्ती काव्यतीर्थः एम्-ए ]

सुविदितमेव सुमनसां यन्मुग्धबोधादयो बहव एव विविधशास्त्रमधिकृत्य विरचिता ग्रन्था विबुध-धौरेयेण अशेषशास्त्रपारीणेन बाल्ये मूढ़रूपेण प्रथितिं गतेन श्रीमता बोपदेवेन। तेषु च भूयस्तमां प्रसिद्धिं गाहमानं विराजते तदीयं मुग्धबोधमिति व्याकरणम्—यच्चामिदानीमपि गौडदेशस्य पश्चिमभागेषु अधीयमानवैयाकरणग्रन्थेषु प्राधान्यमधिगच्छदास्ते इति केषां वाऽपरोक्षमभिज्ञानम्। सुविशदस्याप्येतद्ग्रन्थस्य भूयो वैशद्यसम्पादनाय गौडदेशोद्भवैर्बहुभिरेव विरचिता अनर्वाचीना अनेके व्याख्यानग्रन्था अपि ग्रन्थस्यास्य प्राचीनादेव कालात् साधारणेषु प्रचारबाहुल्यम् एव सूचयतीति को वा संशयीत। यत् सत्यं साकल्येनानुपलभ्यमाना अपि कतिचनैतेषु अर्वाक्तनग्रन्थेषूल्लिख्यमाना अन्तरा अन्तरा स्वमस्तित्वं प्रमाणयन्ति।

परमुपलभ्यमानेषु श्रुतिपथमुपागतेषु वा मुग्धबोधव्याख्यानग्रन्थेषु नैकोऽपि बोपदेवकृतित्वेनाद्य यावत् निरधारि। न च स्वग्रन्थव्याख्यातृरूपेणास्यास्य क्वापि प्रसिद्धिर्वैयाकरणगोष्ठीषु। एवं सति च वस्तुस्वरूपे नितरां विस्मयमुपागता वयं पण्डितगोष्ठीभूयिष्ठतो नवद्वीपतः स्वर्गत-वैयाकरणकेशरिणः शिवनारायण-शिरोमणेर्गृहात् साम्प्रतमेव समुपनतेषु परःशतेषु व्याकरणग्रन्थेषु यदा बोपदेवकृतित्वमात्मनः प्रख्यापयन्निव कश्चिन्मुग्धबोधव्याख्यानग्रन्थो दृग्गोचरं गतः। सुतरां संशयितेऽप्यस्य बोपदेवकृतित्वे परिषत्सदस्यानां मनीषिसद्वृत्तमानामालोचनकृते समासतः समुपस्थाप्यते कश्चित् परिचयोऽस्माभिरनैतद्ग्रन्थस्य। परमिदं दुःखकारणं नो यद्, ग्रन्थोऽयमतितरां

खण्डितः, केवलं पत्रपञ्चकमेवास्याधिगतम्। तथा च प्रकरणस्य कस्यापि इतोऽन्तराऽसम्पूर्णतया पुष्पिकाया अनुपलम्भात् ग्रन्थसमाप्तेश्च असद्भावाद् ग्रन्थकृद्विषयकं न किमप्यस्माभिः समासादितम्। केवलं ग्रन्थारम्भीयात् कस्मादपि श्लोकाद् बोपदेवकृतित्वमस्य स्फुटीभवति। परं तत्रापि न नामतो निर्दिष्टो ग्रन्थकारः। तथा च—

"एतेषां मतमालोक्य मुग्धबोधं मया कृतम्।
क्रियते तस्य व्याख्याऽसौ सर्वशास्त्रप्रबोधिनी॥" इति

एतेन च नामनिर्देशाभावेऽपि मुग्धबोधकर्त्तुरेव एतद्ग्रन्थकर्तृत्वं स्पष्टमेवाभिहितम्। ग्रन्थस्यास्य च नाम सर्वशास्त्रप्रबोधिनीति निर्दिष्टम्। परं नाम्नोऽस्य अन्वर्थतां न कामप्युत्पश्यामो वयम्।

ग्रन्थादौ प्राथम्येन कृतं यथानियमं मङ्गलाचरणम्—

"त्रैलोक्यपितरौ वन्दे गङ्गाधर-गदाधरौ।
प्रलयस्थितिकर्त्तारौ भर्त्तारौ जगतां करौ॥" इति।

एतदनन्तरञ्च मुग्धबोधनिर्माणार्थं ये नामालोचिता ग्रन्थास्तेषां तत्तद्-ग्रन्थकाराणां वा समुपन्यस्तानि नामानि। यथा—

"पाणिनिर्वार्त्तिको भाष्य-महाभाष्यन्ततः फणी।
प्रक्रियारत्नकारश्च काशिकावृत्तिरेव च॥
इन्द्रश्चन्द्रो महेन्द्रोऽपि चान्द्रः कान्द्रः कपालिनी।
कैयटो हरदत्तश्च कज्जटो दीक्षितः शुभः॥
शाकटायनजैनेन्द्रो(न्द्रौ) सारस्वतसरोरुहौ।
शुमरामरभट्टाश्च मेदिन्याद्या वसाभुजाः॥
वृद्धिपादकलापौ च रत्नमाला च मालिका।
नैयासिकमहाशङ्कः सुपद्मः कमलाशनः॥"

लिपिकारस्यानभिज्ञतया वर्णाशुद्ध्यादयः प्रमादा बाहुल्येनात्र विलसन्ति,—न च ते केवलं कल्पनामालम्ब्य मया शुद्धिं नीताः। प्रमाद-

बाहुल्याद् वा अस्मदुज्ञानस्य सङ्कीर्णतया वा अवोल्लिखिता अनेके एव ग्रन्था ग्रन्थकर्त्तारश्च नास्माभिः परिचीयन्ते ।

कपालिनी-कज्जट-बुद्धिपाद-कमलाशनादयोऽज्ञातचरा इव प्रतिभान्ति। ग्रन्थपार्श्वे (margin) द्वयोस्तावत् कोऽपि सूचितः परिचयः केनापि वाचकेनाध्यापकेन वा *। तथा चोक्तं तत्र—

"महेन्द्रो मिथिलाभाषाप्रसिद्धः। कान्द्र इति पश्चिमस्यान्दिशि प्रसिद्धः शाकटायनस्य व्याख्याता।"

न चास्मिन्नामनिर्देशे ग्रन्थकालादिरूपः कश्चिदपि नियमोऽनुसृतः स्यात्, जुमरादपि परतः कलापस्य निर्देशात्। न चाधुनोपलभ्यमानप्रमाणनिचयादत्र निर्दिष्टानां सर्वेषामेव बोपदेवात् प्राचीनत्वम् उररीकुर्वन्ति प्रत्नतत्त्वानुशीलनपराः प्रेक्षावन्तः। तथा च जुमर-सुपद्मयोः बोपदेवात् प्राचीनत्वे सुतरां निश्चयस्य अनुपलब्धत्वेऽपि केचन केचन तत्प्राचीनत्वं सर्वथैवोद्घोषयन्ति †। परं दीक्षितस्तु बोपदेवात् अतितरामर्वाक्तनो वर्षाणां द्विवैः शतैरित्यामनन्ति सुधियः ‡ न च दीक्षित इति सिद्धान्तकौमुदीकारोऽन्यो वा इति विद्यते संशयावकाशो लेशतोऽपि, 'पाणिनिवृत्तौ भट्टोजिदीक्षितेन' इत्यादिग्रन्थे तृतीयपत्रे स्पष्टमेव भट्टोजिनामोल्लेखात्। एवञ्च ग्रन्थस्यास्य बोपदेवकृतित्वं सुतरामेव संशयकोटिमारोहति। परं भूयसां वैयाकरणानामुल्लेखात् कथमप्यनुशीलनीय एव एष इति अयं प्रबन्धारम्भः। एतदप्यालोच्य

---

* प्रसङ्गतश्चैतदपि वाच्यं यदस्माभिरालोच्यमानप्रतिलिप्याधारभूतो ग्रन्थः केनचिद्वाचितपूर्वं इति प्रतिभाति, एतद् व्याख्यानस्य अन्यत्र चैतादृशीनां पंक्तीनां दर्शनात्। न चैतत्प्रतिलिपिरालोचिता केनापि—अत्र प्रमादानां बाहुल्यदर्शनात्।

† Systems of Sanskrit grammar S. K. Belvalkar—पृ० १०८, १११।

‡ तत्रैव ४७श पत्रे।

यत् बोपदेवस्यालम्बनभूतानाम् ईदृशानां ग्रन्थ-ग्रन्थकाराणामुल्लेख-स्तेनैव कृतो ग्रन्थान्तरेऽपि। तथा च तदीयकविकल्पद्रुमे—

"इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥" * इति

इतोऽधिकानां नामानि निर्दिष्टानि सर्वशास्त्रप्रबोधिन्यामस्मदालोचनविषयीभूतायाम्। कविकल्पद्रुमे प्रसङ्गतः प्रधानानां निर्देशः कृतः। मुग्धबोधव्याख्यानग्रन्थे तु साकल्येनावलम्बितग्रन्थादीनां सूचनं कृतमित्यनुमानं न सर्वथाऽसम्भवं भवितुमर्हति।

ग्रन्थमध्ये च अन्तराऽन्तरा अपरेषामपि केषाञ्चित् वैयाकरणानां नाम पंक्तयश्चोद्धृतानि। तथा च—ऌकारदीर्घत्वालोचनावसरे—( ३य पत्रे )—

"अत्र ऌकारस्य दीर्घत्वन्नास्तीति शाकटायनः। अस्तीति प्रक्रियारत्नकारकल्पटी। पाणिनिवृत्तौ भट्टोजिदीक्षितेनापि ऌवर्णस्य द्वादश तस्य दीर्घाभावादित्युक्तम्। यथा ह्रस्वऌकारोऽस्ति तथा दीर्घऌकारोऽपि अस्तीति दुर्गसिंहः। वस्तुतः ऌकारस्य दीर्घत्वमप्यस्तीति अस्माकं सम्मतम्। अत एव महाभाष्येणापि धातोरुपसर्गादृतीति-सूत्रे तपरत्वात् ऌकारमिच्छति ऌकारयति। ततः प्रल्कारीयति इत्येवोदाहृतम्। पुरुषोत्तमदेवेनापि ऌकारो देवोमतो (?) स्यात् ॡकारो दनुजप्रसूरित्युक्तम्।" एवं च चतुर्थपत्रे—

धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते।
तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा॥

इति विस्तरवृत्तिः।

पञ्चम-पत्रे च—

याावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात् सा क्रिया त्वभिधीयते ॥

इति वैयाकरणभूषणादौ दृष्टम् ।

---

## परिषत्सन्देशः

**मासिकसभा**—सौराषाढस्य पञ्चमदिवसे बुधवासरे सायं सार्द्धसप्तम-घटिकायां परिषदो मासिकाधिवेशनं सुनिष्पन्नमभूत् । तत्र स्थिरसभापतयो महामहोपाध्याय-श्रीयुक्त-दुर्गाचरण-साङ्ख्यवेदान्ततीर्थ-महोदयाः सभापतिपदमलमकार्षुः । पूर्वसभाविवरणानि पठितानि गृहीतानि च । नूतन-सभ्यानां नामान्यप्युत्कीर्त्तितानि । समनन्तरञ्च कविराज-श्रीयुक्त-वसन्तकुमार-राय-विद्यारत्नमहोदयेन "प्राचीनप्रसाधनोपकरणानी"ति शीर्षकः प्रबन्धो वाचितः । सुचिन्तितस्य सुलिखितस्य चास्य प्रबन्धस्य तत्रोपस्थिता अनेक एव धीरधौरेयाः समालोचनामनुकूलामुपालालयन् । सभापतेरभिभाषणात् परं रात्रेर्नवम-घटिकायां सभाभङ्गो जातः ।

विगत-सौरश्रावणस्य सप्तविंशदिवसे सोमवासरे रात्रेः सार्द्धसप्तम-घटिकायां श्रीयुक्तोपेन्द्रचन्द्रस्मृतितीर्थमहोदयस्य सभापतित्वेन परिषदो मासिकमधिवेशनमेकं निरपद्यत । पूर्वसभाविवरणपाठानुमोदनादिरूप-पूर्वाह्णकर्त्तव्येऽवसिते श्रीयुक्त-दक्षिणारञ्जन-शास्त्रिभिः एम् ए महोदयैः "लोकायतमते परलोकः" इतिशीर्षकः कश्चित् निबन्धो वाचितः । पण्डितप्रकाण्डैस्तत्रभवद्भिः श्रीयुक्तेश्वरचन्द्रशास्त्रि-महोदयैः सुगभीरार्थस्य सुवाचितस्यास्य प्रबन्धस्य समालोचनावसरे निखिलमेव

लोकायतमतमुट्टङ्कितमभूत्। परिषदाचार्य्यैस्तत्रभवद्भिस्तर्काचार्य्य-पादैश्च न्यायसमयमंस्त्रलब्धा सद्धेतुत्वासद्धेतुत्वप्रदर्शनमुखेन निखिलैव व्याप्तिस्तद्ग्रहोपायादिश्च तथा प्रतिपादितौ, यथा अचिरारब्ध-न्यायशास्त्रानुशीलना अपि छात्रा अनायासेनैव तत्सर्वमधिगन्तुं शक्नुयुः, तथा निबन्धकारोपचित्ता युक्ति-प्रधानतर्कशास्त्रीय-हेत्वादि-दोषाश्च नावसरं लभेरन्। रात्रेर्दशम-घटिकायां सभाभङ्गो जातः।

**विशेषाधिवेशनम्**—विगतसौरश्रावणस्य षड्विंशदिवसे सायं सार्द्धषष्ठहोरायां महामहोपाध्याय-श्रीयुक्त-भागवतकुमारशास्त्रिभिः एम्. ए पि. एच् डि महोदयैः कलिकाताविश्वविद्यालये सम्प्रत्येव व्यवस्थापितस्य आशुतोषासनस्य लाभेन हर्षप्रकाशनार्थं परिषदो विशेषाधिवेशनमेकमजनि। तत्र च कलिकाता-महाविद्यालया-ध्यक्षाः श्रीमन्तः डक्टर आदित्यनाथमुखोपाध्याय-महोदयाः सकल्पं सभापति-पदमलमकार्षुः। तत्रोपस्थितेषु च सभ्येषु म. म. श्रीयुक्त-दुर्गाचरणसाङ्ख्यवेदान्ततीर्थाः, म. म. श्रीयुक्त-फणिभूषण-तर्कवागीशाः, म. म. श्रीयुक्त-शितिकण्ठ-वाचस्पतयः, म. म. श्रीयुक्त-कृष्णचरण-तर्का-लङ्काराः, श्रीयुक्त-हरिदास-सिद्धान्तवागीशाः, श्रीयुक्त-सकलनारायण-शास्त्रिणः, श्रीयुक्त-देवेन्द्रनाथ-राय, एम्. ए, श्रीयुक्त-प्रभातचन्द्र-चक्र-वर्त्तिनः, एम्. ए, पि-एइच्. डि, श्रीयुक्त-अमूल्यचरण-विद्याभूषणाः, श्रीयुक्त-चितीशचन्द्रचट्टोपाध्यायाः, एम्. ए, श्रीयुक्त-रसमय-विद्या-भूषणाः, एम्. ए, प्रभृतयो विशेषेणोल्लेखयोग्याः। सर्वे पत्रोपस्थिताः सभ्याः तत्रभवतां शास्त्रिमहोदयानामेतदाशुतोषासनलाभेन परां प्रीति-मात्मनोमामाविरकार्षुः। परिषत्पक्षतः श्रीयुक्त-भुवनमोहनसाङ्ख्यतीर्थ-महोदयेन विरचिताः केचिदभिनन्दनश्लोकाः श्रीयुक्त-चिन्ताहरण-चक्र-वर्त्तिना एम्, ए, महोदयेन वाचिताः। परिषत्सम्पादकैश्च श्रीयुक्त-चमरेश्वरठाकुर एम्, ए, वेदान्तशास्त्रिभिरभिनन्दनीयाय तत्रभवते शास्त्रिणे कानिचिद्राचाफलान्युपहृत्य भालतटे च चन्दनागुरुभिस्तिलकं

विरचितम्। सभापतेर्धन्यवादानन्तरं परिषच्छाखसमित्या "दूत-घटोत्कचा"भिधानस्य भासकृत-व्यायोगस्य प्रयोगेण समनुरञ्जिताः समागताः सर्वं एव सदस्याः।

**रामायणसमितिः**—परं प्रमोदनिदानमद्य निवेद्यते पुरतः पाठकमहाभागानां, यदियं सपारिषदा संस्कृत-साहित्यपरिषत् वङ्ग-देशोचितपाठसमलङ्कृतमेकं वाल्मीकीय-रामायणं मुद्रापयितुं व्यव-स्यन्ती शाखासमितिं काञ्चिदुदबोधयत्। तया च समित्या रामायण-मुद्रणव्यापारस्य सम्पादने म. म. श्रीयुक्त-दुर्गाचरणसाङ्ख्यवेदान्त-तीर्थाः म. म. श्रीयुक्त-भागवतकुमार-शास्त्रिणः पि, एच्, डि महो-दयाश्च प्रधानसम्पादका निरधार्य्यन्त। परं वङ्गदेशोचित-पाठभूषित-स्यास्य रामायणस्य वङ्गान् प्रत्युपयोगविशेषमापादयितुं वङ्गभाषया-नुवादोऽपि कश्चिद् भविष्यतीति निर्द्धारितमास्ते शाखासमिति-सदस्यैः। तत्र चानुवादकर्म्मणि कुशलधियः संस्कृतभाषाविशेष-विदः श्रीमन्तो नगेन्द्रनाथठाकुर-सिद्धान्तरत्न-नामानो न्ययोजि-षत। तैश्च सहज-नैपुण्येन एतदन्तरैव बालकाण्डं मुद्रणागार-प्रेरणोपयोगितया लिखितमास्ते। टीका च प्राधान्येन लोकनाथ-चक्रवर्त्तिकृता समवलम्बिता भवेत्, अन्यासाञ्च टीकानां सारांशा एव सङ्कलिता भवेयुः। परं वङ्गदेशलिखितपुस्तकेषु देशान्तर-सम्मतं पाठान्तरं लभ्येत चेत्तदपि बन्धनचिह्नाङ्केन वा, क्षुद्राक्षरेण वा मूल एव निवेशितं भविष्यति। तन्निबन्धना समा-लोचना च पाद-टीकायां स्थानं लप्स्यते। एवं कृत-परिकरेयं परिषत् पारमवश्यमेवासादयिष्यति भगवत्कृपाकूपोडुपेन रामायणमहोदधे-रिति सर्वथा वयमाशास्महे।

महदिदमनुष्ठानं सफलयितुं महान्तो व्यवसायाः, महान्तो मानवाः, महान्तश्च द्रविणव्ययाः समपेक्ष्यन्त इति विदितवृत्तान्तापि परिषन्न पश्चात्पदमाधातुमीहते, यतस्तेषां तेषामुपकरणानां पर्य्याप्ति-

विरहेऽपि नैव दुरासाद्यता प्रतिपाद्यते समुद्युञ्जानैः परिषत्-सदस्यै-रिति शम् ।

## चित्रपरिचयः

अस्यां पत्रिकायामस्मिन्नङ्के मुखभाग एव येयं मूर्त्तिरालेख्यगता परितर्पयत्यक्षीणि प्रेक्षकाणामीक्षणमात्रेण, सा हि "मुर्शिदाबाद" मण्डलवर्त्तिनस्तत्रभवतो विद्यावैभव विद्योतित-वैद्यान्ववायस्य स्वर्गत-कविराज-गङ्गाधरकविरत्नस्येति विदितमस्तु वाचकमहोदयानाम् । धरणीधन्वन्तरिरयमन्तरा तुरीय-युगस्याविर्भूयास्मिन् भूमिभागे प्रायाव-धीरणाखेदमायुर्वेदमुदयभूधरशृङ्गे भूयः पर्य्यवास्थापयदिति न ताव-त्तिरोहितमितरेष्वपि वङ्गविषयवास्तव्येभ्यो विपश्चित्प्रवरेभ्यः । काले चास्य निदाननैपुण्यमगण्यप्राणिवृन्दं नैरुज्यमुपलम्भयच्चरकावतरत्व-मपरिपन्थि प्राख्यापयद् रोगक्षुब्धेषु मानवसमाजेषु ।

वारान्तरे चास्य जीवनवृत्तान्तः सन्तोषयिष्यति ग्राहकमहोदया-नित्यत्रैवाद्य विरामः समासाद्यते ।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

| September, 1929. | १८५१ शकीये भाद्रे १२श-वर्षस्य ५म-संख्या | Vol. XII. No 5. |
|---|---|---|

## सनातनाचारः

[ निबन्धकः—श्रीघनश्याम-वेदान्ततीर्थः ]

कुलशीलगतानुरूपता बत यस्यां विचलन्त्यनादृता।
असवर्णगतां विलोक्य तां परिणीतिं परितप्यते न कः॥ १

अपि पूर्वतनी गृहस्थता सुतमुत्पादयितुं व्यवस्थिता।
नवशिक्षितसभ्यतागता विपरीता प्रतिभाति सर्वतः॥ २

इह पूज्य-कुलाङ्गनाकुलं मृतमालिङ्ग्य पतिं त्वनाकुलम्।
गतवत् किल निर्मलं पदं वपुराधाय हिरण्यरेतसि॥ ३

किमतः परमस्ति दुःखदं परधर्मप्रबलेऽत्र भारते।
विधवा पतिमाशु मीहते नवशिक्षा च पथः प्रदर्शिनी॥ ४

गुरुभिः परिपक्वबुद्धिभिः पितृरोगादिविचारणक्षमैः।
समदृश्यत कन्यका पुरा सुतपाणिग्रहणाय सादरम्॥ ५

स्वयमेव नवो युवाधुना विजने पश्यति कन्यकामहो।
अवरोधविधिः क्व वा त्रपा मुहुरालापपराङ्मुखी न सा॥ ६

ऊचुः परिणयमार्य्या गौर्य्यास्तथैव पुरातनाचार्य्याः ।
रोहिण्याः कन्याया विपरीतमनार्य्यवर्य्याणाम् ॥ ७
बाल्ये वयसि विवाहः प्रभुतामापादयेद् यथा कान्ते ।
न तथा यौवनकाले क्रीडापाञ्चालिका स्वामी ॥ ८
मृदुले चेतसि लग्नः संस्कारो न यात्यन्यथाभावम् ।
नारीणामुपयामः संस्कृतिरिति शास्त्रनिर्देशः ॥ ९
वदनपिधानं स्त्रीणां मन्यन्ते ये विगर्हितं कर्म ।
बहुमूल्यं रुचिरं वा तैः किं नाच्छाद्यते वस्तु ॥ १०
इत्थं प्राप्तविकारान् विलोक्य विविधान् सनातनाचारान् ॥
रोदिति संस्कृतिकामो भगवच्चरणे घनश्यामः ॥ ११

---

## लोकायतमते परलोकः *

[ निबन्धकः—श्रीदक्षिणारञ्जनशास्त्री एम्. ए. ]

नास्ति परलोकः। न च वक्तव्यं किं परलोकबाधकं प्रमाणम्। यतो न लोकायतिकैस्तद्बाधकप्रमाणात् तदभावः प्रतिपाद्यते। किन्तु परोपन्यस्त-प्रमाण-दूषणमात्रमेव क्रियते। अत एव तेषां सूत्रम्—"सर्वत्र पर्य्यनुयोगपराण्येव सूत्राणि बृहस्पतेः।" तत्र परोपन्यस्त-प्रमाणदूषणं पराभ्युपगमस्य प्रश्नादिद्वारेण विचारणा। न पुनः स्वसिद्धप्रमाणोपन्यासः। येन अतीन्द्रियार्थबाधकत्वेन प्रवर्त्तमानं प्रमाणमाश्रयासिद्धत्वादिदोषदुष्टत्वेन कथं प्रवर्त्तते इति तान् प्रति परेणापि पर्य्यनुयोगः क्रियेत। अत एव परलोकप्रसाधकप्रमाणाभ्युपगमं परेण ग्राहयित्वा तदभ्युपगमस्य विचारः क्रियते।

परलोकसद्भावावेदकं प्रमाणं प्रत्यक्षम्, अनुमानम्, उपमानम्, आगमः, अर्थापत्तिः, अभावः, सम्भवः, ऐतिह्यं वापरेण लोकार्थ्यम्।

तत्र न तावत् परलोकप्रतिपादकत्वेन चक्षुरादिकरणव्यापारसमासादितात्मलाभं सन्निहितप्रतिनियतविषयत्वात् प्रत्यक्षं प्रवर्तते। नापि अतीन्द्रियं योगिप्रत्यक्षं तत्र प्रवर्त्तत इति वक्तुं शक्यम्, परलोकादिवत् तस्यापि असिद्धेः। नाप्यनुमानम्—"अनुमानमप्रमाणमिति" च तेषां सूत्रम्। अनेन च सूत्रेण तैः प्रतिज्ञाप्रतिपादनमात्रमेव कृतम्। अनिश्चितार्थप्रतिपादकत्वादसिद्धप्रमाणाभासवदिति हेतु-दृष्टान्तावपि ऊह्यौ। अनुमानं व्याप्तिज्ञानसापेक्षं, व्याप्तिश्च व्यभिचाररहितः सम्बन्धः। स च अविनाभाव इत्यप्युच्यते। स सकलसपक्ष विपक्षाप्रत्यक्षीकरणे दुर्विज्ञानोऽसर्वविदा। न चात्र भूयोदर्शनं शरणम् सहस्रशोऽपि दृष्टसाहचर्यस्य व्यभिचारात्। महानसादौ वह्निधूमयोर्भूयोदर्शनसाहस्रेऽपि यथा तप्ते लोहपिण्डे केवलाग्निवत् गोपालघुटिकादौ केवलधूमस्यापि प्रत्यक्षदर्शनेन व्यभिचारनिरासासम्भवः। एवं भूयः सहचरितयोरपि मित्रयोर्मिथो व्यभिचारः स्त्रीसङ्गादौ दृश्यत एव। तथा च अविनाभावसम्बन्धस्य ग्रहीतुमशक्यत्वात् अनुमानं न प्रमाणम्। अत्र चाह भर्तृहरिः—अवस्थादेशकालभेदेन पदार्थानां शक्तयो भिन्नाः। अतो न शक्यतेऽनुमानात् तद्भावनिश्चयः कर्त्तुम्। न ह्येवं शक्यते अनुमानात् प्रत्येतुं—देवदत्तो भारोद्वहनसमर्थो न भवति देवदत्तत्वाद् बालावस्थदेवदत्तवदिति। अत्र हि अवस्थाभेदेन शक्तिभेदसम्भवाद् व्यभिचारः। तथा देशभेदेन आमलकीखर्ज्जूरादीनां रसवीर्यविपाकभेदो दृश्यते। तत्र नैवं शक्यते वक्तुम्—सर्वा आमलकी कषायफला अनुभूयमानामलकीवदिति। तथा कालभेदेन कूपोदकादीनां शीतोष्णादिभेदः सम्भवति। तत्र सर्वा आपः शीता इति न शक्यते निश्चयः कर्त्तुम्। तथा तृणादिषु निश्चितदहनसामर्थ्यस्याग्नेरभ्रपटले तत्

सामर्थ्यं प्रतिहन्यते। न च तत्रैवमनुमातुं शक्यते अभ्रपटलमग्निना दह्यते पार्थिवत्वात्तृणादिवदिति। तथा अन्येनान्यथा प्रतिपादितोऽर्थः पुनरभियुक्ततरेण अन्येन अन्यथा प्रतिपाद्यते।

यच्च सामान्यस्य तद्विषयस्याभावात्, स्वार्थपरार्थभेदासम्भवात्, विरुद्धानुमान-विरोधयोः सर्वत्र सम्भवात् क्वचिच्च विरुद्धाव्यभिचारिणः इत्यादिदूषणजालं, तदनुद्घोषणीयमेव ; यतोऽनिश्चितार्थप्रतिपादकत्वादनुमानमप्रमाणमित्यनुमानाप्रमाणताप्रतिपादने कृते शेषदूषणजालस्य मृतमारणकल्पत्वात्।

ये चानुमानादिप्रामाण्यमनुमन्वानास्तान् प्रति दृष्टान्तमाह—कश्चित् पुरुषो नास्तिक-मतवासना-वासितान्तःकरणो निजां जायाम् आस्तिकमतनिबद्धमतिं स्वशास्त्रोक्तयुक्तिभिरभियुक्तः प्रत्यहं प्रतिबोधयति। सा तु यदा न प्रतिबुध्यते, तदा स इयमनेनोपायेन प्रतिभोत्स्यत इति स्वचेतसि विचिन्त्य, निशायाः पश्चिमे यामे तया सह नगरान्निर्गत्य तां प्रत्यवादीत्—प्रिये य इमे नगरवासिनो नराः परोक्षविषयेऽनुमानादिप्रामाण्यमाचक्षाणा लोकेन च बहुश्रुततया व्यवह्रियमाणा विद्यन्ते, पश्य तेषां चारुविचारणायां चातुर्य्यमिति। ततः स नगरद्वारादारभ्य चतुष्पथं यावन्मन्थरतर-प्रसृमर-समीरणसमीभूत-पांशुप्रकरे राजमार्गे द्वयोरपि स्वकरयोरङ्गुष्ठप्रदेशिनी मध्यमाङ्गुलित्रयं मीलयित्वा स्वशरीरस्योभयोः पक्षयोः पांशुषु न्यासेन वृकपदानि प्रचक्रे, ततः प्रातस्तानि पदानि निरीक्ष्यास्तिको लोको राजमार्गेऽमिलत्। बहुश्रुता अपि तत्रागता जनान् प्रत्यवोचन्,—भो भो वृकपदानामन्यथानुपपत्त्या नूनं निशि वृकः कश्चन वनतोऽत्रागच्छत्। ततः स तांस्तथा भाषमाणान्निरीक्ष्य निजां भार्य्यां जजल्प,—एते वृकपदविषये सम्यगविदितपरमार्था बहवोऽप्येकसदृशमेव भाषमाणा अपि बहु मुग्धजनभ्रान्त्यमुत्पादयन्तोऽपि च ज्ञाततत्त्वानामादेयवचना न भवन्ति। तथा बहवोप्यमी वादिनो धार्म्मिकछद्मधूर्त्ताः

परवञ्चनैकप्रवणा यत्किञ्चिदनुमानादिभिर्मुधैव सतामवधीरणीयः वचना भवन्तीति ।

अप्रत्यक्षमपि अस्तितया अभ्युपगम्यते चेत्, जगदनपह्नुतमेव स्यात् । दरिद्रो हि स्वर्णराशिर्मेऽस्तीति अनुध्याय हेलयैव दौःस्थ्यं दलयेत्—दासोऽपि स्वचेतसि स्वामितामवलम्ब्य किङ्करतां निराकुर्य्यादिति न कोऽपि स्वानभिमतमालिन्यमश्नुवीत । एवं न कश्चित् सेव्यसेवकभावो दरिद्र-धनिभावो वा स्यात् । तथा च जगद्व्यवस्थाविलोपप्रसङ्ग इति ।

अत्र केचन एवमाहुः—अस्ति च प्रामाण्यमनुमानादेः । कथमन्यथा धूमोपलम्भानन्तरं धूमध्वजे प्रेक्षावतां प्रवृत्तिरुपपद्येत ? नद्यास्तीरे फलानि सन्ति इति निश्चित्य फलप्राप्त्यर्थं प्रेक्षावतां फलार्थिनां नदीतीरे प्रवृत्तिश्चेति ? अनुमानाप्रामाण्ये—"स्वगृहान्निर्गतो भूयो न तदागन्तुमर्हति" ।

भवादृशे दूरविदेशमागते चरन्तु वैधव्यविधानमङ्गनाः ।
अदर्शनेनैव यतः शरीरिणो विदेशयातस्य मृतस्य तुल्यता ॥

अत्र लौकायतिकैरुच्यते,—न तावदस्माभिरनुमानमात्रप्रतिषेधः क्रियते, किन्तु त्रिलक्षणं यदनुमानवादिभिर्लिङ्गमभ्युपगतं तत्र लक्षणभाग् भवतीति प्रतिपाद्यते । अनुमानमात्रप्रतिषेधे तु लोकव्यवहारोच्छेदप्रसङ्गः । अत एवाह पुरन्दरः—लोकप्रसिद्धमनुमानमस्माभिरपीष्यत एव ; यत्तु कैश्चिल्लौकिकं मार्गमतिक्रम्यानुमानमुच्यते तन्निषिध्यत इति । लोकप्रसिद्धमनुमानमिन्द्रियग्राह्यं पूर्ववत् शेषवच्च । तच्च लौकायतिकमते प्रत्यक्ष एवान्तर्भूतम् । अलौकिकमतीन्द्रियं सामान्यतो दृष्टम्—अलौकिकं त्रिलक्षणं यदनुमानं लोकायतमते तदप्रमाणम् । लोकप्रसिद्धं यदन्येषामनुमानं तत्तु लौकायतिकानां प्रत्यक्षमेवातः प्रमाणम् । अत एव गोपालाद्यज्ञ-लोकव्यवहाररचनाचतुरस्य धूम-

दर्शनमात्राविर्भूतानलप्रतिपत्तिरूपस्य नाप्रामाण्यम्। अत एव सर्व-मतसंग्रहे—"इदमन्नं क्षुन्निवर्त्तकमन्नत्वात्, ह्यस्तनान्नवदि"त्याद्यनु-मानस्य तत्रैवान्तर्भवति, प्रत्यक्षमूलत्वाविशेषात्। अत एव लोकप्रसिद्ध-मनुमानं लोकायतमतेऽपि प्रमाणमेव। परं नानुमानतया अपि तु प्रत्यक्षतयैव। प्रत्यक्षमूलत्वात् तन्मते प्रत्यक्ष एवान्तर्भूतम्। तद्दृप-देशमनुमानं लोकायतिकानां प्रत्यक्षमपि परलोकप्रतिपादकं न भवति प्रत्यक्षत्वाविशेषात्। अलौकिकमतीन्द्रियं सामान्यतो दृष्टं यदनुमानं तदप्रमाणमेव। अत एव तन्न परलोकप्रतिपादकम्। स्वयमसिद्धं कथं परान् साधयेत्।

अथ इदमेव जन्म पूर्वजन्मान्तरमन्तरेण न युक्तमिति जन्मान्तर-लक्षणस्य परलोकस्य सिद्धिरिष्यते, तत् किमियमर्थापत्तिः, अथानुमानं वा? न तावदर्थापत्तिः तल्लक्षणाभावात्। "दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यते" इति हि तस्या लक्षणं विचक्षणैरिष्यते। न तु जन्मान्तर-मन्तरेण नोपपत्तिमदिदं जन्म इति सिद्धम्। मातापितृसामग्रीमात्र-केण तस्योपपत्तेः। अथ कथम् पूर्वोपात्तादृष्टमन्तरेण मातापितृ-विलक्षणं शरीरम्? न हि सर्वदा कारणानुरूपमेव कार्य्यम्। अथा-नाद्यनन्त आत्मा अस्ति, तमाश्रित्य परलोकः साध्यते। न ह्येकानु-भवितृव्यतिरेकेणानुसन्धानं सम्भवति, भिन्नानुभवितर्य्यनुसन्धानादृष्टेः— तदयुक्तम् "परलोकिनोऽभावात् परलोकाभावः।" न हि अनाद्यनन्त आत्मा प्रत्यक्षप्रमाणसिद्धः। अनुमानेन च इतरेतराश्रयदोषप्रसङ्गः। न चासिद्धमसिद्धेन साध्यते।

न चागमादिनाऽपि परलोकसिद्धिः। तेषां प्रामाण्यासत्त्वः। न चागमप्रमाणसिद्धं परलोकादिकमभ्युपगन्तुं युक्तं तदभावस्यापि तथा अभ्युपगमप्रसङ्गात्। अत एव तेषां वचनं—

नास्त्यात्मा देहाद् व्यतिरिक्तमूर्त्तिर्भोक्ता स लोकान्तरितः फलानाम्।
आशेयमाकाशतरोः प्रसूनात् प्रथीयसः स्वादुफलप्रसूतौ॥

यदि गच्छेत् परं लोकं देहादेष विनिर्गतः।
कस्माद् भूयो न चायाति बन्धुस्नेहसमाकुलः॥ इत्यादि

लोकायतमत्र खण्डितं विविधैर्युक्तिजालैरास्तिकवादिभिः, परं तेषामवतारणात्र न सङ्गच्छते। केवलं यत्किञ्चनात्रनिबद्धं, परलोकविषये लौकायतिकानां तदेवाभिमतं नवेति विचारयन्तु बहुश्रुता महाभागा इति सानुनयं निवेद्य विरमामि।

---

## सर्वप्रत्ययमाला *

[ श्रीशङ्करार्य्यविरचिता ]

शिवात्मजमविघ्नाय सुरासुरसुपूजितम्।
सर्वक्रियादौ त्वभ्यर्च्य वन्दे गणपतिं प्रभुम्॥ १
गोविन्दं गोपगोपीनां नन्दनं नन्द-नन्दनम्।
वन्दे वृन्दारकैर्वन्द्यमिन्दिरानन्दकारिणम्॥ २
प्रत्ययग्रथितैः शब्दैः पर्य्यायैः सर्वधातुजैः।
शङ्करार्य्यानुजो मालां शङ्करार्य्यः करोम्यहम्॥ ३
क्रियाक्रमोक्तशब्दानां पर्य्यायपदविस्तृता।
सर्वप्रत्ययमालेयं बालशिक्षार्थमुद्धृता॥ ४
दशाध्यायस्थ-भूवादि सर्वधातुक्रियाक्रमम्।
श्लोकाष्टकेन वक्ष्यामि शतात् प्राक् सकलाः क्रियाः॥ ५
क्रियापदप्रपञ्चेऽत्र क्रमयुक्ते कृते सति।
सर्वस्येष्टपदं द्रष्टुमप्रयत्नेन शक्यते॥ ६
उत्पत्तीहा-क्रियावृद्धि-शिक्षाध्ययनसंशयाः।
चिन्ताबोधोक्त्युपस्थानस्मृतिबुद्धिविनिश्चयाः॥

---

* प्रकाश्यते—श्रीरामलिङ्गशास्त्रिणा।

मानपालनसेवार्चा नमस्कारः स्तुतिस्तथा ।
इच्छार्थनार्पणादानचौर्य्यालङ्कारदीप्तयः ॥ ८
वीजनं ज्वलनं होमो दाहः परिणयः क्रमः ।
पाको भुक्तिर्भक्षणं च लेहनं पानपूरणे ॥ ९
वीक्षणं चुम्बनाश्लेषलज्जारतिसुखानि च ।
सुप्तिजागरणोन्मेषाः प्रेषणं नोदवर्जने ॥ १०
अन्वेषणञ्च सन्नाहो बन्धनारोहनिर्गमाः ।
गमनं धावनं प्राप्तिः स्रवणञ्चावगाहनम् ॥ ११
स्नानोच्चणे शुद्धिसृजो लङ्घनाह्वाननिस्वनाः ।
निन्दाधिक्षेपकोपाश्च युद्धमावरणं भयम् ॥ १२
कम्पच्छेदभिदाचूर्णनिग्रहः पतनं पुनः ।
लुठनं वमनं मूत्रं ग्लानिर्मूर्च्छामृतिस्तथा ॥ १३
शोकाक्रन्दजयावृत्तिप्रवेशाश्चोच्छ्रयः स्थितिः ।
आसनं वसनिष्कर्षक्षमाजीवनमित्यसौ ॥ १४
क्रियाक्रमोऽनुसन्धेयो मालापाठपरैस्तदा ।
क्रियाक्रमेण चैतेन कस्यचिच्चरितेन च ॥ १५
उक्तोऽर्थः सर्वमालानां मालाः सर्वास्त्रयोदश ।
सुबन्ते कृत्पदैर्मालाश्चतस्रः स्युः क्रियाक्रमात् ॥ १६
तिङन्ते नव मालाः स्युर्लकारनवकस्य वै ।
तत्तन्मालासु सुव्यक्तं प्रत्ययार्थाः समीरिताः ॥ १७
प्रकृतिप्रत्ययार्थज्ञो भवेद् बालोऽपि पण्डितः ।
प्रक्रियां परिभाषाञ्च प्रत्याहाराद्युपद्रवम् ॥ १८
धातुपाठक्रमं माला विस्पष्टार्था न चेच्छति ।
यस्तु व्याकरणाब्धिस्थः शब्दलक्षणतत्परः ॥ १९
तस्यैव परिभाषादिसङ्केतः प्रत्ययार्थिनः ।
आप्तप्रयोगसन्दृब्धैः पदैर्माला मया कृता ॥ २०

पदान्यतः प्रयोक्तारः सुविश्वस्ताः प्रयुञ्जताम् ।
मालामार्गगता बालाः सिद्धरूपप्रपाठकाः ॥ २१
भविष्यन्त्यल्पकालेन शाब्दिकानां पुरःसराः ।
सर्वे शब्दा विभक्त्यन्ता इति पूर्वं विभक्तयः ॥ २२
विभक्त्यर्थाश्च कथ्यन्ते मालाशेषा मयाऽधुना ।
विभक्त्यन्ताः पदाख्याः स्युः शब्दास्तेऽपि पुनर्द्विधा ॥ २३
सुबन्ताश्च तिङन्ताश्च सुपः सप्त विभक्तयः ।
प्रथमा च द्वितीया च तृतीया तिथिनामिकाः ॥ २४
चतुर्थी पञ्चमी षष्ठी सप्तमीति समीरिताः ।
प्रथमादिविभक्तीनामेकैकस्या अपि क्रमात् ॥ २५
एकद्विबहुपूर्वाणि त्रीणि स्युर्वचनान्यथ ।
एकत्वे त्वेकवचनं द्वित्वे द्विवचनं तथा ॥ २६
त्रित्वाद्यर्थविवक्षायां वचनं बहुपूर्वकम् ।
कारकं स्यादिभक्त्यर्थो लिङ्गं संख्या च गम्यते ॥ २७
क्रियानिमित्तभूतं यत् तत्सर्वं कारकं भवेत् ।
यागावघातपाकादिव्यापारोऽत्र क्रियामतम् ॥२८
कर्त्ता च कर्म करणं सम्प्रदानं तथैव च ।
अपादानाधिकरणे कारकाणीति षड् विदुः ॥ २९
क्रियाहेतुषु षट्स्वत्र स्वतन्त्रो यो विवक्षितः ।
स स्यात् कर्त्ताऽत्र कर्मादि-कारकाणामधीश्वरः ॥ ३०
यदीप्सिततमं कर्त्तुस्तत्तु स्यात् कर्मकारकम् ।
कर्त्तुर्यत् साधकतमं क्रियायां करणं भवेत् ॥ ३१
ग्रहीता सम्प्रदानं स्याद्यस्मै कर्त्ता ददात्यसौ ।
यतो वियोगः कस्यापि तदपादानकारकम् ॥ ३२
क्रियाश्रयस्य कर्त्तुर्वा धारणात् कर्मणोऽथवा ।
आधारभूतं यद्वस्तु तच्चाधिकरणं भवेत् ॥ ३३

क्रियापदान्वयवशात् कारकेषु विभक्तयः ।
क्रियापदं त्रिधैव स्यात् कर्तृकर्मक्रियार्थतः ॥ ३४

कर्त्तरि प्रथमैव स्यात् क्रियापदसमीरिते ।
सम्बोधने च प्रथमा तच्चाह्वानं स्वनामभिः ॥ ३५

कर्मणि स्याद्द्वितीयाख्या तृतीया करणे भवेत् ।
चतुर्थी सम्प्रदाने स्यादपादाने च पञ्चमी ॥ ३६

षष्ठी तु कारकं मुक्त्वा सम्बन्धार्थे व्यवस्थिता ।
सप्तम्यत्राधिकरणे तदुदाहरणं यथा ॥ ३७

ददौ कर्णो महाराजः कुण्डले द्वे स्वपाणिना ।
इन्द्रायादाय कर्णाभ्यां सतां मार्गे व्यवस्थितः ॥ ३८

अर्थवन्तस्तु ये शब्दा धातुप्रत्ययवर्जिताः ।
ते प्रातिपदिकाख्याः स्युस्ते सुबन्ता इतीरिताः ॥ ३९

शब्दशब्दवदेवात्र स्वार्थमाने विवक्षिते ।
विज्ञेयाः प्रातिपदिका धातवः प्रत्यया अपि ॥ ४०

कल्पितास्वार्थवत्त्वेन शशशृङ्गादयोऽपि ये ।
ज्ञेयाः सप्तविभक्त्यन्तास्तिङन्तव्यतिरेकिणः ॥ ४१

एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः ।
मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः ॥ ४२

रूढाश्च यौगिकाः शब्दा योगरूढा इति त्रिधा ।
रूढ्यैवार्थं वदन्तोऽत्र रूढा घटपटादयः ॥ ४३

तिङन्ता यौगिकाः सर्वे कृदन्तेष्वपि केचन ।
यौगिकेष्वपि ये केचिद्विशेषे यत्र कुत्रचित् ॥ ४४

योगरूढा इति ज्ञेया धृतराष्ट्राम्बुजादयः ।
उणादिपक्षे वृक्षादिशब्दानामपि भाषते ॥ ४५

धातुजत्वं कृदन्तत्वं तत्रेहेच्छति पाणिनिः ।
सूचितो यो विभक्त्यर्थो विस्तरेणाथ कथ्यते ॥ ४६

प्रथमा साऽर्थमात्रे स्यात् सलिङ्गे वचनाधिके।
परिमाणे द्विधाभूते साध्यसाधनभेदिते ॥ ४७
अर्थमात्रविवक्षायामुच्चैर्नीचैः शनैरिति।
वृक्षो घटः पटश्चेति वस्तुमात्रेऽप्युदाहृताः ॥ ४८
वृक्षः स्त्री कुण्डमित्यादि लिङ्गमात्रे विवक्षिते।
एको द्वौ बहवश्चेति वचने तु विवक्षिते ॥ ४९
द्रव्ये परिमिते प्रस्थास्तिलाः प्रस्थाश्च तण्डुलाः।
आढकं कुडवं प्रस्थं अरत्निश्चेति साधने ॥ ५०
कृत्तद्धितसमासैश्च तथा तिङ्प्रत्ययैरपि।
प्रथमाऽभिहितेषु स्यात् सा चान्यत्रैव वक्ष्यते ॥ ५१
सम्बोधने च प्रथमा तच्चाह्वानं स्वनामभिः।
तदभिव्यक्तये क्वापि हे-शब्दः प्राक् प्रयुज्यते ॥ ५२
हे शिशो! शीघ्रमागच्छ, वटो! वेदमधीष्व भोः।
चोर! तिष्ठ, रिपो! मागा, रथं वाहय सारथे! ॥ ५३
प्रथमार्थो भवत्येवं द्वितीयार्थोऽथ कथ्यते।
द्वितीया कर्मणि प्रोक्ता कर्मेप्सिततमं नृणाम् ॥ ५४
निर्वर्त्यञ्च विकार्यञ्च प्राप्यमीप्सितमेव च।
अनीप्सितं चाकथितमिति कर्मात्र षड्विधम् ॥ ५५
प्रकृतेरविनाशीत्थं कार्यं निर्वर्त्यमिष्यते।
घटान् करोतीत्युक्ते स्यात् तेषां निर्वर्त्य-कर्मता ॥ ५६
प्रकृत्युच्छेदसम्भूतं विकार्यं कर्म कथ्यते।
काष्ठं भस्मीकरोतीति विकार्यं कर्म तद् भवेत् ॥ ५७
इन्द्रियैः प्राप्यते यत्तु तत् प्राप्यं कर्म कथ्यते।
स्वदेशान् गच्छतीत्युक्ते देशानां प्राप्य-कर्मता ॥ ५८
भुङ्क्तेऽन्नं मृष्टमित्यत्र त्वन्नस्येप्सित-कर्मता।
प्रसिद्धमीप्सितं कर्म व्याप्तत्वादन्यकर्तृषु ॥ ५

कर्त्तुस्त्वनीप्सितं क्वापि कर्म स्यात्तदुदीर्य्यते ।
विषं भुङ्क्ते वने चोरान् व्याघ्रान् पश्यत्यरीनिति ॥ ६०
इप्सितार्थ-निमित्तं यदनुक्तं कारकान्तरैः ।
तत्कर्माकथितं ज्ञेयमेतच्चाहुर्द्विकर्मकम् ॥ ६१
दुहि-याचि-चिञः शासि-रुधि-भिक्षि-ब्रुवस्तथा ।
कर्माण्यकथितानि स्युः पृच्छतिर्नयतिस्तथा ॥ ६२
गां दोग्धि दुग्धं गोपालो धनिनं याचते धनम् ।
पुष्पाण्यपचिनोत्येष वृक्षान् सर्वान् सुपुष्पितान् ॥ ६३
शास्ति माणवकं धर्मं गां रुणद्धि व्रजं भटः ।
धनिनं भिक्षते द्रव्यं शिष्यान् वाक्यं ब्रवीति च ॥ ६४
शूद्रं पृच्छत्यसौ मार्गम् अजां ग्रामं नयत्यपि ।
गतिबुद्ध्यशनार्थेषु शब्दकर्मक-धातुषु ॥ ६५
अणिजन्तेषु यः कर्त्ता स्वतन्त्रोऽकर्मकेषु च ।
स कर्त्ता कर्मसंज्ञः स्यात् तेष्वेव णिचि भाषिते ॥ ६६
भृत्यान् गमयति ग्रामं बोधयेत् स शिशून् हितम् ।
ओदनं भोजयत्यार्य्यान् वेदान् पाठयति द्विजान् ॥ ६७
पाययत्यबलां मद्यं पार्श्वे शाययति प्रियाम् ।
शीङ्स्थासामधिपूर्वाणामाधारे वसतेस्तथा ॥ ६८
आङ्भ्यनूपपूर्वस्य द्वितीया तद्यथा क्रमात् ।
अधिशेते भुवं भिक्षुरधितिष्ठत्यसौ मठम् ॥ ६९
अध्यास्ते नृपतिः पीठमावसत्यवनिं जनः ।
गृहानधिवसन्त्यन्ये सेनामुपवसेदिति ॥ ७०
अभुक्त्यर्थोपवासश्चेत् चैत्रेषूपवसेदिति ।
कालस्य चाध्वनो वापि द्रव्येण क्रियया गुणैः ॥ ७१
द्वितीयाऽत्यन्तसंयोगे त्वध्वशब्दविवर्जिते ।
षाण्मासान् सततं भाष्यमधीते वत्सरान् धनी ॥ ७२

षण्मासान् गौश्च कल्याणीत्येवं कालेऽवगम्यताम् ।
योजनं शर्करामार्गे क्रोशं गायन्ति गायकाः ॥ ७३
योजनं कुटिला गङ्गेत्येवं स्यादध्ववाचिषु ।
अन्तरेणान्तराधोऽधो निकषा परितोऽभितः ।
अध्यध्युभयतो हा धिगुपर्य्युपरि सर्वतः ॥ ७४
अन्तरेण घृतं भुङ्क्ते त्वां च मां चान्तरा स्थितः ।
सेनामधोऽधः पतति पर्वतं निकषा नदी ॥ ७५
राजानं परितो भृत्या अयोध्यामभितो द्रुमाः ।
वृक्षमध्यधि शाखाश्च नदीमुभयतो द्रुमाः ॥ ७६
हा देवदत्तं धिग् दुष्टान् उपर्य्युपरि वारिदान् ।
द्वितीयार्थो भवेदेवं तृतीयार्थोऽथ कथ्यते ॥ ७७
तृतीया करणेऽत्र स्यात् कर्तृत्वे चापि कथ्यते ।
करणं द्विविधं प्रोक्तं बाह्याभ्यन्तरभेदतः ॥ ७८
शरीरावयवादन्यद् बाह्यनेत्रादि चान्तरम् ।
वृक्षं छिनत्ति खड्गेन सूर्य्यं नेत्रेण पश्यति ॥ ७९
मनसा निश्चिनोत्येष हस्ताभ्यां ताडयत्यरीन् ।
यदा क्रियापदं वक्ति कर्म वा केवलां क्रियाम् ॥ ८०
कर्त्तर्य्यपि तृतीया स्यात्प्रथमा तत्र कर्मणि ।
ओदनो भुज्यते विप्रैः कुलालैः क्रियते घटः ॥ ८१
एषा तृतीया कर्त्रर्था कर्मार्थैस्तिङ्पदैर्युता ।
ब्राह्मणैरोदनो भुक्तः कुलालेन कृतो घटः ॥ ८२
एषा तृतीया कर्त्रर्था कर्मार्थैः कृत्पदैर्युता ।
वृक्षेण क्षीयते वृद्धैः स्त्रियते भ्राम्यतेऽम्बुदैः ॥ ८३
एषा तृतीया कर्त्रर्था भावार्थैस्तिङ्पदैर्युता ।
गत्यर्थधातुजैर्योगे तृतीयाऽऽधारगोचरा ॥ ८४
सेतुना गच्छति 'पथा याति' धावति वाजिना ।

अप्रधाने हतीया स्यात् सहार्थपदयोगतः ॥ ८५
यस्य साक्षात् क्रियायोगः प्रधानोऽन्यः सहागतः ।
पुत्रेण साकमायाति पिता पुत्रैः सहागतः ॥ ८६
पुत्रेण सार्द्धं धनवान् पिता स्थूलः सहानुजैः ॥ ८७
साकं स्तनाभ्यां जघनं महत्ते कान्ते कराभ्यां नयने च दीर्घे ।
स्कन्धैश्च दन्तैरलकैश्च सार्द्धं मध्येन तन्वी नवरोमराजिः ॥ ८८
प्रकृत्यादिगणेभ्यः स्यात्तृतीया तदुदाहृतिः ।
प्रकृत्या दर्शनीयोऽयं प्रकृत्या सुभगो ह्ययम् ॥ ८९
प्रायेण याज्ञिको ह्येष गार्ग्यो गोत्रेण मे गुरुः ।
लक्षणेन तृतीया स्यात्तदित्थम्भूतलक्षणम् ॥ ९०
अनिश्चितोऽपि येनार्थः स्पष्टं निश्चीयते यथा ।
श्वेतच्छत्रेण राजानं बटुं कृष्णाजिनेन च ॥ ९१
तथा शास्त्रैरुपाध्यायमद्राक्षीदित्युदाहृतिः ॥ ९२
तृतीयार्थो मया प्रोक्तश्चतुर्थ्यर्थोऽथ कथ्यते ।
सम्प्रदाने चतुर्थी स्यात् कार्य्यार्थं यत्र कारणम् ॥ ९३
हिरण्यं कुण्डलायेदं दारु यूपाय कल्पितम् ।
तुमुन्नर्थसमानार्थाः शब्दा ये भाववाचिनः ॥ ९४
तेषु योगे चतुर्थी स्यात्तदुदाहरणं यथा ।
गम्यतामर्थलाभाय क्षेमाय विजयाय च ॥ ९५
शत्रुपक्षविनाशाय पुनः सन्दर्शनाय च ।
संयमाय श्रुतं धत्ते धनं दानाय भुक्तये ॥
यज्ञाय पशवो नीता जाता विप्राः स्वकर्मणे ॥ ९६
नमः-स्वस्ति-स्वधा-स्वाहाऽलं-वषट् शब्दसंयुते ।
पदार्थेऽपि चतुर्थी स्यात् तदुदाहरणं यथा ॥ ९७
नमः शिवाय देवाय स्वस्ति गोभ्यो जनाय च ।
स्वधा पितृभ्यो देवेभ्यः स्वाहा स्वाहाऽग्नये तथा ॥ ९८

अलं मल्लाय मल्लोऽयं वादो शक्तोऽन्यवादिने ।
पर्य्याप्तः सारमेयाय सारमेयस्तथैव च ॥ ९९
शक्तो वृषो वृषायासौ शिखायै वषडित्यपि ।
इन्द्राय वौषडेवं स्यात् कवचाय हुमित्यपि ॥ १००
क्रुधद्रुहेर्ष्यासूयार्थ-धातुयोगेऽपि यं प्रति ।
कोपस्तत्र चतुर्थी स्यात् स्पृहेर्धातोरपीष्यते ॥ १०१
मित्राय क्रुध्यति द्रुह्यत्यमित्रायेर्ष्यति द्विषे ।
धनिभ्योऽसूयते रिक्तः पुष्पेभ्यः स्पृहयत्यपि ॥ १०२
द्वितीयैव विभक्तिः स्यादभिपूर्व-क्रुधद्रुहोः ।
अभिक्रुध्यत्यसौ शत्रूनभिद्रुह्यत्युपागतान् ॥ १०३
रुच्यर्थानां प्रीयमाणे चतुर्थी विहिता यथा ।
मधुरं रोचते मह्यमम्लमस्मै तु रोचते ॥ १०४
श्लाघ-ह्नुङ्-स्था-शपामर्थं यस्मै ज्ञापयितुं श्रमः ।
चतुर्थी विहिता तत्र तदुदाहरणं यथा ॥ २०५
स्वामिने श्लाघते भृत्यः प्रत्यमित्राय निह्नुते ।
कामिने तिष्ठते वेश्या चोराय शपते द्विजः ॥ १०६
विकल्पेन चतुर्थी स्यात् गत्यर्थानां तु कर्मणि ।
चेष्टायां गम्यमानायाम् अध्वशब्दविवर्जिते ॥ १०७
ग्रामाय गच्छति जनो ग्रामं गच्छन्ति वाजिनः ।
अध्वानं याति मनसा गङ्गां यात्यत्र नेष्यते ॥ १०८
अप्राणिषु चतुर्थी स्यान्मन्यकर्मण्यनादरे ।
तृणाय मन्यते शत्रून् तृणं वा मन्यते नृपः ॥ १०९
उत्पातैर्ज्ञाप्यमानेऽपि चतुर्थी तदुदाहृतिः ।
वाताय कपिला विद्युदातपायातिलोहिनी ॥ ११०
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ।
चतुर्थ्यर्थो मया प्रोक्तः पञ्चम्यर्थोऽथ कथ्यते ॥ १११

पञ्चमी स्यादपादाने वृक्षात् पर्णं पतत्यधः ।
यतो वियोगः कस्यापि तदपादानकारकम् ॥ ११२
यतो यत् किञ्चिदादत्ते यतोऽपैति यतो भयम् ।
यतः पाति यतोऽनिष्टादिष्टाद्वा प्रतिषेधते ॥ ११३
यतः पराजयोऽसह्यादन्तर्धत्ते च जायते ।
अधीते वा प्रभवति प्रमाद्यति जुगुप्सते ॥ ११४
यतो विरामो भीत्रार्थं पर्य्यायेष्वपि दृश्यते ।
निषङ्गाच्छरमादत्ते प्रयाति स्वगृहाद्बहिः ॥ ११५
वटुर्बिभेत्युपाध्यायाद् बौद्धेभ्यो रक्षति श्रुतिम् ।
गां वारयति सर्पेभ्यः पङ्कादश्वं निषेधति ॥ ११६
प्रपराजयते धूमादन्तर्धत्ते वधूर्जनात् ।
शरीराज्जायते रक्तम् अधीते स्वगुरोः श्रुतिम् ॥ ११७
पर्वतात्प्रवहत्यम्बु प्रमाद्यति जलौकसः ।
वाताज्जुगुप्सतेऽत्यन्तमधर्माद्विरमत्यसौ ॥ ११८
पञ्चम्येव भवत्यत्र ल्यब्लोपे तस्य कर्मणि ।
मञ्चाद्वीक्षत इत्यत्र मञ्चमारुह्य वीक्षते ॥ ११९
आडम्बरान्नृपोऽभ्येति बालो बाष्पात्प्ररोदिति ।
अन्येतराराद्राजाहिकालदिग्देशवाचिभिः ॥ १२०
अञ्चूत्तरपदैर्योगे पञ्चमी स्याद्दते-युते ।
अन्यः पिशाचाद्वेतालो राक्षसादितरोऽसुरः ॥ १२१
नृपाद्विलक्षणो मन्त्री भिन्नः कुम्भाद्घटस्तथा ॥ १२२
गृहादाराज्जलं पूर्णम् आराद्दूरान्तिकार्थकम् ।
दक्षिणा पर्वती ग्रामादुत्तराहि महानदी ॥ १२३
ग्रीष्मात्पूर्वो वसन्तः स्यात् वत्सरात् प्राग्भविष्यति ।
पूर्वा दिशः प्रतीचीयं पूर्वदेशादसौ परः ॥ १२४

( क्रमशः )

संस्कृत-साहित्य-

# परिषदस्त्रयोदशवर्षीय-कार्य्यविवरणम्

[ निबन्धकः—परिषत्-सम्पादकः डक्टर श्रीअमरेश्वरठाकुर-
वेदान्तशास्त्री एम्. ए. पि. एइच् डि ]

"तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे।
यत्प्रसादात् प्रलीयन्ते मोहान्धतमसच्छटाः॥"

निखिलचराचरस्थितिर्यस्य खलु सर्वशक्तिमतो महिमानमुद्घोषयति, तं परमात्मानं परदेवं भूयोभूयः संस्मरन् कृपयात्रोपस्थितान् सभाजनान् यथायोग्यं प्रणाम-नमस्कार-सादरसम्भाषणादिभिः सम्भावयन् परिषत्प्राणभूतयोः स्वर्गतयोः सम्पादकचरयोर्वियोगेन नितरां व्यथिताया वत्सराधिककालं मयि न्यस्तभाराया अस्यास्त्रयोदशवार्षिककार्य्यविवरणं माननीय-सभापतिमहोदयस्य तथा भवतामाज्ञया समासतो वाचयिष्यामि।

मान्याः सामाजिकाः, अद्य तावत् प्रथममेवायाति मनसि संहारलीलैकरसिकस्य दक्षिणाशाधिपतेरदक्षिणस्य गोष्पति-पशुपति-ग्रहणेनापि तृप्तिमनापन्नस्य दुरन्तकृतान्तस्य क्रूरहस्तन्यासः परिषदि। ये खलु वदान्यप्रवराः सत्कार्य्यदीक्षितैकजीवना उत्तरकलिकातावासिनां परमवलम्बनमासंस्तेऽपि उदारधियो विद्वद्वर्य्या ललितकुमार-मित्रमहोदयाः परिषत्परिपोषकाणामग्रेसराः पशुपतिप्रीतिमनुस्मरन्त इव पशुपतिमिवानुसस्रुः। तेषां महाप्रयाणेन वयं परं सन्ताप-मधिगताः, परिषदपि नितरां हानिग्रस्ता इत्यत्र किमधिकं ब्रवीमि। तथापि जगतो दुरतिक्रमां नियतिमनुचिन्तयन्नेव शोकभारं लघूकृत्य कथञ्चिदिव कृत्यपरेषु मनो नियोजयामि।

विगतवर्षीयेषु परिषत्कार्य्येषु आदावेव समुल्लेखमर्हन्ति वार्षिक-सभाकृत्यजातानि। द्वादशवार्षिकमहोत्सवः खलु विगते वर्षे सौर-भाद्रस्य तृतीयदिवसे अत्रैव भवने सुसम्पन्नः सञ्जातः, तत्र कल्याण-मूर्त्तीनां विद्वत्सु प्रथितयशसां संस्कृतशास्त्रेषु श्रद्धासम्पन्नानां प्राड्विवाकपदवीमारूढानां श्रीमतां द्वारिकानाथमित्र एम्. ए. डि. एल्. महोदयानामाध्यक्ष्यमासीत्। गीर्वाणवाणीसेवापरायणानाम् अन्येषाञ्च बहूनामेव गुणमानसम्पन्नानां प्रधानपुरुषाणां समागमेन सभा किमपि सौष्ठवं गौरवं वैशिष्ट्यञ्च समाधत्त। सभापतेर्वरणादूर्द्धमेव सङ्गीत-कला-पारङ्गमः श्रीमान् विष्णुपददत्तमहोदयः संस्कृतोपनिबद्धोद्बोधन-सङ्गीतेन सामाजिक-वृन्दानां मनोरञ्जनं चकार। ततो वर्त्तमानसम्पा-दकेन वार्षिकविवरणे पठिते परिषत्सर्वस्वभूतानां परिषदोऽन्यतर-सम्पादकानां पशुपतिप्रतिमानां डाक्तार-पशुपतिनाथशास्त्रिमहोदयानां तैलचित्रं सभापतिमहोदयेन प्रतिष्ठापितमासीत्। ततो नूतनवर्षीय-कार्य्यकारकाणां नामानि श्रीमच्चिन्ताहरणकाव्यतीर्थेन वाचितानि। ततः परिषत्सदस्यानां कलिकाता-राजकीय-संस्कृत-महाविद्यालयस्य धर्मशास्त्राध्यापकानां सुपरिशीलितनिगमागमानां श्रीमतां शितिकण्ठ-वाचस्पतिपादानां महामहोपाध्यायेत्युपाधिप्राप्तिं निमित्तीकृत्य तथा सुधीप्रवराणां देशहितेषु प्रयत्नपराणां श्रीमतां वद्रिदासगोयेन्का-महाभागानां सि. आइ. इ. इत्युपाधिप्राप्तिं निमित्तीकृत्य अभि-नन्दने सञ्जाते। ततः सभापतिमहोदयैः सुललित-भाषयाऽभिभाषणं कृतम्। प्रसङ्गतस्ते म्याट्रिकुलेशनपरीक्षायां संस्कृतस्य नियत-परीक्ष-णीयत्वमवश्यमेव शिक्षाधिकृतैरङ्गीकर्त्तव्यमिति मतं सुदृढं प्राची-कशन्। संस्कृतस्यावश्य-पाठ्यत्वं निराकृत्य यदि ऐच्छिक-पाठ्यत्वं व्यवस्थाप्येत, तदा शिक्षायाः सम्पूर्णता न स्यात्, धर्म्मस्यापि नितरां हानिरेव सञ्जायेत इत्यपि तैः सभापतिमहाभागैः सयुक्त्युपन्यासमुक्तम्। अतः परं परिषत्सदस्यैर्महाकवि-भवभूतिविरचितमुत्तररामचरितं

नाम नाटकं बोधायन-कृतञ्च भगवदज्जुकीयं नाम प्रहसनम् अभिनीते । सुविहित-प्रयोगतया अभिनयस्तावत् सर्वथा सामाजिकानां मनो जहार। अत्र प्रतिपात्रं यत्नाधानं कृतवन्तो नाट्यसम्पादकाः श्रीमन्तो जगन्मोहन-ज्योतिर्विनोद-महोदयाः श्रीमन्तो वामापद-विद्यारत्न-महोदयाश्चास्माकं हार्दिक-साधुवादभाजो भवन्ति।

सभ्यमहोदयाः! परिषदियं सुरभारतीप्रणयिनां तथा अन्येषामपि प्राच्यतत्त्वानुसन्धान तत्पराणां विदुषां कृपादृष्टिलाभे समर्थास्ति इत्यस्माकं महत्प्रमोदस्थानम्। विगतवर्षस्य प्रारम्भ एवासीदेकदा परिषद्-गृहे दिगन्तविश्रुत-प्रकर्षाणां पण्डितप्रकाण्डानामपूर्वः समवायः। तत्र कृपया समागता आसन् महामहोपाध्यायपदभाजः श्रीमन्तः पञ्चाननतर्करत्नाः, द्राविडाः श्रीमन्तो लक्ष्मणशास्त्रिणः, श्रीमन्तो वामाचरणन्यायाचार्य्याः, श्रीमन्तः पार्वतीचरणतर्कतीर्थाः, श्रीमन्तः कृष्णचरणतर्कालङ्काराः, श्रीमन्तश्चण्डीचरणस्मृतिभूषणाः, श्रीमन्तो दुर्गाचरणसांख्यवेदान्ततीर्थाः, श्रीमन्त आशुतोषशास्त्रिणः, श्रीमन्तो भागवतकुमारशास्त्रिणस्तथा अन्ये शास्त्रानुशीलनतत्पराः संस्कृत-रसज्ञाः पण्डितवर्य्याः। सर्वतन्त्रस्वतन्त्राणां श्रीमतां पञ्चानन-तर्करत्नपादानां 'महामहोपाध्याय' विरुदप्राप्तिं समुद्दिश्य परि-षत्पक्षतस्तेषामभिनन्दनं कृतमासीत्। सर्व एव ते विद्वांसः परि-षत्कार्य्यजातानि संवीक्ष्य नितरां हर्षमेव प्रकटयामासुः।

'दीघापतिया' राजवंशप्रदीपो वरेन्द्रानुसन्धानसमितेः प्रतिष्ठापकः कुमारनिभः श्रीमान् शरत्कुमारराय: एम्. ए. महोदयः परिषदि शुभागमनं कृत्वा दृष्ट्वा चास्याः कार्य्यपद्धतिं परामेव मुदं प्रकाशया-मास।

प्रत्नतत्त्वाविष्कार-पटवः 'फ्रान्स'देशीय-पण्डितप्रवराः श्रीमन्तः 'सिल्भाँ-लेभि'-महोदयाः सपत्नीकाः कृपया परिषदि समागत्य, अस्या उद्देश्यजातानि परिज्ञाय दृष्ट्वा च ग्रन्थागारं विशेषतोऽस्य हस्तलिखित-

पुस्तकानि परां प्रीतिमन्वभवन्। महाकवि-भासविरचितं मध्यम-व्यायोगाख्यं नाटकं परिषत्सदस्यैरभिनीतं दृष्ट्वा परिषदा कृताभि-नन्दनास्ते परिषत्कार्य्याणां भूयसीं प्रशंसां कृतवन्तः।

राजकीयशिक्षासचिवाः 'ब्राश'महोदयाः वारद्वयं परिषदि शुभागमनं विधाय परिषत्प्रीतिं सम्यक् प्रकटयामासुः। द्वितीये वारे तद्भगिनी तत्पत्नी च तैः साकं समागते।

'आसियाटिकसोसाइटी' इत्याख्य-सभायाः सम्पादका 'भ्यानम्यानेन'-महोदयास्तथा संस्कृतकाव्यानुशीलनरसिकाः काव्यलेखनचतुराः 'विभार'महोदयाश्च कृपया समागतवन्तः। परिषत्सदस्यैरभिनीतं रूपकं सन्दृश्य सर्वं एव ते संहृष्टमानसाः सञ्जाताः।

विगतवर्षे सौरपौषस्य प्रथमे भागे महामान्यानाम् अनन्तशयना-धीश्वरीणां तथा मान्द्राजप्रदेशवास्तव्यानां व्यवहाराजीवप्रकाण्डानां सार सि. पि. रामस्वामी-आयार-महोदयानां तथाऽन्येषाञ्च केषाञ्चन प्रधानपुरुषाणां परिषदि शुभागमनं सञ्जातम्। सर्वं एव ते अभि-नन्दिताः सन्तः परिषत्कृत्यजातानि तथाऽभिनयञ्च प्रत्यक्षीकृत्य तुष्टमानसा अस्याः पुष्टिमेवाशशंसिरे।

विगते वर्षे कार्य्यकारिण्याः समितेर्द्वादशसंख्याकान्यधिवेशनानि सञ्जातानि। अस्यां समितौ ये तावत् कार्य्यपटवः स्वातन्त्र्यशालिनः सदस्या वर्त्तन्ते तेषामनेक एव समागत्य सुमन्त्रणादिभिः कार्य्यजातं सम्पादयामासुरिति तेषामहमान्तरिकान् साधुवादान् विज्ञापयामि।

समागताः सुधियः! परिषद उद्देश्यं खलु ज्ञातमेव भवद्भिः। वर्त्त-मानयुगे नवभावदीक्षिताः केचन सन्ति, येषां मते पुरातनस्य स्थान-माधुनिकनये नास्त्येव। सर्वं यत् पुरातनं तन्निराकर्त्तव्यं, नवीनमेव साधु तदेव सर्वथा प्रवर्त्तयितव्यमित्येव तेषां मतनिष्कर्षः। 'पुराणमित्येव न साधु सर्वं'मिति वाक्यस्य सत्यत्वे वयं न सन्दिहानाः, किन्तु पुराण-मित्येव वर्जनीयमित्यत्राप्यस्यस्माकं महती विप्रतिपत्तिः। कीदृशं पुराणं

वर्जनीयं, कीदृशं वा रक्षणीयं, कात् स्नेनैव पुराणं वर्जनीयं न वा इत्येतेषां विषयाणां विचारणात् प्राक् पुराणन्तावत् किं-स्वरूपं तदेव परीक्षणीयम्। एतत् पुनः पुरातनशास्त्रनिबद्धवस्तुप्रकाशनेनैव सम्भवेत्। तदपि संस्कृतशिक्षां तद्विस्तारञ्चापेक्षते। अस्य कार्य्यस्य भारः संस्कृतसाहित्यपरिषदा परिगृहीतः। अतः परिषदुद्देश्यं खलु संस्कृतशिक्षाप्रभावविस्तार एव। स च तथ्यपूर्णानां निबन्धानां रचनेन, तद्बहुल-पत्रिका-प्रकाशनेन, लुप्तप्रायाणां संस्कृतग्रन्थानां रक्षणेन, पूर्वं कदापि प्रकाशमनापद्यमानानां प्रकाशनेन, मुद्रितानां ग्रन्थानां संग्रहेण, संस्कृतविद्यालयस्थापनेन, आहार-वासस्थान-पुरस्कारादिना संस्कृतशिक्षार्थिनामानुकूल्यं विधाय तेषामध्यापनेन, संस्कृतरूपकाभिनयेन च सम्भवतीति एतान्येव कार्य्यजातानि परिषदः कर्त्तव्यतया निर्धारितानि वर्त्तन्ते।

आलोच्ये वर्षे अनेक एव शास्त्रानुसन्धानचतुराः संस्कृतरसज्ञाः परिषत्प्रणोदिताः सन्तो निबन्धान् रचयामासुः। तेषां तेषां निबन्धानामनेक एव परिषदः साधारणाधिवेशनेषु पठिताः परिषत्-प्रकाशितपत्रिकायाञ्च निवेशिताः। साधारणसभाश्च एकादशसंख्याः सञ्जाताः। अधोलिखित-निबन्धाः पार्श्वलिखितनामभिः पण्डितवर्य्यैर्निबद्धाः पठिताश्चासन्।—

| | निबन्धः | रचयिता |
|---|---|---|
| १। प्रथमाधिवेशने | पूर्वोत्तरमीमांसायाः सम्बन्धः | श्रीमदशोकनाथभट्टाचार्य्यः एम्. ए. |
| २। द्वितीयाधिवेशने | योगमार्गः | श्रीयुक्त-जानकीनाथसाहित्य-शास्त्री |
| ३। तृतीयाधिवेशने | भाषारत्नम् | " कालीपद-तर्काचार्य्यः |
| ४। चतुर्थाधिवेशने | स्वत्वसमुत्पादः | " अमरेश्वरठाकुरः |
| ५। पञ्चमाधिवेशने | संस्कृतवर्णलेखविमर्शः | " वसन्तकुमारराय-विद्यारत्नः |

६। षष्ठाधिवेशने यमपुरोपर्य्यटनम् ,, वेणुधर-तर्कतीर्थः

७।८। सप्तमाष्टमाधिवेशनयोः हर्षचरितम् ,, विष्णुपदभट्टाचार्य्यः वि.ए.

९। नवमाधिवेशने संहितायां ब्रह्मचर्य्यम् ,, शिवशास्त्री

१०। दशमाधिवेशने सरस्वतीमूर्त्तितत्त्वम् ,, अमूल्यचरणघोष-विद्याभूषणः

११। एकादशाधिवेशने बोपदेवकृता मुग्धबोधटीका ,, चिन्ताहरणचक्रवर्त्ती काव्यतीर्थः एम्. ए.

परिषदो हस्तलिखितपुस्तकविभागे सार्धद्विसहस्राधिका ग्रन्थाः संगृहीता वर्त्तन्ते। गतेऽपि वर्षे साकल्येन किञ्चिदून-सार्धद्विशत-ग्रन्थानां संग्रहो जातः। नवद्वीपवास्तव्यानां वैयाकरणकेशरिणां स्वर्गतानां शिवनारायणशिरोमणि-महोदयानां यानि पुस्तकान्यासन् तानि सर्वाण्येव तस्य सुयोग्य-पौत्रेण वि. ए. इत्युपाधिधारिणा श्रीमदवादिनाथभट्टाचार्य्येण परिषदे समुपहृतानि। 'रङ्गपुर'ख्यस्थानात् श्रीयुक्त-कालीचरणभट्टाचार्य्य-महोदयस्य साहायकेन पञ्चाशदधिकानि पुस्तकानि प्राप्तानि। श्रीयुक्त-वैकुण्ठकुमार-व्याकरणतीर्थ-महोदयस्य प्रयत्नेन 'फरिदपुर' सामन्तसाराख्यस्थानात् श्रीमतां रामप्रसादसमाजदार-महोदयात् पञ्चाशदधिका ग्रन्था लब्धाः। सर्वेभ्य एव एतेभ्यो महानुभवेभ्यो भूयोभूयो धन्यवादान् कृतज्ञताञ्च विज्ञापयामः। प्रसङ्गत एतदवक्तव्यं यत्, कानिचित् परिषत्संगृहीत-हस्तलिखितानि पुस्तकानि अवलम्ब्य केचन निबन्धा रचिता वर्त्तन्ते। तेषु 'बोपदेवकृता मुग्धबोधटीका' इतिशीर्षको यो निबन्धः श्रीमच्चिन्ताहरणकाव्यतीर्थेन निर्मितो वाचितश्च परिषत्-साधारणसभायां, तस्यालम्बनं खलु तन्नामकपरिषद्ग्रन्थ एव। परिषद्ग्रन्थालय-रक्षित-चित्रचम्पूनामानं ग्रन्थमवलम्ब्य 'वाङ्लाय वर्गीर हाङ्गामार प्राचीनतम विवरण' इतिशीर्षको निबन्धस्तथा 'कालिकामङ्गलाख्य' वङ्गभाषामयं ग्रन्थमवलम्ब्य 'विद्यासुन्दरेर उपन्यास ओ कविशेखरेर कालिकामङ्गल' इतिशीर्षको निब-

न्धश्च वङ्गभाषया तेनैव रचितौ। प्रबन्धद्वयं वङ्गीयसाहित्यपरिषत्पत्रिकायां प्रकाशितं वर्त्तते।

मुद्रितपुस्तकविभागेऽपि वयं न शिथिलप्रयत्ना वर्त्तामहे। तत्रास्माभिर्विगते वर्षे सहस्राधिकमुद्रा व्ययिताः। संस्कृतमहामण्डलाख्यं यत् प्रतिष्ठापत्र प्रतिष्ठानं वर्त्तते स्म, तस्य द्विशत-संख्यका बहुमूल्या ग्रन्थास्तत्कर्त्तृपक्षीयैः संस्कृतसाहित्यपरिषदे समुपहृताः। एतेन परिषदो मुद्रितपुस्तकविभागस्य महत्येव वृद्धिर्जाता। अस्या वृद्धेर्निदानं खलु पण्डितवर्य्याणां श्रीमतां कृष्णचन्द्रस्मृतितीर्थ-महाभागानाम् अकपट-प्रयत्न एव। श्रीमन्तो वसन्तकुमाररायविद्यारत्न-महोदया अपि चत्वारिंशत्संख्यकानमूल्यग्रन्थान् कृपया परिषदे अर्पितवन्तः। सर्वे एव ते परिषत्परिपुष्टिप्रयत्नपरा महात्मानोऽस्माकं हार्दिकान् धन्यवादानर्हन्ति।

मुद्राप्यमाणेषु ग्रन्थेषु छान्दोग्यभाष्यं नाम कर्म्मकाण्डग्रन्थः 'स्कटिशचार्च'कलेजाध्यापक-श्रीमद्दुर्गामोहनसांख्यतीर्थ एम्. ए. महोदयेन सम्पाद्यमानः सम्पूर्णप्रायो वर्त्तते। नव्यन्यायग्रन्थस्य 'भाषारत्नस्य' च समधिकांशस्य सम्पन्नं मुद्रापणम्। 'आनन्दलतिकाया' अपि अर्धपरिमितांशो मुद्रितः। आशास्महे सर्वे एव ग्रन्था वर्त्तमानवर्षाभ्यन्तर एव सम्पूर्णतां यास्यन्तीति। परिषत्प्रकाशितानां ग्रन्थसमूहानां देशीयेषु विदेशीयेषु च पत्रिकानिवहेषु प्रशंसामतिमात्रां पश्यामः। पवनदूत-ग्रन्थस्य विविधतत्त्वपूर्णस्य मुखबन्धस्य सारांशः हिन्दीभाषया परिणम्य श्रीमता बलदेवोपाध्यायेन "कोशोत्सवस्मारकसंग्रह" नाम्नि ग्रन्थे प्रकाशितः। मुद्रापणार्थमस्माभिः साम्प्रतं सप्तसंख्यका ग्रन्था गृहीता वर्त्तन्ते। तेषु रामायणाख्यो ग्रन्थ. प्राधान्येन समुल्लेखमर्हति। जानन्त्येव भवन्तो यत् वङ्गदेशीयपाठमुपजीव्य मुद्रितं रामायणमधुना दुष्प्रापमेव। बहोः कालात् पूर्वं 'गोरेसियो' नामा कश्चित् इटालीदेशीय-पण्डितस्तद्देशीयभाषोपनिबद्धभूमिकासहितं रामायणं मुद्राप्य प्राका

शयत्। तत् खलु वङ्गदेशीय-पाठावलम्बनेन सम्पादितमासीत्। ततः परं पुण्यक्षेत्रे वाराणस्यां वङ्गदेशीय-पाठसमन्वित-रामायणप्रणयने केषाञ्चन पण्डितानां चेष्टा प्रावर्त्तत। सा खलु चेष्टा न सफलतां गता। वङ्गीयानामस्माकं वङ्गदेशीयं रामायणं नास्तीति नास्माकं गौरवायेति मन्यमानैरस्माभिः रामायण मुद्रापण-कार्य्यं समारब्धम्। सम्पादनभारस्तु श्रीमदक्षयकुमारशास्त्रि- श्रीमत्-कालीपदतर्काचार्य्य-श्रीमत्-कृष्णचन्द्र-स्मृतितीर्थ-श्रीमद्-वागीश्वरकाव्यतीर्थ-श्रीमच्चिन्ताहरणकाव्यतीर्थ एम्. ए.-श्रीमज्जानकीनाथसाहित्य-शास्त्रिषु तथा प्राधान्येन महामहोपाध्याय-श्रीयुक्त-दुर्गाचरण-सांख्य-वेदान्ततीर्थेषु महामहोपाध्याय-श्रीयुक्त-भागवतकुमार-शास्त्रिमहोदयेषु च न्यस्तः। एतत्तु महान्तमर्थव्ययमपेक्षते। ब्राह्मणपण्डितबहुलाया दरिद्रभूयिष्ठायाः परिषदः स न सम्भवेदतो भवन्तोऽत्र दत्तदृष्टयो भवन्त्विति सानुनयं प्रार्थयामहे।

बहुषु शास्त्रेषु सुकृतपरिश्रमाणां धीरमतीनां पूतचरितानां श्रीमतां कालीपद-तर्काचार्य्य-महाभागानामाध्यक्ष्येण परिषद्विद्यालयः सुष्ठु प्रचलति। संस्कृतविद्यालयस्योन्नतिविधानं यादृशमर्थमपेक्षते तादृगस्माकं नास्ति। अवस्थाप्रातिकूल्येऽपि अस्माभिर्विद्यालयविभागेषु सार्धत्रिशताधिका मुद्रा व्ययिताः। अष्टाविंशतिसंख्यकाश्छात्राः परिषद्विद्यालये अध्यापितास्तेषु सप्तसंख्याका विभिन्नशास्त्रेषु परीक्षां दत्तवन्तः, षट्संख्यकाः समुत्तीर्णाः। स्थानाभावात्तथाऽर्थाभावाच्छात्राणाम् आहारवासस्थानादि-दानविधौ समीचीनव्यवस्थाकरणेऽसामर्थ्यमेव विद्यालयोन्नतिप्रतिबन्धहेतुभूतमित्यस्माकं महद्दुःखकारणं संस्कृतमित्रपक्षपातिनाम्।

पूर्वेष्विव वर्षेषु विगतेऽपि वर्षे संस्कृतभाषामयी परिषत्पत्रिका यथाकालं प्रकाशमापद्यमाना सहृदयानामानन्दवर्धने समर्थासीदिति परिषत्पक्षपातिनां गौरवाय एव। आशास्महे यत् श्रीमतां कालीपद-तर्काचार्य्यप्रवराणां सम्पादकत्वेनास्याः क्रमोन्नतिर्भविष्यतीति।

एतन्मया सानन्दं विज्ञाप्यते यत् परिषत्पत्रिकायां प्रकाशितः श्रीमच्चिन्ताहरणकाव्यतीर्थ एम्. ए. महोदयेन लिखितो 'दूतकाव्य'-मितिशीर्षको निबन्धः तैलेगुभाषयानूदितः तैलेगुपरिषत्पत्रिकायां प्रकाशं नीतः, एतच्च संस्कृतसाहित्यपरिषत्पत्रिकाया विशेषतो निबन्धकर्त्तुर्गौरवमेवोद्घोषयति।

समवेताः सभ्यमहोदयाः! विदितमेव भवतां राजकीयं साहाय्य-मेव परिषदः प्रधानमालम्बनमिति। अधिकारवन्तो राजपुरुषाः परिषद उपयोगितामङ्गीकुर्वन्तः प्रतिवर्षमेव साहाय्यानि दत्त्वा अस्माकं कृतज्ञताभाजनं वर्त्तन्ते। अस्माकं दौर्भाग्यं यदालोच्ये वर्षे साहाय्यस्य न्यूनत्वं सञ्जातम्। पूर्वेषु वत्सरेषु साहाय्यस्य परिमाणं त्रिसहस्रमुद्रा-पर्य्यन्तमासीत्। आलोच्ये वर्षे सहस्रमुद्रात्मकं साहाय्यमस्माभि-र्लब्धम्। अस्माभिः सबहुमानमशेषकृतज्ञताप्रकाशपुरःसरञ्चैतद् गृहीतम्।

एतत्तु राजकोषाधिकृतानां प्रधानपुरुषाणां सविधे निवेद्यते, साहाय्यस्य न्यूनीकरणेनास्माकं महती भीतिश्चिन्ता च सञ्जातेति। न्यूनीभूतेन साहाय्येन कथं वयं कार्य्यजातं साधयितुं शक्नुम इति वयं प्रार्थयामहे यत् सानुग्रहास्ते पूर्वानुरूपसाहाय्यं दत्त्वा परिषत्-पुष्टिं विदधत्विति।

ग्रन्थागारोन्नतिविषये सार्धषट्शतपरिमिता मुद्रास्तथा विद्यालय-रक्षणविषये सार्धद्विशतमुद्राः "कलिकाता-कर्पोरेशना"ध्यक्षैः साहाय्य-रूपेण परिषदे प्रदत्ताः। तेभ्यो वयम् अशेषान् धन्यवादान् आन्तर-कृतज्ञताञ्च ज्ञापयामः।

विगते वर्षे 'दीघापतिया' राजवंशावतंस-श्रीयुक्त-शरत्कुमारराय एम्. ए. महोदयात् मुद्राणां शतं, मल्लिक कुलालङ्कार-श्रीमज्जितेन्द्रनाथ-मल्लिकमहोदयात् शतम्, अन्येषाञ्च कतिपयोदारचरितानां महात्मनां सकाशात् समष्ट्या प्रायो मुद्राणां द्वे शते एककालीन-वृत्तिरूपेण

परिषदा लब्धानि। तेभ्यो वदान्यवरेभ्योऽशेषान् धन्यवादान् विज्ञाप्य प्रार्थ्यते यत् एतादृशो अनुरक्तिः परिषदं प्रति रक्षणीयेति ।

सभ्यमहाभागाः! परिषदवस्था भवत्सविधे मया समासतः समालोचिता। परिषदि कार्य्यकारका बहवः सन्ति, अर्थाभाव एवास्या बहूनि कार्य्याणि व्याहन्ति। भवन्तश्चेत् सानुग्रहास्तर्हि सर्व एव विघ्ना दूरीभविष्यन्ति, परिषदप्युन्नतिमार्गमधिगमिष्यति। भवतामानुकूल्येनैवास्माकं शक्तिवृद्धिर्भविष्यति। अन्ते च पुनरपि कृपया समागतानत्रभवतः सभाजनान् सादरं सम्भाष्य यथायोग्यं नमस्कृत्य प्रणम्य च विरमामः। इति शम्।

---

## रजनी

( पूर्वतोऽनुवृत्ता )

[ निबन्धिका—श्रीमती रेणुदेवी ]

वाञ्छारामस्यापि तस्मिन् स्नेहातिशयः सर्वातिशायिनम् अपत्यस्नेहमप्यतीत्य वर्त्तमान आसीत्। निर्गते च तस्मिन् तनयं प्रति तस्य रोषातिशयः सुतरां प्रावर्द्धत। तेन च सीमानमपत्यस्नेहस्यातीत्य वर्द्धमानेन रोषातिशयेनाक्रान्तः समुद्गीर्णवान् बहूनि कर्णकटूनि तिरस्कारवचनानि। न च पुत्रोऽपि पितरि भक्तिप्रकर्षेण तानि निःशब्दं सेहे। एवञ्च पितापुत्रयोः प्रवर्द्धमानस्य कलहस्य फलमेतावदेव बभूव, यत् पित्रा गृहान्निष्कासितस्तनयो "न भूयः पितृभवने मुखं दर्शयिष्यामो"ति दृढ़प्रतिज्ञो निर्जगाम। कोपातिशयविकृतचित्तवृत्तिः पितापि प्रणिनाय चरमाभिलाषपत्रमेकम्। तत्रैवमासीत् समयः—

वाञ्छाराममित्रे मृते तदात्मजो रामसदयः कदापि न पित्र्यस्वत्वं लप्स्यते। किन्तु मनोहरदास एव तत्राधिकारी। तदभावे च तस्य दायादा एव दायमेतं निर्हरेयुः। तेषामभावे च रामसदयस्य पुत्रादय एव धनाधिकारिणः, किन्तु कदापि न रामसदय" इति।

रामसदयोऽपि पितृभवनमपहाय प्रथमां स्त्रियमादाय कलिकाता-नगरीमाससाद। आसीच्च तस्याः पितृप्रदत्तं धनं किञ्चित्। तदेव सारभूतमवलम्बमानः कस्यचित् सुजनताभृतो वैदेशिकस्य वणिज आनुकूल्येन वाणिज्ये प्रावर्त्तत। प्राप च प्रसादपात्रतां पद्मालयायाः। नान्वभूच्च दुःखलवमपि धनाभावनिदानम्।

पितुरपि स्वबुद्धिनैपुण्यविहितधनसञ्चयं सुखेनैवावस्थितं तनय-माकर्णयतो नोपशशाम कोपदहनः। प्रत्युत योपि स्नेहलवावशेष आसीत् सोऽपि शनैः शनैर्विशुष्कतामयासीत्। तातेन सस्नेहमाहूत एव गमिष्यामि, नान्यथेत्यभिमानवता तनयेन पितुः कश्चिदपि सन्देशो न संगृहीतः। भक्तिहीनतया मामवज्ञायैव पुत्र एवं व्यवहरतीति मन्यमानो वाञ्छारामोऽपि तं भूयो नाजुहाव, एवं द्वयोरनुपशान्त एव रोषपारुष्ये न परिवर्त्तिते च चरमाभिलाषपत्रे सहसा पुरन्दर पुरा-तिथित्वमवाप वाञ्छारामः। शोकजालाकुलितचित्तो रामसदयोऽपि कथं मया तातस्य देहवियोगात् प्रागेव न कृतः साक्षात्कारः, कथं वा प्रयत्नेन नापनीतस्तस्य रोषसञ्चयः, न वा सम्पादितः कर्त्तव्यनिवह इति सुतरां खिन्नेन मानसेन चिराय रुरोद। कलिकातायामेव च निष्पा-दयामास पितुः पारलौकिकं कर्म्म। न च भूयो भवानीनगरं प्रत्या-जगाम। सर्वञ्च तत्रत्यमिदानीं मनोहरदासगामि बभूव।

मनोहरदासस्य स्थिति-पदमपि तदापि न केनापि विदितमासीत्। न च जीवतापि वाञ्छारामेण प्रयत्नेनापि लब्धा तस्य कापि प्रवृत्तिः। तेन भवानीनगरात् यद्गतं तद् गतमेव। वाञ्छारामो बहु समन्विष्यापि यदा न प्राप तस्य काञ्चन वार्त्तां तदा चरमपत्रस्य

क्रोड़पत्रमेकम् प्रास्तौषीत्। तत्र च कलिकातावास्तव्यं विष्णुरामं नाम कञ्चन सम्बन्धिनं कार्य्यसम्पादकं विधाय कृतवान् एवं समयम्—विष्णुराम एव सप्रयत्नं मनोहरदासम् अन्विष्य तदन्वेषणफलानुसारेण यथादायादं सम्पदं विनियोजयिष्यतीति। मृते च वाञ्छारामे सोऽतिशयेन विचक्षणो निरपेक्षः कर्म्मकुशलश्च विष्णुरामो महता परिश्रमेण धनव्ययेन च मनोहरदासमनुसन्धाय वाञ्छारामेण प्रयत्नेनाप्यनाविष्कृतपूर्वं निगूढं तथ्यमिदमाविश्चकार, यथा मनोहरदासो भवानीनगरादपसृत्य सपरिवारः कञ्चन कालं पूर्ववङ्गमध्युवास। तत्र च धनाभावात् क्लिश्यन् प्रजीवनाय जलवर्त्मना कलिकातां प्रत्यावर्त्तमानो वात्याहत-क्षुभित-नदीनिमग्ननौकः सपरिवार एव जीवनं तत्याज। न च तस्य कश्चिदुत्तराधिकारी क्वचिदस्तीति केनापि ज्ञायते। विष्णुरामेण सर्वमेवेदम् अखण्डप्रमाणप्रमाणीकृतं रामसदयाय प्रदर्शितम्। ततः शचीन्द्रनाथो भ्राता च तस्य धनाधिकारिणौ जातौ। विष्णुरामोऽपि वाञ्छारामनिर्द्धारितं समयमनुसरन् तयोर्हस्तगतां सम्पदमकरोदिति। अथेदानीं यदि जीवति रजनी, येयमधुना सम्पदुपभुज्यते रामसदयेन, तयैव तदधिकारिण्या भूयते। क्लिश्नाति च सा दारिद्र्येण, अतो युज्यते मे तदनुसन्धानम्। न चान्यदस्ति मे किञ्चिदपि कर्म्म।

अथ वङ्गविषयमुपेतः कदाचिदेकेन ग्राम्यसम्बन्धवता निमन्त्रितस्तत्र गत आसम्। प्रातश्च तस्मिन्नितस्ततः परिभ्रमन् क्वचिदेकं निभृतमरण्यमपश्यम्। मधुरं कूजन्तो वनविहङ्गमाः सप्तस्वरसंयोगेन विचित्रमैक्यतानमिव कर्त्तुं प्रवृत्ताः। समन्ताच्च घनविन्यस्तैः कोमलश्यामलस्निग्धपल्लवदलैः समाच्छन्नाः पादपाः। पत्राणां निरन्तरता संमिश्रणञ्च। श्यामलता श्रियश्चानन्तता। क्वचित् कलिकानां प्राचुर्य्यं, क्वापि विकाशवतां कुसुमानां सम्भारः। क्वचिदपाकानि क्वचन च परिपाकामोदवन्ति फलानि। अथाकस्मादन्तर्वनमत्युग्रमार्त्तनादमाकर्ण्-

यन् वनाभ्यन्तरमवगाहमानः कमपि विकटमूर्त्तिं पुरुषापसदं बलेन कामपि युवतीमाक्रामन्तमपश्यम्। दर्शनमात्रेणैव च तं नीचकुलोत्पन्नं पाषण्डभावभीषणं डोम्बं वा चाण्डालं वा जात्या, कटितटबद्धकर्त्तरिकम् आकृत्या महदन्तर्बलं सूचयन्तमवेदिषम्।

शनैश्च तस्य पृष्ठदेशमुपागतः कटीबन्धात् कर्त्तरिकामपनीय दूरं न्यक्षिपम्। तदा सोऽपि दुष्टो युवतीं तामपहाय मां प्रत्यभिमुखीभूय नीचजनोचितया वाचा निर्भर्त्सयामास। तस्य दृष्टिपातेनैव जाताशङ्को विलम्बो न विधेय इति मन्यमानः करेण तस्य गलदेशमगृह्णाम्। सोऽपि तदाक्षिप्य मामाक्रामत्। अहमपि तत्र प्रतिक्रियायां प्रवर्त्तमानः समधिकं बलं बिभ्रतोऽपि तस्माद् भीतिं नाविन्दम्, न वा स्थैर्यमजहाम्। लब्धावसरश्च भद्रे द्रुतमपसर, अहमेनं समुचितेन दण्डेन संयोजयामीति तां तरुणीमभिहितवानस्मि। सा प्रत्युवाच कथमेवं सम्भाव्यते नयनहीनाहं, न च परिज्ञातः पन्था इति।

नयनहीनेति प्रहृष्टं मे बलेन। अहं हि रजनीं नाम काञ्चिदन्धकन्यकामन्विष्यामि।

अथ स बलवत्तरः पुरुषो बलेन मां प्रहर्त्तुमशक्नुवन्नपि यत्र कर्त्तरिका तिष्ठति तं देशं प्रत्याचकर्ष। विदिततदभिप्रायेण च मया तमपहाय पूर्वमेव संगृहीता सा कर्त्तरिका। तेन च तरुशाखामेकामवभज्य तामुद्यम्य च करे मे तथा प्रहृतं यथा ततो विगलिताभूत् सा कर्त्तरिका। स तामादाय त्रिचतुरेषु शरीरप्रदेशेषु मां दृढं प्रहृत्य द्रुतमपससार। अहञ्च—बलवदाहतः कथमपि कुटुम्बभवनं प्रति प्रचलितः। सा च नयनहीना युवती मम पदशब्दमनुसृतवती। ततश्च गन्तुमसमर्थं मां पथिका एव तद्भवनं प्रापयामासुः। तत्र शय्याशरणः कञ्चन कालमतिष्ठम्। आश्रयान्तराभावेन मम परिणाममविदन्त्या गमनमशक्यमिति च हेतोस्तस्या अप्यन्धयुवत्याः तदेव भवनं स्थितिपदं बभूव। एवं बहुषु दिवसेष्वतिक्रामत्सु क्रमेण कष्टेन

रोगविनिर्मुक्तोऽहमभवम्। प्रथमत एव तामन्धकन्यकामवलोकयतः सन्देहो मे हृदये पदं निदधे। अतो रोगशयनपार्श्वमुपेतां प्रथममेव तामपृच्छं "किमङ्ग ते नामधेय"मिति। तस्यां च 'रजनी'ति व्याहृतवत्यां चकितोऽहं "किमङ्ग त्वमेव राजचन्द्रदासस्य दुहितासी"ति कृतवान् पुनरपि प्रश्नान्तरम्। विस्मिता सा प्रत्युवाच "किं भवाननवगच्छति मे पितरम्।" अहन्तु स्पष्टतया किमपि प्रत्युत्तरं नाकरवम्।

अथ कलिकातां प्रत्यावर्त्तमानेन मया तस्याः सन्तोषाय न केवलमेकाकिनीं तामेव किन्तु कुटुम्बभवनादेकां प्राचीनां परिचारिकामपि गृहीत्वा गन्तुमुपक्रान्तेन पथि जिज्ञासितुं प्रक्रान्तम्। "ननु रजनि, कलिकातायामेव निवसन्त्या भवत्याः कथमिह समागमो जातः।" तया प्रत्यभिहितं "किं सर्वं वक्तव्यमेव मये"ति? मया पुनरपि व्याहृतं, "मैवं, स्वतन्त्रासि प्रत्युत्तरं प्रति" इति तथ्यमेवैतद् यदहमस्या अन्धयोषितः सरलतया बुद्धिप्राखर्य्येण विवेकप्रकर्षेण च विशेषेण प्रीतो न तां क्लेशयितुमलमासं सा तु वक्तुं प्रवृत्ता। "यद्यनुमन्यते भवान् तदाहमंशतो निगूहमाना बाहुल्येन प्रकाशयामि—गोपालो नाम ममैकः प्रतिवासी वर्त्तते। तस्य पत्नी चम्पा नाम। तया सह सहसा मम सञ्जातः परिचयः। ततः कदाचित् तस्याः पितृभवनं प्रति गमने नितरामनुरुद्धाहं तयैव सह तस्या भर्तृभवनमुपेतवती। समागताया च गमनवेलायां स्वयं गन्तुमप्रवर्त्तमानया च चम्पया सम्प्रेषितो मया सह तस्या भ्राता हीरालालः। तेन च तरणीयोगेन हुगलीनगरमानीतास्मि इति अत्र चेयं हीरालालसम्बद्धं कञ्चन वृत्तान्तविशेषं निगूहतीति विदिततदभिप्रायेणापि मया पृष्टम्, "अपि तेन सह गमनमनुमतं त्वये"ति? सा प्रत्यवादीत् "मैवम्। अनिच्छन्त्या अपि मे तेन सह गमनमप्रतिबन्धम् आसीत्। न च तत्र कारणमभिधातुं समर्थास्मि। अथ पथि साधुजनविगर्हितमाचारमारभमाणो भ्रातृ

तत्र विरोधवतीं मन्यमानो जीवनं मे वियोजयितुं कृतसंकल्पः क्वचन जलवेष्टितायां भूमौ मामवतार्य्य तयैव तरण्या स प्रतिनिवृत्तः।" इति विरतायाञ्च तस्यां नरच्छद्मना राक्षसोऽयमिति धिया तस्य रूपं परिकल्पयितुं प्रवृत्ते च मयि पुनरपि व्याजहार रजनी। "गते च तस्मिन् उदकप्रवेशेन प्राणान् परित्यजामीति कृतनिश्चया न्यमज्जमुदकेषु"। इति अविरतायामेव तस्याम् अहं प्रावोचम्, "कथमेवं नाम ? किं जनेऽस्मि-न्नेतावाननुरागो भवत्याः सम्भूतः" इति। सा सभ्रूभङ्गमभाषत "नहि नहि पृथिव्यामस्यामेकस्मिन्नपि न मे तथा विरागो यथा तस्मिन्" इति। "कथं तर्हि प्रवृत्तासि मर्त्तु"मिति व्याहृतवति मयि "न मे दुःखं भवते कथयितुं शक्यत" इति सा प्रत्युवाच। "वाढ़ं ततः कथये"ति मया साग्रहमभिहिता सा भूयो वक्तुं प्रावर्त्तत। "ततः पयसि निमग्नाहमु-न्मग्ना च नावमेकामारुह्य गन्तुं प्रवृत्तैः कैश्चिदवलोकिता समारोपिता च तामिव तरणीम्। यत्र च ग्रामे मया भवदनुग्रहो लब्धः तत्रैवावतरन् कश्चिदारोही कुत्र त्वमवतरिष्यसीति मां पप्रच्छ। यत्रैते मामवतारयि-ष्यन्ति तत्रैवेति कथयन्तीं मां क्व ते वास इति भूयः समपृच्छत। कलिकातायामिति विदिततत्त्वः स पुरुषः श्वस्तावदहं भूयस्तत्र गमिष्यामि एहि त्वं मयैव सह। तिष्ठ च दिनमिदं ममैव गृहेषु। श्वस्त्वां स्वभवनं प्रापयिष्यामीति प्रोवाच। आनन्देन तमनुसरन्तीं मामादाय स प्रचलितः। तदनन्तरं च प्रवृत्तिजातं भवानेव सर्वं जानाती"ति उक्त्वा सा विरराम। "किं यतो मया परिमोचितासि स एवैष" इति जिज्ञासमाने मयि सा "तथैवे"ति निरदिशत्। अथाहं कलि-कातामुपेतस्तया कृतनिर्देशं राजचन्द्रदाससदनमासाद्य रजनीमनयम्। राजचन्द्रोऽपि तनयासन्दर्शनेन सुतरामानन्दितो बभूव। तस्य पत्नी तु क्रन्दितुमारेभे। मत्तश्च तस्याः सविशेषं विदितोदन्तौ मयि विशेषेण कृतवेदितां निवेदितवन्तौ च। ततोऽहं रहसि रामसदय-मपृच्छम्, "अपि नाम जानासि ते दुहितुर्गृहपरित्यागनिदान"मिति।

स प्रत्युवाच "नहि नहि निरन्तरं निपुणं चिन्तयन्नपि नालमस्मि निदाननिर्णये।" मया भूयः पृष्टम्, "अपि जानासि कथं सा पयःप्रवेशेनात्मानं व्यापादयितुं यतमाना बभूवे"ति। तेनापि सविस्मयं प्रत्यभिहितं, "किं तदस्या दुःखं तदपि नावधारयामि। महतो दुःखस्य निदानमपि नयनहीनत्वं कथमेतावतः कालादनन्तरमिमां तथाविधे कर्मणि नियोजयतीति न शक्यते सम्भावयितुम्। एतावता वयसापि परिणयो न जात इत्ययमपरोऽपि दुःखहेतुर्नात्र प्रयोजकतामुपयाति, यतः समवधारितपरिणयदिवसात् पूर्वस्यामेव रजन्यां सा गृहादपगते"ति। अश्रुतपूर्वोऽयं वृत्तान्तः। तमहं पुनरपृच्छम्। "भद्र, सत्यमिदं सा गृहात् पलायितेति। किमविदित एवायं वृत्तान्तो युष्माभिः? केन वा सह तस्य परिणयकथा स्थिरीकृता?" मयैवमभिहितः स "सत्यमेव सा पलायितेति, न चेदं मया वा तस्या जनन्या वा पूर्वं विदितमासीत्। गोपालेन सह परिणयकथा संवृत्तेति" मां व्यजिज्ञपत्। "कोऽयं गोपालो नाम? किमयं चम्पायाः स्वामी"ति मयानुयुक्तो राजचन्द्रः क्रमेण, "सर्वमेव भवान् जानाति स एवाय"मिति भूयः प्रकाशयामास। लब्धो मया कश्चिदालोकः। मन्ये चम्पा सपत्नीगञ्जनाभयेन रजनीं वञ्चयित्वा सह सहोदरेण तां देशान्तरगतामकरोत्। मन्ये तस्या एव मतमनुवर्त्तमानेन हीरालालेनापि रजन्या जीवनापनयनाय प्रयत्नो विहितः। किन्तु सर्वमेवेदम् अहं मनसि गोपायन् राजचन्द्रं प्रत्यवादिषम्, "भद्र, सर्वमेवेदं जानामि किञ्चिदन्यदपि। तदहमिदानीं भवते कथयामि। किन्तु न त्वया किमपि निगूहनीयम्।" 'नन्वाज्ञापय' इति तेन विज्ञापितो "न रजनी भवतः कन्यके"ति व्यजिज्ञपम्। "किमिदं न चेदियं मम दुहिता कस्य तर्ही"ति सविस्मयं प्रवदन्तं तमहं ननु "हरेकृष्णदासस्ये"ति प्रावोचम्। तेन तु क्षणं तूष्णीं तिष्ठता समभिहितं, "को भवानिति नावगच्छामि किन्तु शिरसा भवन्तं प्रसाद्य समभ्यर्थये यदिदमस्यै न कथयितव्य"मिति।

मया प्रत्यभिहितम्, "नेदमिदानीमस्ये प्रकाशनीयं, किन्तु प्रकाशयितव्यमेव। तिष्ठतु तावदिदं यदहमिदानीं पृच्छामि दीयतां तत्र यथार्थमुत्तरम्। यदा तु मृतोऽस्या जनकः किं तदास्या आसन् कानिचिदाभरणानि?" स भीतः प्रत्युवाच "न मया ज्ञायते काचिदपि तस्या भूषणकथा, न वा लब्धानि कानिचिदपि भूषणानि" इति। "किं मृते तस्मिन् तेन त्यक्तां सम्पदमनुसन्धातुं न त्वं तत्र गतवानासीः? गतश्चेत् किं कृतवानि"ति भूयो मया पर्य्यनुयुक्तः पर्य्यवोचत राजचन्द्रः—"वाढ़मेवं, गतं मया तत्र, गत्वा च समाकर्णितं यत् सर्वमेव तस्य वस्तुजातं राजपुरुषैः परिगृहीतं, बिभेमि च राजपुरुषेभ्यः, तस्या एव रजन्या वलये तस्करेणापहृते, प्रवृत्ते च विचारे तैरहं नितरां निपीडित आसम् अतश्च तेषां नाम समाकर्णयतो मे न किञ्चिदप्यवशिष्टमासीत् कर्त्तव्य"मिति। "किमिदं वलयापहरणं नाम? कीदृशो वा तत्र प्रावर्त्तत विचार" इति जिज्ञासमानं मां स भूयो विज्ञापयामास। रजन्या अन्नप्राशनसमये तस्करः कश्चिदस्या वलययुगलमपहरन् तत्रत्यैः परिगृहीत आसीत्। वर्द्धमाननगरे च तस्य विचारः समारब्धः। साक्ष्यसम्पादनायाहमित आहूतस्तत्र गतः। प्राप्तश्च महान्तं दुर्भोग"मिति स विरराम। दृष्टश्च मया पन्थाः।

## ( वक्ता शचीन्द्रनाथः )

मयि न्यस्तोऽयं भारो यथा, विचित्रमिदं रजनीचरित्रमंशतो मया चित्रयितव्यमतः सम्पादयामि कर्त्तव्यम्।

अथाहमस्या विवाहायोद्युञ्जानो विवाहवासरे प्रातरेव तां पलायितामश्रौषम्। विशेषेण बहुशस्तामनुसन्दधानोऽपि तस्या नोपयातः कामपि प्रवृत्तिम्। सा भ्रष्टेति कथयत्स्वपि केषुचिज्जनेषु न तत्र मे समुपजातो विश्वासः। बहुशस्तामवलोकितवता मया सशपथमिदं शक्यते वक्तुं यदियं न भ्रष्टा भवितुमर्हतीति। इदन्तूपयुज्यते

यथा कुमारीयं कौमारे वयसि वर्त्तमाना क्वापि प्रणयातिशयं बिभ्राणा विवाहभयेन विजह्रौ भवनम्। किन्तु कथमन्यायाः प्रणयप्रसरः।

—— ( क्रमशः )

संस्कृतसाहित्यपरिषदः

## त्रयोदशवार्षिक-महोत्सवविवरणम्

[ निबन्धकः—श्रीदक्षिणारञ्जन-शास्त्री एम्. ए. ]

विगत-सौरभाद्रस्य नवमदिवसे रविवासरे सायं षड्वादनतः परम् "युनिभार्सिटि इन्ष्टिट्युट भवने" परिषदस्त्रयोदशवार्षिकमधिवेशनं सुसम्पन्नम्। माननीया अध्यापकाः श्रीमन्तः डक्टर् एस्. राधाकृष्णन् महोदयाः सभापतिपदमलमकुर्वन्। समवेतानां महात्मनां विपश्चिद्-वर्य्याणां मध्ये महामहोपाध्यायाः श्रीमन्तः शितिकण्ठवाचस्पतिमहोदयाः म.म. श्रीमन्तः अनन्तकृष्णशास्त्रिणः म.म. श्रीमन्तः कमलकृष्ण-स्मृतितीर्थाः म.म. श्रीमन्तो भागवतकुमारशास्त्रिणः म.म. श्रीमन्तो दुर्गाचरणसांख्यवेदान्ततीर्थाः म.म. श्रीमन्तः फणिभूषणतर्कवागीशाः कलिकाता-राजकीय-संस्कृतमहाविद्यालयाध्यक्षाः श्रीमन्त आदित्य-नाथ-मुखोपाध्यायाः मूलाजोडसंस्कृतमहाविद्यालयाध्यक्षाः श्रीमन्तो निशिकान्ततर्कतीर्थाः संस्कृतमहाविद्यालयाध्यापकाः श्रीमन्तः कुञ्ज-विहारितर्कसिद्धान्ताः श्रीमन्तः सुरेन्द्रनाथविद्यारत्नमहोदयास्तथा विश्वविद्यालयाध्यापकाः श्रीमन्तः पञ्चाननतर्कवागीशाः श्रीमन्तः प्रबोधचन्द्रवाक्चिमहोदयाः श्रीमन्तः क्षितीशचन्द्रचट्टोपाध्यायाः पण्डित-प्रकाण्डाश्चान्ये बहवः श्रीमन्तो हरिदाससिद्धान्तवागीशप्रमुखा-स्तथा श्रीमन्तो जह्वरलालनेहेरुमहोदयाः श्रीमन्तो द्वारकानाथमित्र-महोदयाश्च सविशेषमुल्लेख्याः।

सभायामादौ श्रीमान् विष्णुपददत्त उद्बोधनसङ्गीतस्य काललय-मिश्र-सुमधुरालापेन समवेतसामाजिकानां मनांसि युगपदेवाकृष्य

सर्वान् सभ्यान् चित्रगतान् इवाकरोत्। ततश्च कलिकाता-राजकीय-संस्कृतमहाविद्यालयाध्यक्षाणां परिषदो विशिष्टसहायभूतानां तत्र-भवतां श्रीमतामादित्यनाथमुखोपाध्याय एम्.ए.पि.एइच्.डि, दर्शनसाग-राणां प्रस्तावेन क लिकाता-विश्वविद्यालयाशुतोषासनाधिकारिणां परि-षदः सहकारिसभापतीनां महामहोपाध्यायानां तत्रभवतां श्रीमतां भागवतकुमारशास्त्रिमहोदयानां समर्थनेन च सभापतिवरणं समनुष्ठि-तम्। ततः परिषन्मन्त्रिणा श्रीमता श्रमरेश्वरठाकुर-वेदान्तशास्त्रिणा त्रयो-दशवार्षिकं कार्य्यविवरणं वाचितमभूत्—तच्चास्यामेव पत्रिकायामन्यत्र संयोजितमास्ते। पठिते च कार्य्यविवरणे परिषदोऽन्यतमेनोपमन्त्रिणा श्रीमता दीनबन्धुसाहित्यशास्त्रिणा आगामिवर्षीयकार्य्यपरिचालकानां नामानि वाचितानि। सम्पन्ने च तस्मिन् श्रीमता अक्षयकुमारशास्त्रिणा परिषदाचार्य्येण श्रीमता कालीपदतर्काचार्य्येण तथा परिषदोऽन्यतमे-नोपसभापतिना महामहोपाध्यायेन श्रीमता अनन्तकृष्णशास्त्रिणा परि-षदो भूतपूर्वान्यतरसम्पादकस्यान्यतम-प्रतिष्ठापकस्य च गोष्पतिराय-चतुर्धुरीणकाव्यतीर्थमहोदयस्य गुणव्याख्यानादिकं प्राञ्जलया सोच्छ्वा-सया च भाषया कृतमासीत्। ततः सभापतिमहोदयैस्तस्यैव परिषद्-गतप्राणस्य काव्यतीर्थमहोदयस्य तैलचित्रस्यावरणोन्मोचनं विहितम्। समनुष्ठिते च तैलचित्रावरणोन्मोचनकार्य्ये महामहोपाध्यायेन श्रीमता भागवतकुमारशास्त्रिणा तथा कलिकाता-विश्वविद्यालयाध्यापकेन श्रीमता प्रबोधकुमारवाकुचि-महोदयेन परिषत्पत्रिकाया भूतपूर्व-सहकारिसम्पादकस्य सुरेन्द्रनाथमजुमदारशास्त्रिणः एम्. ए. पि. आर. एस्, महोदयस्याकालपरलोकप्रयाणे शोकः प्रकाशितः।

शोकप्रकाशानन्तरञ्च सभापतिपादानां दशगुणसमलङ्कृतमाङ्गल-भाषामयमभिभाषणम्। प्रसङ्गक्रमेण च सभापतिपादैः सङ्केतितं यदस्माकं भारतीयानां साम्प्रदायिकधारासंरक्षणमेव मुख्यमुद्देश्यं, स्वाराज्यादीनि तु केवलं साधनमात्राण्येव भवितुमर्हन्तीति। समाि

गते च सभापतिमहोदयानामभिभाषणे परिषच्छात्रसमिति-सभ्यै-रनुष्ठित-पूर्वे-स्यमन्तकोद्धाराभिनये जाम्बवतांश-ग्राहिणे श्रीमते मधुसूदनचक्रवर्त्तिने अभिनयदर्शनसम्प्रीतेन श्रीमता अमरेश्वरठाकुरेण प्रदत्तं रौप्यपदकं सभापतिना उपायनीकृतम्। ततः सम्पन्ने निखिले सभाकार्य्यजाते परिषद उपमन्त्रिणा श्रीमता चिन्ताहरणचक्रवर्त्तिना जर्जरपूजाया इतिहासः संक्षेपेण अभिनीयमानानां नाटकानां तत्-कर्त्तृणां परिचयश्च समुल्लिखितौ।

ततश्चाभिनये दत्तमानसैः परिषत्सभ्यैः प्रथममेव भरत प्रणीत-नाट्यशास्त्रसरणीमनुसृत्य जर्जरपूजा विहिता। अभिनवेयं जर्जरपूजा सर्वेषामेव सामाजिकानां मनांस्यन्वरञ्जयदिति परम-प्रमोदस्थान-मस्माकम्। परिसमाप्तिं गतायां जर्जरपूजायां चण्डकौशिके केवलं श्मशानदृश्यमतिकरुणं यथायथमभिनीतमासीत्। ततः शाकुन्तले पञ्चमाङ्कावतारोऽभिनीतः सम्यक्। धीवरांशस्याभिनयपाटवं सर्वैरेव सामाजिकैरुच्चैरुद्घोषितम्। तदनन्तरं महाकवि-भास-विरचितस्य पञ्चरात्रस्याभिनयः। यद्यपि परिषत्सभ्यैरभिनीतपूर्वमिदं नाटकं तथापि वर्षेऽस्मिन्नस्याभिनयः प्रायेणाभिनयकौशलस्य परां काष्ठा-मधिरूढ इति सर्वेषामेव साध्वसाधुविचारणानिपुणानां दोष-ज्ञानामभिमतम्। बालोऽभिमन्युरभिनयकौशलेन मधुरया चाकृत्या विशेषेणारञ्जयत् सामाजिकमनांसीति सर्वैरेवोद्घोष्यते। बृहन्नलापि न विस्मर्य्यते। शकुनि-गुणाश्च श्रूयन्ते प्रतिमुखम्। समासतश्च न केषामप्यभिनयः सामाजिकानां विरागमुदपादयदिति विदितमस्माभि विश्वस्तसूत्रेण।

परमुपरते च गोष्पति-प्रतिमे गोष्पतिकाव्यतीर्थे परिषन्नाट्याचार्य्ये यत्किञ्चन साफल्यं वर्षेऽस्मिन् लब्धमभिनयविषये परिषत्सभ्यैस्तत्तु नाट्यकलानिपुणानां परिषदो वर्त्तमाननाट्यसम्पादकानां श्रीमतां जयगोपालज्योतिर्विनोद-महोदयानां तथा श्रीमतां वामापदविद्यारत्न-

महोदयानां प्रयत्नगौरवादेवेत्यत्र नास्ति केषाञ्चन विप्रतिपत्तिरिति विदाङ्कुर्वन्तु प्रियपाठकाः। आशास्महे यदितःपरमपि ते तथैव प्रयत्न-विशेषमातिष्ठन्तः प्रयोगप्रबन्धे संस्कृतभारतीञ्च परिषदञ्च प्राचीननाट्य-कलाञ्च परमुपकरिष्यन्ति। रात्रेर्द्वादशघटिकायामभिनयभङ्गो जातः। एतदस्माकं गौरवकारणम् अभिनयस्य च साफल्यसूचकं यदापरिसमाप्ते रभिनयस्य रङ्गगृहं पूर्णप्रायमेवासीत्। पश्चिमे वयसि वर्त्तमानाः शिक्षासंस्कारादि-गभीरविषये दत्तसमयाः परमदार्शनिका अपि अभि-नयकलाकौशलदर्शनेन तथा मुग्धा आसन् यथा आसनपरित्याग विषये तेषां मतिरपि नाजायत इति सहृदयान् सामाजिकान् संक्षेपतो विज्ञाप्य विरमामः।

---

## पुस्तकपरिचयः

**चाणक्यसूत्रम्—**श्रीमत्कौटिल्य-प्रणीतम्। पञ्चतीर्थोपनाम-श्रीईश्वरचन्द्रशर्मशास्त्रि-वेदान्तभूषण-विरचित-सारार्थबोधिनीसमाख्य-टीका-वङ्गानुवाद-टिप्पणीप्रभृतिभिश्च समलङ्कृतम्। ग्रन्थादौ सप्त-दशपत्रव्यापिनी गवेषणाविलसिता संस्कृतभाषामयी एका अवतरणिका, परिचयपत्रञ्च 'एसियाटिकसोसाइटि' साधारणमन्त्रिणामेकं तथा संस्कृतपरीक्षासमिति-सभापतीनामपरं संयोजिते। पत्रसंख्या ५४८। मौल्यमस्य ३) रौप्यकम्। प्राप्तिस्थानं—संस्कृतयन्त्रपुस्तकालयः, कलिकाता,—अन्यत्र च।

अवतरणिकायां टीकाकारेण शास्त्रिपादेन चाणक्यस्य समयं तत्प्रणीतान् ग्रन्थांश्चावलम्ब्य सम्यक् समालोचनं कृतं सिद्धान्तश्चोप-निबद्धः।

भारतीय-मनीषिणः परलोकेश्वरात्मतत्त्वादौ काव्यालापादौ वा

यथा दत्तमानसा आसंस्तथा ऐहिकविषयेऽपि परमनभिज्ञा नासन्नि-त्यत्र चाणक्यसूत्रादीन्येव प्रमाणकोटीमारोहन्ति। टीकाकाराश्च शास्त्रिपादा यद्यपि वेदान्तविद्यापारीणास्तथापि तेषामत्र चाणक्य-सूत्रविवृतौ प्रवृत्तिः साफल्यञ्च तदेव रहस्यं प्रकटयतः।

वङ्गेषु संस्कृतभाषाविशेषज्ञा वङ्गभाषायां हृतादरा इति तु प्रायो वाद इत्यत्र यथा विद्यासागर-न्यायरत्न-तर्कालङ्कार-तर्करत्न-तर्कभूषण-शास्त्रिप्रमुखा आचार्य्यवर्य्याः प्रमाणं तथा ; एतेऽपि टीकाकारा इति तु स्वीकर्त्तव्यमेव। कथमन्यथा वङ्गाक्षरेणास्य मुद्रणं, वङ्गभाषया वानुवादः ? एतेनास्य वङ्गविषयाद् बहिः प्रचारबाहुल्यं प्रतिहतमित्यत्र कस्यास्ति विप्रतिपत्तिः ?

ग्रन्थस्यास्य गौरवं यथा अप्रतिहतं स्यात्तदर्थं शास्त्रिपादेन आदर्श-पुस्तकचतुष्टयं संगृहीतम्। चतुर्षु पुस्तकेषु सूत्राणां पाठानैक्यं च बहुधा विद्यते इत्यपि तेनैवोट्टङ्कितम्। परमस्माकं दौर्भाग्यादस्मिन् आवृत्तिके पाठभेदो न प्रदर्शितः। यत्तु मुद्रायन्त्रस्याक्षरयोजकानां त्रुटिप्राचुर्य्यात् कुत्रचन कुत्रचन भ्रमादिकं विद्यते तत्तु विषयगौरवा-दुपेक्षणीयमेव।

सर्वथा, येषां कृते प्रयत्नोऽयं तेषां मध्ये ग्रन्थस्यास्य प्रचारबाहुल्य-मभिलषामः। संस्कृतसमितिपरीक्षायां साहित्यविषये विषयान्तरे वा पाठ्यरूपेण यद्ययं निर्दिष्टो भवेत्तर्हि पाठार्थिनां नितरामुपकारो भवेदिति पाठ्यनिर्वाचनाधिकारिणामवधानमत्राभ्यर्थयामहे।

**सत्यनारायण-व्रतकथा**—( मूल ओ पद्यानुवाद ) वङ्गा-क्षरमुद्रितमिदं पुस्तकं श्रीयुक्त-नृत्यगोपाल-मुखोपाध्यायेन सम्पाद्य श्रीयुक्त-विश्वनाथमुखोपाध्यायेन प्रकाशं नीतम्।

भारतवर्षे सर्वत्र सुप्रचारितस्य सत्यदेवार्चनस्याङ्गीभूता व्रतकथा अन्यत्र रेवाखण्डीयापि वङ्गेषु कालवशाद्वा कारणान्तरवशाद्वा अप-शब्दबहुला अपभ्रंशभाषामयी चेति न केषामप्यप्रत्यक्षं नाम। अत्र

च कारणत्वेनोपकल्पितं विषयकदम्बं मुखबन्धे ग्रन्थकृता निबद्धञ्चेति रमन्तां तत्रैव कुतुकिनो हेतुवादमुदितमानसा अस्मत्पत्रिकापाठकाः। परमेतद्दुर्णयापनिनीषयैव विषयिणोऽपि तत्रभवतो ग्रन्थकारस्य ग्रन्थमिममुपसम्पादयितुमयमुपक्रमः।

ग्रन्थेऽस्मिन् रेवाखण्डीय-व्रतकथा मूलमात्रेण वामभागे सन्निवेशिता, दक्षिणतश्च तस्यानुपदमनुवादः सहजबोध्योऽपि मूलार्थमजहद्देव विजयते। अनेन च सुघटितसन्निवेशविशेषेण अनुवादस्य मूलानुगत्य-प्रत्ययं प्रति महान् सुयोगः सम्पद्यते स्वल्पविद्यानामपि।

अस्ति ह्यत्र मुखबन्धे नानाविषयिणीष्वालोचनासु सत्यनारायणवर्णविमर्शनविधौ विचारवैदुष्यमुद्घोषितं ग्रन्थकारेण ; अस्ति च अर्वाक्तनगर्वितानां हेतुवादमात्रपराणामशास्त्रजुष्टेषु स्वकपोलकल्पितेषु च सत्यदेवार्चनस्याधुनिकत्ववादेष्वपवाधमप्रवादोऽपि तदुद्भावितः, तथा चास्ति पूजायाः कालकरणाद्यूहापोहेन प्रकृतमतनिर्णायिका साधारणोपयोगिनी सुविस्तृता समालोचनेति। मूलानुवादकर्म्मणि च ग्रन्थकर्त्तुरैकान्तिकता परिश्रमविशेषः पाण्डित्यप्रतिभा चास्माभिर्निःशेषमुद्घोष्यन्ते। परमस्य मुद्रणकार्य्यं कागदं ग्रन्थपुटकञ्च मनोरमाणि क्रेतारमनिच्छन्तमपि बलादाकारयिष्यन्तीवेत्यपि न कथामात्रमस्माकम्। अस्ति च वर्णत्रयसङ्कलनेनाङ्कितानि त्रीणि चित्राण्यत्रैव—एकं सत्यनारायणस्य, द्वितीयं ग्रन्थकृन्मातुस्तृतीयञ्च नैमिषारण्यस्येति मोदन्तां कोमलकलानुशीलनपरायणाः सत्यनारायणसेवाधिकृताः। वयमस्य ग्रन्थस्य प्रचारबाहुल्यं सुतरां कामयामहे। ग्रन्थकृत्सङ्केतितेषु संख्यातीतेष्विव ग्रन्थासादनपदेषु स्थानसंक्षेपादेकमेव तावदधो निर्दिश्यते प्रकाशकगोचरं—पोः सुगकल्याण, चन्द्रभाग, साधनापुस्तकालय, जिला हवडा।

मूल्यमस्योत्तमकर्पटकबद्धस्य १) एका राजती मुद्रा, मध्यमबद्धस्य ॥० द्वादशाणकम्, साधारणबद्धस्य ॥० अर्द्धचन्द्रमात्रम्।

प्रति सदातनीं निर्दयतामद्ययावत्तत्तत्-कर्म्मसु प्रदर्शयतो विधेः किञ्च-
नाकारुण्यं दुःखदुःखेन विक्षुब्धहृदया वयं वक्तुमुद्युक्ताः स्मः। परि-
षत्पत्रिकाया भूतपूर्व-सहसम्पादकस्तत्रभवान् सुरेन्द्रनाथ-मजुमदार-
शास्त्री एम्. ए., पि. आर्. एस्, महोदयः अकाले एव कालग्रासमनु-
भूतवान्। विदुषोऽस्य सौजन्यगरिमा सौन्दर्य्यमधुरिमा, अध्ययन-
द्राघिमा, शास्त्राभ्यास-पटिमा चास्मांस्तदानीमेवमावर्जयन्त येन चिर-
प्रोषितस्य तस्य दुःखव्यपोहिकामपि प्रस्मृतिं नैवाद्याप्यासादयामो
मन्दभाग्याः।

महानुभावोऽयं पूर्वं पाटलिपुत्रस्थे कस्मिंश्चिद् विद्यालये अध्यापक-
पदमारूढः परया योग्यतया शिष्यानध्यापयन् सद्गुरुगोचरस्य यशसो
भाजनमभूतपूर्वमिवाभूत्। काले च विदितविद्याप्रकर्षः "विहार-
ओडिष्या" प्रदेशीय-शिक्षाप्रेक्षकपदे समुन्नीयमानो देहत्यागावसानं यावत्
तत्कर्म्मजातं सप्रशंसं निरवाहयत्। विद्यावत्ता चास्य सुघटितयोपाधि-
मालया सूच्यमाना प्रमाणाधिकतामात्मनो दर्शकवृन्देषु व्यञ्जयति।

दैवाधीना वयं तत्कृते सकृतज्ञताकं शोकाश्रुजातं, तत्परिजने-
भ्यश्च ससान्त्ववादमोखराशीर्वादं प्रयुञ्जानाः प्राणानेव केवलं धार-
याम इति।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| October, 1929. | १८५१ शकीये आश्विने<br>१२श-वर्षस्य षष्ठ-संख्या | Vol. XII.<br>No 6. |
|---|---|---|


## मतिमञ्जरी

**यत्किञ्चित् प्राप्तकालम्**—निष्ठां गतः प्रौष्ठपदस्य नवमाहे महोत्सवः परिषदस्त्रयोदशवर्षावसानसम्भूत इति यत् सत्यं समुच्छ्वसितमिव नश्चेतोभिः। परिषन्नियमानुगत्या चेतः परत एव ऐषमीयाः पारिषद्याः कर्म्मपरिचालकाः स्वं स्वं नियोगमशून्यं करिष्यन्तीति शास्त्रलोकबहिर्भूतापि वस्तुगत्या भाद्रपदादेवास्मिन् वर्षे वर्षप्रवृत्तिः परिलक्ष्यते परिषदः। परिषत्कार्य्याणामुत्सवानाञ्च कथन्ताजिज्ञासुभिर्विप्रकृष्टैः सदस्यैरेतत्पूर्वाङ्कसङ्कलिते "परिषदस्त्रयोदशवार्षिककार्य्यविवरणञ्च" "परिषदस्त्रयोदशवार्षिकमहोत्सवविवरणञ्च" सदयमुदीक्षणीये।

चतुर्दशवर्षदेशीया चेयं परिषन्न केवलमस्माकं विशेषसंसृष्टानां बान्धवानां, परं दूरस्थितानामपि गुणमात्रवशीभूतानां विदुषां हृदयमावर्जयति समुपस्नेहयति च। एतच्चास्या एव स्थानान्तरे विनिवेशितस्य मद्रदेशीयेन केनचित् पण्डितप्रकाण्डेन निबद्धस्य परिषत्प्रशस्त्यात्मकस्य लेखस्यावलोकनेनापरोक्षतां गमिष्यत्येव वाचकसुहृदाम्।

पत्रिका चेयं जनन्या वर्षद्वयादूना द्वादशे वर्षे पदं निदधती मातुर्गुणैनैश्वर्य्येणान्येन च सौभाग्यवत्तादिना समुपेता कं न सम्मोहयते। विदेशीयैर्देशीयैश्च विद्वत्समाजैरस्या निबन्धशैलीं प्रचारबाहुल्यादिकञ्चावलोकयद्भिरर्थगरिष्ठैर्भाषामधुरैश्च निबन्धैरियमशेषेणोपाकारि। परं सन्ति केचनास्मदात्मपक्षाश्च कृतविद्याश्च विदितलेखप्रकर्षाश्च महात्मानो ये भाषान्तरमधिकृत्य निबन्धलेखनेन ख्यातिविशेषमुत्प्रेक्षमाणा न तावत् संस्कृतनिबन्धादिविरचनेन गैर्वाणीं वाणीमिमां परिपोषयितुं प्रसीदन्ति ; केचन च केवलं स्वल्पायाससाध्यं समालोचक-पदमधिकुर्वते, अधिकृत्य च पदमिदं मक्षिकासम्प्रदायसुलभेन मनोभावेन दोषमेव केवलमुत्प्रेक्षमाणाः खेदयन्ति, निबन्धलेखकान् पत्रिकासम्पादकसङ्घांश्च। नोपकुर्वते संस्कृतभाषां नानुसन्दधते निबन्धलेखनिबन्धनं परिश्रमविशेषं, न च जानते सम्पादकानां सङ्कटप्रचुरां पत्रीपरिचालनपद्धतिम्। किमिव हि तेषां यशोमूल्येन विद्याविक्रयिणामयशःख्यापनार्थं बद्धपरिकराणां पुरोभागिणाञ्च साम्प्रतमिति जिज्ञासवो वयं सुधीसमाजेषु।

परमियं संस्कृतभाषा स्वेन महिम्ना स्वेन दिव्यभावेन स्वेन च प्राचीनत्वेनोपचीयमाना मक्षिकासाम्प्रदायिनः प्रतिपक्षानाक्षिप्य प्रख्यातिमभिसन्धित्सूंश्च अवधूयानुविधास्यति स्वं प्रचारमिति मन्वाना दुन्दुभिघोषेणाघोषयामो वयं महाकवेः सूक्तार्द्धम्—

"ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः॥" इति। शम्॥

---

## श्रीदुर्गा-प्रशस्तिः

[ निबन्धकः—आयुर्वेदाचार्य्य-श्रीहेमेन्द्रचन्द्रव्याकरणतीर्थः ]

अयि चिरसुखकरि ! शारद-सुन्दरि !
जागृहि, वर्षाक्लेशम् ।
अपनय तूर्णं धर रुचिपूर्णं
भुवनमनोहर-वेशम् ॥

मधुमद-लोला मधुकर-माला !
गुञ्जत कुसुमितकुञ्जे ।
गायत चपलाः कोकिल-बाला !
अभिनव-किशलय-पुञ्जे ॥

लतिका ! विहसत, कुसुमं वितरत,
विकिरत सुमधुर-गन्धम् ।
परिमल-लुण्ठन- सुरभि-समीरण !
वह ननु दिशि दिशि मन्दम् ॥

अपसर जलधर ! लस वि॰ लाम्बर !
वितर सुधाकर ! हास्यम् ।
नवकरहारा विहरत ताराः !
खञ्जन ! कुरु सुखलास्यम् ॥

हस हस शतदल ! विमलीभव जल !
गायत विहगा ! गानम् ।
ललित-तरङ्गे ! तटिनि ! सुभङ्गे !
कुरु सागरमभि यानम् ॥

पत्रिका चेयं जनन्या वर्षद्वयादूना द्वादशे वर्षे पदं निदधती मातुर्गुणेनैश्वर्येणान्येन च सौभाग्यवत्तादिना समुपेता कं न सम्मोहयते। विदेशीयैर्देशीयैश्च विद्वत्समाजैरस्या निबन्धशैलीं प्रचारबाहुल्यादिकञ्चावलोकयद्भिरर्थगरिष्ठैर्भाषामधुरैश्च निबन्धैरियमशेषेणोपाकारि। परं सन्ति केचनास्मदात्मपक्षाश्च क्षतविद्याश्च विदितलेखप्रकर्षाश्च महात्मानो ये भाषान्तरमधिकृत्य निबन्धलेखनेन ख्यातिविशेषमुत्प्रेक्षमाणा न तावत् संस्कृतनिबन्धादिविरचनेन गैर्वाणीं वाणीमिमां परिपोषयितुं प्रसीदन्ति ; केचन च केवलं स्वल्पायाससाध्यं समालोचक-पदमधिकुर्वते, अधिकृत्य च पदमिदं मक्षिकासम्प्रदायसुलभेन मनोभावेन दोषमेव केवलमुत्प्रेक्षमाणाः खेदयन्ति, निबन्धलेखकान् पत्रिकासम्पादकसङ्घांश्च। नोपकुर्वते संस्कृतभाषां नानुसन्दधते निबन्धलेखनिबन्धनं परिश्रमविशेषं, न च जानते सम्पादकानां सङ्कटप्रचुरां पत्रीपरिचालनपद्धतिम्। किमिव हि तेषां यशोमूल्येन विद्याविक्रयिणामयशःख्यापनार्थं बद्धपरिकराणां पुरोभागिणाञ्च साम्प्रतमिति जिज्ञासवो वयं सुधीसमाजेषु।

परमियं संस्कृतभाषा स्वेन महिम्ना स्वेन दिव्यभावेन स्वेन च प्राचीनत्वेनोपचीयमाना मक्षिकासाम्प्रदायिनः प्रतिपक्षानाक्षिप्य प्रख्यातिमभिसन्धित्सूंश्च अवधूयानुविधास्यति स्वं प्रचारमिति मन्वाना दुन्दुभिघोषेणाघोषयामो वयं महाकवेः सूक्तार्द्धम्—

"ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः॥" इति। शम्॥

## श्रीदुर्गा-प्रशस्तिः

[ निबन्धकः—आयुर्वेदाचार्य्य-श्रीहेमेन्द्रचन्द्रव्याकरणतीर्थः ]

अयि चिरसुखकरि ! शारद-सुन्दरि !
जागृहि, वर्षाक्लेशम् ।
अपनय तूर्णं धर रुचिपूर्णं
भुवनमनोहर-वेशम् ॥

मधुमद-लोला मधुकर-माला !
गुञ्जत कुसुमितकुञ्जे ।
गायत चपलाः कोकिल-बाला !
अभिनव-किशलय-पुञ्जे ॥

लतिका ! विहसत, कुसुमं वितरत,
विकिरत सुमधुर-गन्धम् ।
परिमल-लुण्ठन- सुरभि-समीरण !
वह ननु दिशि दिशि मन्दम् ॥

अपसर जलधर ! लस वि॰ लाम्बर !
वितर सुधाकर ! हास्यम् ।
नवकरहारा विहरत ताराः !
खञ्जन ! कुरु सुखलास्यम् ॥

हस हस शतदल ! विमलीभव जल !
गायत विहगा ! गानम् ।
ललित-तरङ्गे ! तटिनि ! सुभङ्गे !
कुरु सागरमभि यानम् ॥

जाग्रत लोका ! व्यपगत-शोका !
दृशमुन्मीलयताम्बाम् ।
पश्यत तरुणं प्रोद्यतमरुणं
विजहित जाड्यविबन्धम् ॥
चिनुध्वममलं विकसितकमलं
कुसुमं बहुलाकारम् ।
धूपय धूपं दीपय दीपं
भूषय सकलागारम् ॥
वादय वाद्यं जनगण ! हृद्यं
गाय च गीतमपूर्वम् ।
उलुलु-ध्वनिभि- र्मङ्गल-स्वनिभि-
र्ललनाः ! पूरयताम्बरम् ॥
व्रजत सुदीना ! रिपवो हीनाः !
प्रशमं भुवने तूर्णम् ।
प्रसीद मानस ? नितान्त-तामस !
सत्त्वं श्रय सुखपूर्णम् ॥
लोकय लोकय मुहुरवलोकय
केयमुपेता शान्ता ?
सिंहतनुस्था शशि-सित-मस्ता
कोटिसुधाकरकान्ता ?
भारतसन्तति- दुःखन्नुदती
शङ्करदयिता दुर्गा ।
सेयमपर्णा चम्पकवर्णा
भवनमुपेति सवर्गा ! ॥
तामनुगच्छति लघु लघु गणपति-
रपास्य विघ्नवितानम् ।

श्रिया लसन्ती श्रियं दिशन्ती
श्रीरपि यात्यनुयानम् ॥

सुललितवीणा वादन-निपुणा
शुचिरन्वेति च वाणी ।
शक्तिविधाता वैरि-विजेता-
ऽनुगतः सुरसेनानीः ॥

ब्रह्म-विष्णु-हर प्रमुख-सुरेश्वर-
निवहैरियमनुयाता ।
त्रातुं भारत- वर्षं दुर्गत-
मेति त्रिजगन्माता ॥

एहि सुरेश्वरि ! भगवति शङ्करि !
मान्ये हिमगिरि-कन्ये !
विश्व-कृति-स्थिति- लयकरि ! शाश्वति !
देवि महेश्वरि ! धन्ये ! ॥

प्रहरण-धारिणि ! दशभुजशालिनि !
दैत्यनिसूदनि ! दुर्गे !
प्रसीद तारिणि ! विप्लव-वारिणि !
भारत-सन्ततिवर्गे ! ॥

स्वधर्म्महीनाः स्व-भावदीनाः
स्वदेशभक्तम्मन्याः ।
नैष्ठ-पदस्था अहो व्यवस्था
परिषदि ते शर्म्मण्याः ॥

आयाहि जननि ! मृतसञ्जीवनि !
तव पदधूल्यवकीर्णा ।

स्वदेशपण्यै- धनजनधान्यै-
वसुधा भवतु सुपूर्णा ॥

नाशय रोगं प्रशमय शोकं
दूरीकुरु सति ! दैन्यम् ।
अपहर पापं दुःखं तापं
विश्वं कुरु सुखपूर्णम् ॥

मुक्ति-परिमले तव पदकमले
भवतु सभक्तिरशेषः ।
गन्ध-पुष्प-जल- पत्र-नयनजल-
संरचिताञ्जलिरेषः ॥

नमस्तुभ्यमयि सदानन्दमयि !
भातु मनसि तव कान्तिः ।
निखिले भुवने गगने पवने
विलसतु शाश्वत-शान्तिः ॥

---

## अभिज्ञानशकुन्तले अभिनवतरो द्वापरः

[ निबन्धकः—के. ए. रामलिङ्गशास्त्री ]

रूपक-तल्लजस्य अभिज्ञानशकुन्तलस्य अन्तरङ्गबहिरङ्गसौन्दर्यं को हि नाम सहृदयोऽध्यक्षं नानुभवति ? गैर्वाणीलावण्यरसास्वाद-शेवधयः सुधिय आमेरिकीयादयोऽपि रूपकम् एतत् अतितराम् आद्रियन्ते ; किं बहुना बह्वीभिर्भाषाभिर्नाटकम् इदमन्ववादि ; एतस्मा-देव नाटकरत्नाकरात् श्रीमत्कुमारिलभट्टः—"सतां हि सन्देहपदेषु

वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः।" इति सूक्तिलहरीमुद्धृत्य स्वकीय-ग्रन्थे उपोद्वलयति स्म ; प्रत्येकं प्रत्यङ्गं च विमृश्यमानमदो रूपकम् आदर्शभूतं, लौकिकवैदिकप्रमाणसर्वस्व-स्वर्णनिकषभूतं चेति को नु खलु अभिरूपो नाभ्युपैति? रघुवंश-मेघसन्देश-शकुन्तलादौ श्रव्ये दृश्ये च काव्ये कविकुञ्जरोऽसौ 'अभिज्ञान' पदम् असकृदायोजयति स्मेति ज्ञायते ; तत्र मार्गदर्शी महात्मा कः? इति चेत् अनुयुज्यते, तत्र भवान् आदिकविरेवेति विदितप्रायमेवैतत् विपश्चिताम्। अस्तु—प्रकृतमनुसरामः ;—आखेटाय अरण्यम् अनुप्रविष्टः प्रजारञ्जनलब्धवर्णः पृथिवीपालो महाराजदुष्यन्तः—आश्रमानोकहानाम् आलवाल-प्रपूरणार्थम् इतस्ततः पर्य्यटन्तीः श्रुतिमधुरम् आलपन्तीः, समवयो-रूपसौहार्दशालिनीः, शकुन्तला-प्रियंवदाऽनसूया अन्वर्थनामधेया अवलोक्य आश्रमान्तिके आह स्म आत्मगतं शकुन्तलालावण्यलालसः,—"अपि नाम कुलपतेरियम् असवर्णक्षेत्रसम्भवा स्यात्? अथवा कृतं सन्देहेन ;—

असंशयं क्षत्रपरिग्रहक्षमा यदाऽऽर्यमस्यामभिलाषि मे मनः।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥ १६॥

तथापि, तत्त्वत एनाम् उपलप्स्ये" इति। अनन्तरं च, "वयमपि तावद् भवत्योः सखीगतं किञ्चित् पृच्छामः,"—इति प्रस्तुत्य, पप्रच्छ ;—"स भगवान् काश्यपः शाश्वते ब्रह्मणि स्थित इति प्रकाशम् ; इयं च वः सखी तदात्मजेति कथमेतत्?" इति। अत्र—

'ऊर्द्ध्वरेता महाभागो भगवान्······।
··· ··· ··· ··· ··· ···॥

इति श्रीमन्महाभारतवचनात् नैष्ठिकब्रह्मचर्ये इत्यर्थे 'शाश्वते ब्रह्मणि' इत्यस्य व्याचख्युः सर्वे व्याख्यातारः।

'ब्राह्मणस्य चतस्रो भार्य्याः, क्षत्रियस्य तिस्रः, वैश्यस्य द्वे, शूद्रस्य

स्वैव भार्या' इति स्मृत्या ब्राह्मणादीनां चतुर्णां वर्णानां सजातीया जाया धर्माचरणार्थं, विजातीया तु भोगार्थम् इत्यवगमात् कुलपतिना भगवता काश्यपेन भोगार्थम् उदूढात् असवर्णक्षेत्रात् शकुन्तलाया उत्पत्तिरभ्यूह्यते,—'अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा स्यात् ?' इति भाषितेन दुष्यन्तेन ; 'आजन्म ब्रह्मचारी भगवान् काश्यपः' इति-किंवदन्त्या विदितवृत्तान्तेनापि दुष्यन्तेन उत्तरत्र—'इयं च वः सखी तदात्मजेति कथमेतत् ?' इति असाङ्गत्यम् अनुयुज्यते , ऊहापोहकुशलेनापि सार्वभौमेण दुष्यन्तेन पूर्वोत्तरसन्दर्भाननुगुणमिदं भण्यत इति प्रथमोऽयं संशयावतारः (१)। वस्तुस्थितिमनुसृत्य काश्यपमहामुनिम् आजन्म ब्रह्मचारिणं वा, परब्रह्मनिष्ठं वा अङ्गीकुर्मः ; तथा सति, शिष्यः—'वेलोपलक्षणार्थमादिष्टोऽस्मि प्रवासात् प्रतिनिवृत्तेन तत्रभवता काश्यपेन ; तत् प्रकाशं निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या इति, ( परिक्रम्यावलोक्य च ) हन्त ! प्रभातम्, तथा हि—

> यात्येकतोऽस्तशिखरं पतिरोषधीनाम्
> ... ... ... ... ... ... ।
> अन्तर्हिते शशिनि सैव कुमुद्वती मे
> ... ... ... ... ... ...
> यावदुपस्थितां होमवेलां गुरवे निवेदयामि ॥

काश्यपः—'वत्से ! इतः सद्यो हुतान् अग्नीन् प्रदक्षिणीकुरुष्व । ( सर्वे परिक्रामन्ति )

> अमी वेदिं परितः क्लृप्तधिष्ण्याः समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
> अपघ्नन्तो दुरितं हव्यगन्धैर्वैतानास्त्वां वह्नयः पावयन्तु ॥

( इति ऋक्छन्दसाऽऽशास्ते ) इति ईदृशगुरुशिष्यवाक्यपर्यालोचनेन भगवान् काश्यपतापसः संज्ञायते 'नित्याग्निहोत्री' इति ; शास्त्रे

ब्रह्मणि स्थितस्य कुलपतेर्भार्याविहीनस्य अग्निहोत्रहोमः कथं प्रसज्यते? यदि नाम साग्निकोऽयं काश्यपतपस्वी वानप्रस्थाश्रमी अभ्युपेयते, तर्हि नित्यब्रह्मचारित्वप्रथा भज्येत; यदि निरग्निकः, कथम् उपपद्यते वैतानाग्निहोमः? इति द्वितीयः संशयावतारः (२)

ध्वन्यध्वन्यध्वन्य-मूर्धन्य-धन्यस्य आदिकवेः सदन्तेवासिकल्पस्य महाकवेः कालिदासस्य अमृतस्यन्दिनि अभिज्ञानशकुन्तले ईदृशा पूर्वोत्तरसन्दर्भाननुगुणा वर्णनफक्किका निकामं साहित्यविद्यारसिकैः कथं वा आद्रियेत? अतश्च ईदृशसंशय-नवावतारं कृपया संस्कृत-साहित्यपरिषदः पारिषद्याः पण्डिततल्लजा अविलम्बितमेव निवर्तयेयु-रिति विश्वसिमि; सति अवकाशे स्वीयमाशयं च प्रकटीचिकीर्षामि; बहोः कालादारभ्य विषयोऽयं हृदयं मे आविलयति; अतो मयाऽयं सुकुमारोऽभ्युपायः कृतः; पत्रे प्रश्नमुखेन जिज्ञास्यते स्वीय-धियः शुद्धेत्र इति शम्।

---

मिथिलाधिप-राजश्री-

## श्रीरमेश्वरसिंहबाहादुरमहोदयानां स्वःप्रयाणमुपलक्ष्य

## "शोकोच्छ्वासः"

[ निबन्धकौ—श्रीसारदाचरणसेन-कविरत्नम् श्रीउपेन्द्रनाथ-झा-व्याकरणाचार्य्यश्च ]

अस्तंगतो भारत-धर्मभानू
रमेश्वरः श्रीमिथिलाधिनाथः।
ब्रह्मण्य-विद्या-विमलीकृतात्मा
धरामराणां शरणं द्विजेन्द्रः॥ १॥

तदीय-देहस्य विनाश-दुःखैः
सा भारती लोकललामभूता ।
विलोलमाल्याम्बर-वीतकान्ति-
र्मुञ्चत्यजस्रं बहुशोकजास्रम् ॥ २ ॥

अस्तंगते भारत-धर्म्मभाना-
वधर्म्म-वात्याक्षुभिते धराब्धौ ।
प्रवेपमाना बत ! धर्म्म-नौका
विना सुदक्षं नृप-कर्णधारम् ॥ ३ ॥

अस्तं गते भारत-धर्म्मभानौ
रमेश्वरे श्रीविदुषां वरिष्ठे ।
सनातनं धर्म्मधनं जनानां
ग्लानिं परां याति विनाश्रयेण ॥ ४ ॥

अस्तं गते भारत-धर्म्मभानौ
गीर्वाण-वाणी-विदुरे नरेन्द्रे ।
विद्वत्प्रिये तत्त्वविदां वरिष्ठे
पायादपायात् सुरभारतीं कः ? ॥ ५ ॥

अस्तं गते भारत-धर्म्मभानौ
दिगन्त-विश्रान्त-यशः-प्रचारे ।
शोकाग्नितप्ता जनतातिदीना
मोमुह्यते वज्रहता लतेव ॥ ६ ॥

आचार-पूतो महनीय-कीर्त्ति-
र्विद्वद्वरेण्यो गुणवत्सहायः ।
रमेशभक्तः करुणानिधान-
मासीत् प्रजानां शरणं नरेन्द्रः ॥ ७ ॥

अस्तं गते भारत-धर्म्मभानौ
स्वाध्याययुक्ते मिथिलाधिनाथे ।
छन्नं जगच्छोक-घनान्धकारै-
र्हा हेति शब्दं कुरुते सदैव ॥ ८ ॥

श्रीमद्रमेश्वरनृपो हुतजातवेदा
वेदानुरक्तहृदयो बुधवद्ध-सख्यः ।
वेदादि-शिक्षणविधौ विदधे महात्मा
विद्यालयं सुकृतिनां प्रमुदे चिराय ॥ ९ ॥

यदीय-सामर्थ्यमुपेत्य गङ्गा-
नङ्गारिसङ्गानवरुद्धमार्गा ।
इन्तीह नोऽघानि समागता सा
हा राजतेऽसौ खलु दिव्यलोके ॥ १० ॥

स्वच्छाम्बु-पद्म-रुचिराणि सरोवराणि
चञ्चच्छशाङ्ककिरणोज्वल-मन्दिराणि ।
निर्माप्य भूमिपतिना भुवि तेन लब्धं
पूर्णेन्दुकुन्दधवलं यशसः कदम्बम् ॥ ११ ॥

सन्ताप-हन्तुः शशिशेखरस्य
कृपाकटाक्षैर्मिथिलेश-सूनुः ।
कामेश्वरो नाम नवीनभूपो
जीयात् सुशीलः शरदां शतानि ॥ १२ ॥

## "अभिनयशैलीविमर्श"-समालोचनम्

[ निबन्धकः—श्रीविभूतिभूषणभट्टाचार्य्यः ]

साहित्यपरिषत्सम्पादकैरग्रहायणमासि यः खलु 'अभिनयशैली-विमर्श' इति निबन्धः प्राकाश्यं नीतः, निबन्धे तस्मिन् एकत्र लेखकेनोक्तं 'नाट्यप्रयोगस्य तथा तथा पद्धतयः पूर्वं स्थिता अपि अन्तरा भारते-ऽस्मिन् वर्षे दर्शनादिविद्यायामिव लोकानामत्यासङ्गेन स्मरणीयतामिव उपजग्मुरिति विदितमेव पुरातत्त्ववेदिनां विदुषाम्' इति तु कथमपि न सङ्गच्छते। ११श खृष्टाब्दं यावत् दर्शनविद्यायाः प्रकृष्टालोचन-दर्शनात्। तत्तु "वेदान्तदर्शनेर इतिहास" नामके वङ्गभाषामये ग्रन्थे प्रज्ञानानन्दसरस्वतीपादैः सविस्तरं प्रपञ्चितम्। बौद्धादीनाम् अभ्युदया-नन्तरम् एव तत्-खण्डनार्थं भूयसो चर्चा आसीत् इति तु प्रेक्षावत्सु प्रसिद्धम्। यदि नाट्यकलायाः पतनं कदाचिदपि स्वीक्रियते तत्तु नाट्य-कलाया एकशरणानां भारतीयानां राज्ञां पतनकारणीभूतात् यवना-क्रमणसमयादेव अजायत इति तु अध्यापकवरेण 'कीथे'नापि समर्थितं स्वीयग्रन्थे, यथा—

"Doubtless the Mahomadan conquest seriously effected the vogue of the classical drama.......... The kings who had been main support of the actors and the poets alike, disappeard from their thrones, or suffered grave reverses in fortune. The tradition of dramatic performances gradually vanished.—"Keith. Sans, drama,-p, 371.

यद्यपि अयं हि कालो नाट्यकलाया अवनतेराधारतामयासीत्

तथापि नेदं वक्तुमुचितं 'नाट्यकला अस्मिन् समयतः स्मरणीयतामिवोप-जग्मुः'रिति, ११श-खृष्टाब्दात् परमपि प्रसन्नराघवादीनां निर्माणात्। न खलु दृश्यकाव्यानि पठनार्थं लिखितानि ग्रन्थकारैः, किन्तु प्रयोगार्थ-मेव, तत्र नास्ति कोऽपि सन्देहावसरः। उक्तञ्च कीथेन—

"Nor is there the slightst doubt that the early dramatists were anything but composers of plays meant only to be read' S. D. by Keith, p, 358.

अतः परं लेखकेनोक्तम् "अत एव दूरातीते काले यथा यथा नाट्य-प्रयोगाः कुशलानां कुशीलवानां कौशलेन सामाजिकचेत.सन्तोष-माहितवन्तः तथा तथा नेव तदानीं" यद्यपि दर्शनविद्यायामेव अत्यासक्तिसमये नाट्यकलाया अवनतिः स्वीक्रियते, तथापि नाट्य-कलाया नटजातीयानाम् उपजीविकारूपत्वात् पण्डितानां दर्शन-विद्यायामन्यत्र वा अत्यासक्तौ कथं तस्या हानिर्भवितुमर्हति, अथवा दर्शनविद्यायां सर्वेषां भारतीयानाम् आसक्तौ प्रमाणाभावात् तदपि हेयमेव। यच्चोक्तं "तथा पटप्रवर्त्तनादिव्यापारेण नाट्यप्रयोगमुपभोग-योग्यं सुप्रबन्धेन समपादयन्। ततः प्रभृति निरन्तरामनुशीलनं नाट्य-कलायाः समजनि जनानन्दनं भारते वर्षे" इत्यादि। अत्र वयम् अस्या-मेव पत्रिकायां प्रकाशितस्य कस्यचन निबन्धस्य प्रतिध्वनिं कुर्महे "यदेते पटप्रवर्त्तनादिव्यापारा नाधुनिकाः परन्तु प्राचीना एव। तत्र रङ्गमञ्चा-दिकं विनिर्म्माय चित्रलिखित-पटादि-साहाय्येन कृत्रिम-पर्वतादीना-मुपकल्पनेन च अभिनयः सर्वथा याथार्थ्यं प्रापितोऽभूत्······अभिनय-प्रारम्भे नान्दीपाठश्च कृतः। अतो मन्ये सर्वथायमभिनय आधुनिक-रूपकाभिनयेन तुल्य आसी"दिति "भारते प्रथमनाट्याभिनयः" सां. पं. पं. १म ख. २य स.। अत्र भरतोक्तम् अवधेयम्

"यद् द्रव्यं जीवलोके तु लतालक्षणलक्षितम्।
तस्यानुकृतिसंस्थानं नाट्योपकरणं भवेत्॥

# "अभिनयशैलीविमर्श"-समालोचनम्

[ निबन्धकः—श्रीविभूतिभूषणभट्टाचार्य्यः ]

साहित्यपरिषत्सम्पादकैरग्रहायणमासे यः खलु 'अभिनयशैली-विमर्श' इति निबन्धः प्राकाश्यं नीतः, निबन्धे तस्मिन् एकत्र लेखकेनोक्तं 'नाट्यप्रयोगस्य तथा तथा पद्धतयः पूर्वं स्थिता अपि अन्तरा भारते-ऽस्मिन् वर्षे दर्शनादिविद्यायामेव लोकानामत्यासङ्गेन स्मरणीयतामिव उपजग्मुरिति विदितमेव पुरातत्त्ववेदिनां विदुषाम्' इति तु कथमपि न सङ्गच्छते। ११श खृष्टाब्दं यावत् दर्शनविद्यायाः प्रकृष्टालोचन-दर्शनात्। तत्र "वेदान्तदर्शनेर इतिहास" नामके वङ्गभाषामये ग्रन्थे प्रज्ञानानन्दसरस्वतीपादैः सविस्तरं प्रपञ्चितम्। बौद्धादीनाम् अभ्युदया-नन्तरम् एव तत्-खण्डनार्थं भूयसी चर्चा आसीत् इति तु प्रेक्षावत्सु प्रसिद्धम्। यदि नाट्यकलायाः पतनं कदाचिदपि स्वीक्रियते तत्तु नाट्य-कलाया एकशरणानां भारतीयानां राज्ञां पतनकारणीभूतात् यवना-क्रमणसमयादेव अजायत इति तु अध्यापकवरेण 'कीथे'नापि समर्थितं स्वीयग्रन्थे, यथा—

"Doubtless the Mahomadan conquest seriously effected the vogue of the classical drama......... The kings who had been main support of the actors and the poets alike, disappeard from their thrones, or suffered grave reverses in fortune. The tradition of dramatic performances gradually vanished.—"Keith. Sans, drama,-p, 371.

यद्यपि अयं हि कालो नाट्यकलाया अवनतेराधारतामयासीत्

तथापि नेदं वक्तुमुचितं 'नाट्यकला अस्मिन् समयतः स्मरणीयतामिवोपजग्मु'रिति, ११श-खृष्टाब्दात् परमपि प्रसन्नराघवादीनां निर्माणात्। न खलु दृश्यकाव्यानि पठनार्थं लिखितानि ग्रन्थकारैः, किन्तु प्रयोगार्थमेव, तत्र नास्ति कोऽपि सन्देहावसरः। उक्तञ्च कीथेन—

"Nor is there the slightst doubt that the early dramatists were anything but composers of plays meant only to be read' S. D. by Keith, p, 358.

अतः परं लेखकेनोक्तम् "अत एव दूरातीते काले यथा यथा नाट्यप्रयोगाः कुशलानां कुशीलवानां कौशलेन सामाजिकचेत.सन्तोषमाहितवन्तः तथा तथा नैव तदानीं" यद्यपि दर्शनविद्यायामेव अत्यासक्तिसमये नाट्यकलाया अवनतिः स्वीक्रियते, तथापि नाट्यकलाया नटजातीयानाम् उपजीविकारूपत्वात् पण्डितानां दर्शनविद्यायामन्यत्र वा अत्यासक्तौ कथं तस्या हानिर्भवितुमर्हति, अथवा दर्शनविद्यायां सर्वेषां भारतीयानाम् आसक्तौ प्रमाणाभावात् तदपि हेयमेव। यच्चोक्तं "तथा पटप्रवर्त्तनादिव्यापारेण नाट्यप्रयोगमुपभोगयोग्यं सुप्रबन्धेन समपादयन्। ततः प्रभृति निरन्तरामनुशीलनं नाट्यकलायाः समजनि जनानन्दनं भारते वर्षे" इत्यादि। अत्र वयम् अस्यामेव पत्रिकायां प्रकाशितस्य कस्यचन निबन्धस्य प्रतिध्वनिं कुर्महे "यदेते पटप्रवर्त्तनादिव्यापारा नाधुनिकाः परन्तु प्राचीना एव। तत्र रङ्गमञ्चादिकं विनिर्माय चित्रलिखित-पटादि-साहाय्येन कृत्रिम-पर्वतादीनामुपकल्पनेन च अभिनयः सर्वथा याथार्थ्यं प्रापितोऽभूत्······अभिनयप्रारम्भे नान्दीपाठश्च कृतः। अतो मन्ये सर्वथायमभिनय आधुनिकरूपकाभिनयेन तुल्य आसी"दिति "भारते प्रथमनाट्याभिनयः" सं. पं. १म ख. २य स.। अत्र भरतोक्तम् अवधेयम्

"यद् द्रव्यं जीवलोके तु नानालक्षणलक्षितम्।
तस्यानुकृतिसंस्थानं नाट्योपकरणं भवेत्॥

प्रासादगृहयानानि नाना प्रहरणानि च ।
न शक्यं तानि वै कर्त्तुं यथोक्तानीह लक्षणैः ॥

अतः तेनोक्तम्

वर्मचर्मध्वजाः शैलाः प्रासादा देवता गुहाः ।
हयवारणयानानि विमानानि गृहाणि च ॥
पूर्वं वेणुदलैः कृत्वा कृतभावसमाश्रयाः ।
ततः सुरङ्गैराच्छाद्य वस्त्रैः सारूप्यमानयेत् ॥" इति ।

एवं वस्त्राणाम् असान्निध्यात् "तालोयैर्वा कलिञ्जैर्वा स्वच्छैर्वस्त्रक्रिया भवेत् ।" २१ अ० १७४ श्लो० । इदमस्माकं प्रतिभाति चित्रपटाः खलु दृश्यानां प्रदर्शनार्थम् एव कल्पते न तु तेषाम् अन्यो नियोगः, ते च दृश्या यदि याथार्थ्येन प्रदर्श्यन्ते तर्हि नास्ति तावत् दृश्यपटप्रयोजनं रूपकप्रयोगे । इदानीं तु कदाचिदपि वस्तूनां याथार्थ्येन प्रदर्शनं नाट्ये क्रियते, अत एव इदानीन्तन-रूपकप्रयोगे बहुलप्रचारो दृश्यते पटानाम् । यद्यपि कौथेन 'प्रमाणाभावात् इदमेव वक्तुमुचितं यत् नासीत् प्राचीनभारते नाट्ये दृश्यपटप्रयोगः, तदा तु रङ्गमञ्चाः प्रान्तेषु लम्बमानया यवनिकया आवृता दरीदृश्यन्ते । स्थानकालादयस्तु प्रेक्षकैरनुमेया आसन् । न खलु रङ्गमञ्चे रथादीनां पर्वतादीनां वा उपस्थितिर्दृश्यते' इति मनसि निधायैव उक्तम्—

'The King may mount a chariot, but no effort is made to bring one for this purpose, he merely elaborate pantomine through the action of getting up off the ground, and hhe audience, trained and intelligent realizes what had happened at, the beginning of Sakuntala the gazelle which Dusyanta followes is not a real animal, but the Sutradhara tells us the king is pursuing a gazelle "etc S. D. p, 364. किन्तु अतः परं

तेनैव उक्तं—"and doubtless there were represented, houses, caves, chariots, rocks, horses and so on" p, 365. S. D. by Keith. अस्मिन् विरोधि-वाक्यद्वये दत्तावधानैर्भवद्भिर्भाव्यम् इति वयं प्रार्थयामहे। अन्यत्र लेखकेनोक्तम्—"आदौ तावदस्माकं शैशवे यादृशो दृष्टो नाट्यानां प्रयोगो यादृशश्चाद्य सन्दृश्यते, तयोर्भूयान् प्रभेदः सूक्ष्मविचारमन्तरेणापि आपातत एव प्रतिभासते। ......स्वभावतो यथास्माभिर्वचनानि प्रयुज्यन्ते, यथा वा स्वभावमनुरुद्ध्य भावाः समुपजायन्ते ततो विलक्षणं कमपि भावमङ्गीकृत्यैव वैशादौ भाषायाश्च प्रायोगिकाः प्रयोगविधिं व्यापारयन्।" अत्र वयं पृच्छामः, अभिनय इति क उच्यते? यदि तावत् स्वभावानुकरणम् अभिनयः स्यात् तर्हि अस्वाभाविकत्वात् लेखकोक्त-प्रकारो नाभिनयपदमारोहति। स्वभावानुकरणमेवाभिनयः इत्यस्य सर्ववादिसम्मतत्वात् न वा नवीनाभिनयशैली अभिनयपदमङ्गीकरोति; यतस्तत्रापि तेनोक्तम् "अलौकिकभावं स्वाभिनयान्निर्वासयन्तः सुरचारित्रे वा, यक्षचारित्रे वा, गन्धर्वप्रकृतौ वा लोकातीतानामपरेषां स्वभावपरिचये वा मर्त्यसुलभं भावकदम्बकम् अवतारयन्तः सामाजिकानामनन्तां भ्रान्तिं सम्प्रतिपादयितुं प्राचेष्टन्त"। साहित्यदर्पणकारेणोक्तं "तद्रूपारोपात्तु रूपकम्" इति; न तु सुरचारित्राभिनयकाले मर्त्यसुलभभावकदम्बकावतारणं सुरचारित्राभिनयः। इदमपि बोध्यं—सुरचारित्रे मर्त्यसुलभभावाभिनयं प्रति अलौकिकभावस्वाभिनयान्निर्वासनेच्छा न कारणम् अपि तु सुरचारित्राज्ञता एवात्र कारणम् इति मन्यामहे। एकत्र लेखकेनोक्तम् "अधुना बहुभिरेव तौर्य्यत्रिकादिविविधवाद्यस्थले शङ्खघण्टादिभिरेव वाद्यकृत्यं सम्पाद्यते"। वयमत्र पृच्छामः किं नाम शङ्खघण्टावादनं नाट्यकलायाः "नितराम् अनुशीलनफलम्।" अधुना एतदेव पश्यामः इदानीन्तनी नाट्यकला तावद् वल्गाहीना अश्वेव इतस्ततो धावति, किन्तु लेखकेनोक्तं "तत्र वयं नवीनमतानुप्रवेशं

नितराम् अनुरुन्ध्याम।" सत्यमेव "बहुमन्यन्त चामी तरलतरनाट्य-रसमधिजिगांसुभिः सामाजिकसम्प्रदाये" न तु यथार्थप्रेक्षकैस्तेषां लक्षणं तु भरतेनोक्तम् ;—

अव्यग्रैरिन्द्रियैः शुद्ध ऊहापोहविशारदः।
व्यक्तादोषोऽनुरागी च स नाट्ये प्रेक्षकः स्मृतः॥
यस्तुष्टे तुष्टिमायाति शोके शोकमुपैति च।
दैन्ये दीनत्वमभ्येति स नाट्ये प्रेक्षकः स्मृतः॥ इति।

अद्य अत्रैव विरमामः, कालान्तरे विषयेऽस्मिन् विशेषम् आलोचयितुम् आशास्महे, इति शम्।

---

## परिषत्-प्रशस्तिः

[ निबन्धकः—वा सा सूर्य्यनारायण-शास्त्री ]

श्रीमद्गौतमपाणिनिप्रभृतिभिः शास्त्रैकनिर्मातृभि-
स्तुल्यारूढयशःश्रियः सुमनसो यद्गर्भकोशान्तरे।
जायन्ते शतशोऽनिशं त्रिभुवने नाराधितामोदया
सेयं मङ्गलवल्लिका विजयतां वङ्गावनौ भारती॥ १

यद्गर्भशुक्तिमुक्ताः श्रीमद्रघुनाथधीर-जगदीशौ।
मथुरानाथसुधीन्द्रः सेयं बाभाति वङ्गभूरजिता॥ २

श्रीवासुदेव-रघुनन्दन-राघवेन्द्र-
गौराङ्गविश्रुतगदाधरसद्वरेण्याः।
यत्रावतीर्य जगतां शुभमावितेनु-
स्तद्वङ्गभूमिमहिमा न हि माति बुद्धौ॥ ३

आदर्शभूतचरिता जगताममेय-
प्रारम्भसम्भृतमहोदयदुर्विदग्धा ।
सौजन्य-सद्विनयसंवलितात्मभूमा
वाचामतीतमहिमा ननु वङ्गसीमा ॥ ४

गीर्वाणवाग्विलसितानि पुरातनानि
सर्वाभिवन्द्य-रसभावनिरन्तराणि ।
शास्त्रानुरूपमभिनीय च रूपकाणि
सेयं बहूपकुरुते परिषद् जगत्याः ॥ ५

श्री'चित्तरञ्जन'यशो हरिचन्दनार्द्रा
श्रीमद् 'रवीन्द्र'कविताऽमृतपानमत्ता ।
विद्व'त्प्रफुल्ल''जगदीश'विशोधितार्थैः
संभूषिता लसति काचन वङ्गभूमिः ॥ ६

धीरोदाररसज्ञतादिसुगुणप्राग्भारविद्योतिनां
गङ्गा-प्लावितपावनान्तरलसद्वङ्गावनीजन्मनाम् ।
यावद्भारतकीर्तिरक्षणकलाधौरेयदीक्षाजुषां
वङ्गानामुदितोदिता विजयतां साहित्यविद्वत्सभा ॥७

नामावशिष्टविभवामपि देवभाषा-
मुद्धृत्य या स्थिरयशः समवाप्तुकामा ।
तां वङ्गसत्परिषदं बुधलोकमान्या
वाग्देवता भगवती परिपातु नित्यम् ॥ ८

जितं गोष्पतिरायेण स्वर्गीयेण महात्मना ।
जितं साहित्यपरिषत्-संस्थया तदुपज्ञया ॥ ९

---

# रजनी

( पूर्वतोऽनुवृत्ता )

[ निबन्धिका—श्रीमती रेणुदेवी ]

कथं वा नयनहीना साहसेनाश्रयं विजहाति। नेदं द्वितयमपीति मे निश्चयः। न चात्र विधेयो विदुषा परिहासः। सन्ति हि बहवः पण्डितम्मन्या मादृशा मूर्खा ये द्वित्रेष्वेव ग्रन्थेषु कथञ्चित् कृत-परिश्रमाः सर्वस्यैव जगतश्चेतनाचेतनयोर्गूढ़ादपि गूढ़तरं तत्त्व-निकरं करतलाकलितामलकवदवगतं मन्यन्ते। न च विश्वसन्ति धियमतीत्य वर्त्तमानेष्वर्थेषु। नहि क्षुद्रया विचारशक्त्या जगदीश्वितु-स्तत्त्वं मीमांसयितुमर्हन्तीति तमेव विभुम् असन्तं मन्यन्ते। कथ-मीदृशा अन्धाया रूपोन्मत्ततामवगच्छेयुः।

अथ क्रमेणानुसन्दधानस्तस्यामेव निशीथिन्यां हीरालालमप्यन्त-र्हितमश्रौषम्। हीरालालेन सह तया कृतः कुलत्याग इति प्रवृत्तः प्रवादः। अतो मया कृतोऽयं निर्णयो यथा हीरालाल एव तां वञ्चय-मानः समादाय समपससार। सुसम्पादा हि नयनहीनानां वञ्चना। गतेषु च केषुचिद्दिवसेषु समदृश्यत हीरालालः। मया च रजनी-प्रवृत्तिं पृच्छ्यमानो "न किञ्चिदपि जानामी"ति प्रावदच्च। किमिदानी-मनुष्ठेयम्। राजद्वारे अभियोगोऽपि निरर्थक एव। ज्यायांस्तु मे सहोदरो मया निवेदितवृत्तान्तो "दृढ़ं निपीड़य दुर्वृत्त"मिति व्याजहार। किन्तु तदपि विफलमेवेति मन्यमानस्ततोऽहं "य एव रजन्याः प्रवृत्तिम् अवगमयिष्यति, स एव महान्तमर्थसन्तानमवाप्स्यती"ति समन्तादुदघो-षयम्, किन्तु तदपि निष्फलमेव जातम्।

जन्मनः प्रभृति नयनहीना रजनी, किन्तु तन्नयनयुगलमवलोकयता नहि केनापि तथा शक्यते ज्ञातुम्। नहि नयनयोर्विलोकने कोऽपि

दोषः प्रतिभाति। बृहत् सुनीलं भ्रमरकृष्णकनीनिकासनाथमतीव मनोहरं चक्षुः। किन्तु न विद्यते तत्र कटाक्षविक्षेपः। चाक्षुष-स्नायुदोषेणेयमस्या स्नायूनां निश्चेष्टतया न वर्त्तते वस्तूनां प्रतिबिम्ब-ग्रहणशक्तिः। सर्वाङ्गसुन्दरी खलु रजनी। समुद्भेदोन्मुख-नवीन-कदलीदलकान्तिमभिभवति तस्या गौरकान्तिः। वर्षासु सलिल-सम्पूरिता तरङ्गिणीव सम्पूर्णतां प्राप्ता घटनभङ्गी। गाम्भीर्य्यमण्डिता मुखश्रीः। गतिरङ्गभङ्गी च मृदु-धीरा, नयनहीनत्वेन कमपि सङ्कोच-विशेषञ्च ज्ञापयतः। हसितमपि दुःखमान्तरम् अभिव्यनक्ति। सदा-स्मिन् स्थिरप्रकृति-सुन्दरे विग्रहे कटाक्षहीनां दृष्टिमवलोकयतां भास्कर्य्यपटुना शिल्पिवरेण यत्नेन विनिर्म्मिता पाषाणमयी प्रतिमा स्मृतिपथमलङ्करोति। प्रत्यभाच्च प्रथमत एव तां पश्यतो मे मनसि-यदनिन्दनीयमपि सौन्दर्य्यमिदं न मनसो मोहनहेतुः। नहि रूप-वत्या अपि रूपमस्याः कमप्युन्मत्तं विधास्यति। नहि वर्त्तते नयनयोः सा मोहजननी गतिलीला। निरवद्यं सौन्दर्य्यमस्या विलोकयतां प्रकाममभिनन्दनीयं न वा विस्मृतिविषयः। स्थिरगम्भीरायास्तस्याः कान्तेरस्ति काचिदाकर्षणी शक्तिः। किन्तु अन्यदेव तदाकर्षणम् इन्द्रियसम्बन्धमतीत्य वर्त्तमानं तस्य प्रभावमभिभूय प्रवर्त्तते, यं जनाः पञ्चवाणमिति वदन्ति। अथवा किमेवमेव ?

तदेतद् यदेव भवतु नाम, अहन्तु प्रायेण चिन्तयामि कोऽयमस्या दशापरिणामो भवितेति। इयमितरकुलोत्पन्नापि नेतरप्रकृतिमनु-सरति, इति पश्यत एव प्रतिभाति। न च सम्भाव्यते सदन्वयाभिमान-वता सहास्याः परिणयः। एतावतापि कालेन न सञ्जात इतरेण सह विवाहः। गृहकर्म्मप्रधान एव हि दारसंग्रहो दरिद्राणाम्। गृह-कर्म्मस्वसमर्थां क इमां नयनहीनां दरिद्रः परिणेष्यति। को वान्यः सदन्वयजः साधारणवृत्तिपरायणामुद्वक्ष्यत्येनाम्। नयनहीना चेय-मोदृशेन स्वामिना सहवासेन दुःखमेव प्राप्स्यति रजनी। कुतस्ताव-

दस्याः सुखसम्भावना। दुश्छेद्यं कण्टककाननमन्तरा प्रयत्न-पालनीया यदियमुद्यानलतिकेव लब्धवती विसदृशे कुले जन्म, ततः कण्टकावृता तथैवानुभविष्यति मरणम्। कथं वा मयास्या गोपालेन सह परिणयाय प्रयत्नो विहितः। न सम्यगवगच्छामि, किन्तु कनिष्ठाया मातुरापश्चातिशयः समुत्तेजनानैरन्तर्य्यञ्चात्र निदानमित्यपि सत्यमेवं। किञ्च, या न शक्यते स्वयं परिणेतुं तस्याः परिणयप्रयत्नोऽपि मनोरथविषय एव।

अथैवं निशम्य सुन्दरीचयः सुमधुरं विहस्य यदि पृच्छति "किं रजनीं परिणेतुं साभिलाषं ते मानस"मिति ? नैवमिति मे तत्र प्रत्युत्तरमवगन्तव्यम्। सत्यमिदं यदियमलोकसामान्यमाधत्ते सौन्दर्य्यं, तथापि नीचकुलजेयं नयनहीना च। न च शिक्षालोकरेखासम्पातेन समुज्ज्वलमस्या हृदयम्। अतो नेयं मे परिणययोग्या, न वा तादृशो मे मनोरथः। न वा परिणये पराङ्मुखं मानसं मे। दुर्लभा तु मनोरथानुरूपा महिला। ( क्रमशः )

---

## आवाहनम्

[ निबन्धकः—श्रीहरिहरशास्त्री ]

एहि मातरयि भारतवर्षं
वितनु जगति पुनरुज्ज्वलहर्षम्।
अशन-वसन-सुख- हानि-मलिनमुख
मुल्लासय करुणामयि तूर्णं
कुरु कुरु भूतलसुखवपूर्णम्॥ १

अयि गिरिनन्दिनि खण्डय शोकं
जायमानमनुदिनमधिलोकम्।

शान्ति-निहन्ता　　　　　　　हन्त समन्ता-
　　दाधिरुपैति विकासमजस्रं
　　शमय तस्य परिणाह-सहस्रम् ॥ २

　　दधति कथं ते क्लेशविशेषां-
　　स्त्वमसि दयामयि जननी येषाम् ।
सकल-कलुषभर-　　　　　मचिरमेव हर
　　दमय भुवनगत-विपदभिघातं
　　विलसतु सततमनाविलशातम् ॥ ३

　　विदधतु निरवधि तव परिवाराः
　　शान्तिरहित-हृदि मङ्गलधाराः ।
हरताद् गणपति-　　　　　रखिलविघ्न-तति-
　　मिन्द्रमुकुटमणि-दीधिति-पातः
　　स्मितयति यस्य चरणमयि मातः ॥ ४

　　क्षीरसिन्धुदुहिता हितदृष्ट्या
　　पश्यतु तनयगणं प्रति दिष्ट्या ।
　　व-विरहजनु-　　　　　रशुभभयं ननु
　　जननि चिरादपगच्छतु दूरं
　　भुवनमुपैतु विमलसुखपूरम् ॥ ५

　　निखिलशक्तिलसिते ! तव दासाः
　　कथमिह सन्तु जगति विफलाशाः ।
शक्तिधरस्ते　　　　　　कर्मणि शस्ते
　　सपदि योजयतु सेवकवृन्दं
　　सृजतु च खलु सफलत्वमनिन्द्यम् ॥ ६

प्रकृत-बोधविधुरास्तव तनया
विपदा क्लिश्यन्त्यनुदिनमनया ।
वाग्देवी किल निदधातु निखिल-
मानवेषु दयमान-दृगन्तं
स्फुरतु च दिशि दिशि कुशलमनन्तम् ॥ ७

एवमेव जननि प्रतिवर्षं
घटय तवागमहर्षणवर्षम् ।
हिमगिरिबाले मुञ्चतु काले
जलदश्रेणिरुचित-जलधारां
लभतामवनी शान्तिमुदाराम् ॥ ८

---

भिषक्प्रवर-स्वर्गीय-

## शीतलचन्द्रचट्टोपाध्याय-कविरत्नः

[ निबन्धकः—श्रीकालिदासचतुर्धुरीण-काव्यतीर्थः एम्. ए ]

यः खलु महात्मा स्वकीयादम्याध्यवसायेन सुतीक्ष्णप्रतिभया च षोड़शवर्ष-देशीय एव स्वजीविकामुपार्जयन् अशेषाणि शास्त्राणि च अधीयानो भिषग्वरत्वमुपागतो दीनानाम् आर्त्तानां भूर्य्युपकारं विदधत् सर्वेषां चिरस्मरणीयतां गतः, स भिषक्पतिः शीतलचन्द्र आषाढ़स्य द्वाविंशदिवसे शनिवासरे अमावस्यायान्तिथौ स्वजनान् शोकान्धकारे निक्षिप्य चिराय अस्तमितः । तस्य सौम्याकृतिं लोकहितकरानुष्ठान-प्रयत्नं च निरीक्ष्य मन्यामहे यत्, स्वयमेव तारापतिः स्वर्गस्थितः कलङ्क-लाञ्छितम् अभिधानं परिजिहीर्षुरिव निष्कलङ्को विधुर्भवितुं खुलना-प्रदेशान्तर्गत-मागुराग्रामे विशुद्ध-कुलीनवंशे जन्म परिजग्राह । बाल्ये पितृहीनत्वात् कथमपि प्राप्तवयाः षोड़शवर्ष-देशीय एव जीविकार्जन-मावश्यकं मन्यमानः असमाप्तविद्याभ्यास एव वङ्गविद्यालयस्य

कस्यचित् शिक्षकत्वमुपगतः संस्कृतव्याकरण-काव्यादीनि अध्यापनावसरे अधिजगे। संस्कृतभाषायां लब्धव्युत्पत्तिः स आयुर्वेदमभ्यास्यत्। तीक्ष्णप्रतिभाबलेन अल्पेनैव कालेन सविशेष-पारदर्शितामायुर्वेदशास्त्रेष्वियाय। स्वग्रामे दीर्घकालं चिकित्सारतो लोकानां बहुप्रकारं साधितवान्। तस्मिन् महात्मनि स्वग्राममधिवसति ग्रामवासिनो निःशङ्कमानसाः कालं निन्युः। समाजस्थितविभिन्नवर्णानां मध्ये यथा कोऽपि विवादो न जायते तथासौ यतते स्म। सम्भावितविवादानाम् आरब्धानां वा तेषां प्रशमनाय सर्वदैव अचेष्टत, प्रशमनकर्त्तरि तस्मिन् परस्परं विवदमाना जना अतिष्ठन्त। बहुसंख्यका गाः पालयन्नसौ महात्मा स्वग्रामस्थितेभ्यो दुर्बल-दरिद्ररोगिभ्यो दुग्धोपकार्य्येभ्यो दुग्धम् औषधञ्च वितरन् प्रभूतं नरसेवापुण्यम् अर्जितवान्। खुलना-प्रादेशिकवोर्डाख्यसभायाः सदस्यत्वं गच्छन्नधिकविंशानि वर्षाणि सदस्यकार्य्यं चकार। एकदा भीषणे दुर्भिक्षे सञ्जाते राजकीयसाहाय्य-प्रदत्ता लक्षसंख्यका मुद्राः स्वहस्तेन दरिद्राणामन्नाभावदूरीकरणे एवम् अर्थशोचं रक्षन् व्ययितवान् यत् जेलाशासनकर्त्ता म्याजिष्ट्रेट्बाहादूरः केनचित् विशिष्टसम्मानसूचकोपाधिना एनमलंचिकीर्षुः स्वमतम् अज्ञापयत्। अमुष्मिन् ऋषिकल्पे महात्मनि स्वकीयसम्मानसूचकोपाधिं प्रत्याख्यातवति साहेबमहोदयस्तस्य तुष्टिं विधित्सुः पुनरपि विकल्पेन किमियेष इत्यपृच्छत्। असौ "स्वग्रामस्थिताङ्गलविद्यालयगृहम् इष्टकनिर्म्मितं कारयत्वि"त्यब्रवीत्, तथास्तु इत्युक्त्वा तेन जेलाशासकेन अष्टौ सहस्राणि मुद्राणां मागुराविद्यालयगृहनिर्म्माणार्थं दत्तानि। एवं परहितव्रतोऽसौ सुधीवरः खुलनाप्रदेशवासिनां सर्वेषां मनांसि रञ्जयामास। आसन्नविंशानि वर्षाणि स्वप्रदेश-सेवाकार्य्ये रतः, स्वग्राममधिवसन्नसौ स्वपुत्रयोः शिक्षार्थं कलिकातावासिनां भिषजां सनिर्बन्धानुरोधरक्षार्थं च कलिकातामधिवस्तुमायातः।

अत्रागतस्य तस्य चिकित्सानैपुण्यं स्वल्पेनैव कालेन साधारणेषु प्रचारं गतम्। दर्शनशुल्कं विनासौ स्वभैषज्यालयमागतानां रोगिणां रोगं परीक्ष्य औषधादीनि व्यवस्थापितवान्। औषधादीनि च आमरणात् स्वयमेव पर्य्यवेक्ष्य विशुद्धोपादानेन शास्त्रोक्तविधिना निर्म्मितानि अकरोत्। औषधमूल्यञ्च सर्वदैव मध्यवित्तानाम् आर्थिकावस्थानुरूपं कृतवान्। महात्मा शीतलचन्द्र इव सुचिकित्सको विरल एव। सत्यपि तस्य चिकित्सानैपुण्ये सत्स्वपि तस्य बहुसंख्यकेषु रोगिषु स कदापि उत्तरोत्तरं दर्शनशुल्कं नावर्द्धयत्, नापि गृहागतेभ्यो रोगिभ्यो दर्शनशुल्कं स्वेच्छया आदत्त। परोपकारप्रवृत्तिस्तस्य एवं महती आसीत् यत्, ज्वरचिकित्साभिधानं स्वायत्तचिकित्साभिधानञ्च ग्रन्थद्वयं विरचय्य न केवलं साधारणानाम् अपि तु सर्वेषां भिषजाम् एतत्पुस्तकद्वयं अधीयानानां बहुप्रकारं साधितवान्। उभयोर्ग्रन्थयोर्ये च मुष्टि-योगाः यानि च औषधानि उक्तानि तानि सर्वाण्येव दृष्टफलानि। स्वयमभिज्ञतया येषाम् औषधानां मुष्टियोगानां च फलं प्रत्यक्षीकृतवान् तान्येव ग्रन्थद्वये प्रकाशितवान्। ईदृशम् औदार्य्यम् ऋषिकल्पे शीतलचन्द्रे दृश्यते। त्यागशीलोऽयं भिषग्वरो न केवलम् अर्थेप्सुः परं परोपचिकीर्षुरपि आयुर्वेदचर्च्चामकरोत्। अहो तस्य अभावेन आयुर्वेदीयचिकित्साया महती क्षतिः सञ्जाता। विशुद्धायुर्वेदीय-चिकित्साकुशलस्तादृशो नासीत् कोऽपि, नापि जनिष्यते कश्चित् अस्मिन् पाश्चात्त्यचिकित्सा-प्रादुर्भावाकुले जगति। चिकित्सा-कार्य्यभारं तस्य ज्येष्ठपुत्रे कविराजप्रवरे श्रीयुक्त-शचीन्द्रनाथे न्यस्य द्वितीयपुत्रं श्रीयुक्त-यतीन्द्रनाथं च राजकीयकार्य्ये विनियोज्य असौ सम्पादितकर्त्तव्य एकाशीतितमवर्षे स्वर्गमगात्।

# मनोदूतम्

( पूर्वतोऽनुवृत्तम् )

श्रीचैतन्यदेवमातुल-कवीन्द्र-विष्णुदासविरचितम्

[ श्रीचिन्ताहरणकाव्यतीर्थ-(एम्-ए) सम्पादितम् ]

यस्याङ्घ्रिपङ्करुहि पाणितलं नखेन्दु-
बिम्बे दृगञ्चलपुटं श्रवणं कथायाम् ।
चेतः प्रसादकणिकैकमहोत्सवेऽपि
प्राणैः समं विदधतं व्रज नीरजाक्षम् (?) ॥ ६३ ॥

कङ्केल्लिकोमलदलोपरि जृम्भमाण
मल्लीशिरीषपरिकल्पितचारुतल्पे ।
उद्यद्विमुग्धकुसुमावलिमाकरन्द-
गन्धभ्रमद्भ्रमरझङ्कृतिसंभृतेऽपि ॥ ६४ ॥

वल्लीकुटीरकुहरे तमुपेहि मन्द-
मन्दं समीरणसमीरितपल्लवाग्रे ।
आभीरिकाभिरभितः पदपाणिपद्म-
संवाहनग्रहपराभिरुपास्यमानम् ॥ ६५ ॥

लीलाश्रमाम्बुचयचुम्बितकृष्णगौर-
तन्वोस्तयोरभिमुखं हरि-गोपवध्वोः ।
अन्योऽन्यदेहरुचिर-प्रतिबिम्बयोगाद्
गौरो हरिः किमपि गोपवधूश्च कृष्णा ॥ ६६ ॥

---

**63.** इतः श्लोकत्रितये पङ्क्तिविशेषा मसीनाशात् अस्पष्टतामुपगताः I पुस्तके । b कथायाम्—D. कथायाः—I.

**66.** a -श्रमा—D. -श्रया—I. -पद्म—D. -कृष्ण—I.

चेतः कलिन्ददुहितुः पुलिनं नवीनं
वृन्दावनं रसमयं समयो वसन्तः ।
गोपाङ्गनास्तरुणिमामृतपूरपूर्णाः
कृष्णः कलाकुलगृहं किमहं ब्रवीमि ॥ ६७ ॥

एतान्यनन्तरसवन्ति शिवं वहन्ति
वृन्दावनान्तविहितानि हितानि जन्तोः ।
पेयानि कर्णपुटकेन तथा त्वयैव
ध्येयानि मानस हरेश्चरितानि तानि ॥ ६८

पीताम्बरं परिगृहीतपराङ्गनं वा
गोपीः परं पुरुषकान्तमुपेयुषीर्वा ।
मासूय मानस परं नहि तस्य विश्वं
विश्वस्य सोऽपि हि परो न तदात्मकत्वात् ॥ ६९ ॥

यासां करेषु करमीक्षणमीक्षणेषु
गण्डेषु गण्डमधरेषु तथाधरञ्च ।
वक्षस्तटेषु हृदयाभिविलीय वक्षः
सम्मानयन् मनसिजं विजहार कृष्णः ॥ ७० ॥

शृण्वन्ति कर्णपुटकेन हृदा नमन्ति
गायन्ति मुक्तरसनेन दृशा पिबन्ति ।
लक्ष्मीप्रियं करतलेन पदे स्पृशन्ति
या निर्भरं स्तनतटेन परिष्वजन्त्यो ॥ ७१ ॥

---

**69.** b -मिष्ट—D. -कान्त—I.

**70.** d विलुप्तैवैषा पङ्क्तिः I पुस्तके ।

**71.** c विलुप्तैवैषा पङ्क्तिः I पुस्तके ।

---

६९। कृष्णस्य विश्वात्मकत्वात् अत एव विश्वाभिन्नत्वात् गोपीभिः रमणं न दोषावहम् इत्यर्थः ।

तासाञ्च मानस मुकुन्दपदारविन्द-
द्वन्द्वाहितेहितमनस्तनुजीवितानाम् ।
प्रेमोत्तराणि चरितानि हरिप्रियाणां
गेयानि बल्लवकुरङ्गविलोचनानाम् ॥ ७२ ॥

यानि व्रजेऽर्कदुहितुः पुलिने जले वा
वृन्दावने च मुरवैरिण ईहितानि ।
आर्त्तेन मानस-सुखान्यपि सम्यगेता-
न्युद्देश्यमन्यदिति तानि न वर्णितानि ॥ ७३ ॥

दीनाधमार्त्तपतितानभिसन्धिबन्धोः
श्रीपुण्डरीकनयनस्य कृपैकसिन्धोः ।
पादाम्बुजन्मनि मनः समयं समीक्ष्य
यत्नान्मदीरितमिदं विनिवेदनीयम् ॥ ७४ ॥

आपादमस्तकमयं दुरितार्णवान्त-
र्मग्नश्चिरं निगडितो हतवासनाभिः ।
दत्ताभयं चरणतामरसं तवेद-
मुद्दिश्य कोऽपि मधुसूदन रारटीति ॥ ७५ ॥

---

**72.** b. d प्रायेण विलोपमिवोपगतमेतत् पङ्क्तिद्वितयं I पुस्तके ।

**74.** a नानाधमा—D. दीनाधिमा—I, d -मदीरित—D, -त्वदीरित—I.

**75.** a दुरितारन्तः—I. b निपतितो भववासनाभिः—I.

---

७२। मुकुन्दपदारविन्दद्वन्द्वे आहितं न्यस्तम् ईहितं च मनश्च तनुश्च जीवितञ्च याभिस्तासाम्। हरिप्रियाणां हरिः प्रियो यासां तासां, यद्वा हरेः याः प्रियास्तासामिति ।

दीनं यथोचितनिजाचरणैर्विहीनं
हीनं परं परमपापमहाधुरीणम् ।
एकं त्वदीयचरणं शरणं स्मरन्तं
सीदन्तमन्तकभयादनुकम्पयेश ! ॥ ७६ ॥

यत् कामदं चरणतामरसं तवेदं
स्वप्नेऽपि तन्न खलु सेवितमेव देव ।
मामन्तकान्तिकमनन्त परिभ्रमन्तं
पाहीति दग्धवदनः कति वावदीमि ॥ ७७ ॥

ध्यातं न तेऽङ्घ्रिकमलं कमलाङ्करत्नं
गीतं न वा निखिल-मङ्गलधाम नाम ।
नाकर्णितं जगदनर्घ्यतमं चरित्रं
किन्तत् प्रभो विहितमार्त्तहिताय यत् स्यात् ॥७८॥

यातं दिनं किमिति यामवतीयमग्रे
साप्याजगाम विरतिं दिनमिति भूयः ।
एवं स्ववञ्चनपटुर्मधुकैटभारे
न त्वां स्मरामि न भजामि न चाश्रयामि ॥ ७९ ॥

त्वां ब्रह्ममौलिमुकुटाग्रमरीचिपूर-
नीराजिताङ्घ्रिकमलं कमलालयेश ।
धन्याः स्तुवन्ति कथयन्ति जपन्ति शृण्व-
न्त्युत्कीर्त्तयन्ति विलपन्ति विलोकयन्ति ॥ ८० ॥

स्त्री-भीति-वीतहृदयः क्षितिपृष्ठधूलि-
सन्दोहधूसर-तनुर्विलपन् मुकुन्दम् ।
उन्मुक्तकेशवसनः परिमुक्तकण्ठ-
मुत्कण्ठितः क्व परितः परिरोरुदीमि ॥ ८१ ॥

ईहामहे न हि महेन्द्रपदं मुकुन्द
स्वीकुर्महे चरणदैन्यमुपागतं वा ।
आशां पुनस्तव पदाब्ज-कृताधिवासाम्
आशास्महे चिरमियं न कृशा यथा स्यात् ॥ ८२ ॥

कोटिः शिरांसि मम सन्तु शिरोऽनु कोटि-
र्वक्त्राणि वक्त्रमभितो रसनाश्च कोटिः ।
वाणीपतेऽनुरसनं परितस्तवैव
नामानि कोटिरनुकोटियुगं स्फुरन्तु ॥ ८३ ॥

आकाङ्क्षणीयममरैरपि मर्त्यदेहं
लब्ध्वापि दुर्लभतमं किमहं करोमि ।
गोविन्द यत् सुरमुनीन्द्रजनैकवन्द्यं
नाराधयं किमपि ते चरणारविन्दम् ॥ ८४ ॥

---

**80.** a चन्द्रचूडमुकुटालिमरीचि—D.　　ब्रह्ममौलिमुकुटाग्रमरीचि—I, b -नरेश—I. लयेश—D. c जपन्तीति त्रुटितं I पुस्तके ।

**81.** a -वीति—I. -वीत—D. b विलपन्—D. वितपन्—I.

**82.** b तरल—I. चरण—D.

**84.** d -महं—D. I, -तमं—D. (margin)

दीनं यथोचितनिजाचरणैर्विहीनं
हीनं परं परमपापमहाधुरीणम् ।
एकं त्वदीयचरणं शरणं स्मरन्तं
सीदन्तमन्तकभयादनुकम्पयेश ! ॥ ७६ ॥

यत् कामदं चरणतामरसं तवेदं
स्वप्नेऽपि तन्न खलु सेवितमेव देव ।
मामन्तकान्तिकमनन्त परिभ्रमन्तं
प्राह्णेति दग्धवदनः कति वावदीमि ॥ ७७ ॥

ध्यातं न तेऽङ्घ्रिकमलं कमलाङ्करत्नं
गीतं न वा निखिल-मङ्गलधाम नाम ।
नाकर्णितं जगदनर्घ्यतमं चरित्रं
किन्तत् प्रभो विहितमार्त्तहिताय यत् स्यात् ॥७८॥

यातं दिनं किमिति यामवतीयमग्रे
साप्याजगाम विरतिं दिनमिति भूयः ।
एवं स्ववञ्चनपटुर्मधुकैटभारे
न त्वां स्मरामि न भजामि न चाश्रयामि ॥ ७९ ॥

त्वां ब्रह्ममौलिमुकुटाग्रमरीचिपूर-
नीराजिताङ्घ्रिकमलं कमलालयेश ।
धन्याः स्तुवन्ति कथयन्ति जपन्ति शृण्व-
न्त्युत्कीर्त्तयन्ति विलपन्ति विलोकयन्ति ॥ ८० ॥

स्त्री-भीति-वीतहृदयः क्षितिपृष्ठधूलि-
सन्दोहधूसर-तनुर्विलपन् मुकुन्दम् ।
उन्मुक्तकेशवसनः परिमुक्तकण्ठ-
मुत्कण्ठितः क्व परितः परिरोरुदीमि ॥ ८१ ॥

ईहामहे न हि महेन्द्रपदं मुकुन्द
स्वीकुर्महे चरणदैन्यमुपागतं वा ।
आशां पुनस्तव पदाब्ज-कृताधिवासाम्
आशास्महे चिरमियं न कृशा यथा स्यात् ॥ ८२ ॥

कोटिः शिरांसि मम सन्तु शिरःऽनु कोटि-
र्वक्त्राणि वक्त्रमभितो रसनाश्च कोटिः ।
वाणीपतेऽनुरसनं परितस्तवैव
नामानि कोटिरनुकोटियुगं स्फुरन्तु ॥ ८३ ॥

आकाङ्क्षणीयममरैरपि मर्त्यदेहं
लब्ध्वापि दुर्लभतमं किमहं करोमि ।
गोविन्द यत् सुरमुनीन्द्रजनैकवन्द्यं
नाराधयं किमपि ते चरणारविन्दम् ॥ ८४ ॥

---

**80.** a चन्द्रचूडमुकुटालिमरीचि—D. ब्रह्ममौलिमुकुटाग्रमरीचि—I, b -नरेश—I. लयेश—D. c जपन्तीति त्रुटितं I पुस्तके ।

**81.** a -वीति—I. -वीत—D. b विलपन्—D. वितपन्—I.

**82.** b तरल—I, चरण—D.

**84.** d -महं—D. I, -तम—D. (margin)

दीनं यथोचितनिजाचरणैर्विहीनं
हीनं परं परमपापमहाधुरीणम् ।
एकं त्वदीयचरणं शरणं स्मरन्तं
सीदन्तमन्तकभयादनुकम्पयेश ! ॥ ७६ ॥

यत् कामदं चरणतामरसं तवेदं
स्वप्नेऽपि तन्न खलु सेवितमेव देव ।
मामन्तकान्तिकमनन्त परिभ्रमन्तं
पाहीति दग्धवदनः कति वावदीमि ॥ ७७ ॥

ध्यातं न तेऽङ्घ्रिकमलं कमलाङ्करत्नं
गीतं न वा निखिल-मङ्गलधाम नाम ।
नाकर्णितं जगदनर्घ्यतमं चरित्रं
किन्तत् प्रभो विहितमार्त्तहिताय यत् स्यात् ।७८॥

यातं दिनं किमिति यामवतीयमग्रे
साप्याजगाम विरतिं दिनमेति भूयः ।
एवं स्ववञ्चनपटुर्मधुकैटभारे
न त्वां स्मरामि न भजामि न चाश्रयामि ॥ ७९ ॥

त्वां ब्रह्ममौलिमुकुटाग्रमरीचिपूर-
नीराजिताङ्घ्रिकमलं कमलालयेश ।
धन्याः स्तुवन्ति कथयन्ति जपन्ति शृण्व-
न्त्युत्कीर्त्तयन्ति विलपन्ति विलोकयन्ति ॥ ८० ॥

ह्री-भीति-वीतहृदयः क्षितिपृष्ठधूलि-
सन्दोहधूसर-तनुर्विलपन् मुकुन्दम् ।
उन्मुक्तकेशवसनः परिमुक्तकण्ठ-
मुत्कण्ठितः क्व परितः परिरोरुदीमि ॥ ८१ ॥

ईहामहे न हि महेन्द्रपदं मुकुन्द
स्वीकुर्महे चरणदैन्यमुपागतं वा ।
आशां पुनस्तव पदाब्ज-कृताधिवासाम्
आशास्महे चिरमियं न कृशा यथा स्यात् ॥ ८२ ॥

कोटिः शिरांसि मम सन्तु शिरोऽनु कोटि-
र्वक्त्राणि वक्त्रमभितो रसनाश्च कोटिः ।
वाचोपतेऽनुरसनं परितस्तवैव
नामानि कोटिरनुकोटियुगं स्फुरन्तु ॥ ८३ ॥

आकाङ्क्षणीयममरैरपि मर्त्त्यदेहं
लब्ध्वापि दुर्लभतमं किमहं करोमि ।
गोविन्द यत् सुरमुनीन्द्रजनैकवन्द्यं
नाराधयं किमपि ते चरणारविन्दम् ॥ ८४ ॥

---

**80.** a चन्द्रचूडमुकुटालिमरीचि—D. ब्रह्ममौलिमुकुटाग्रमरीचि—I, b -नरेश—I, लयेश—D. c जपन्तीति त्रुटितं I पुस्तके ।

**81.** a -वीति—I. -वीत—D. b विलपन्—D. वितपन्—I.

**82.** b तरल—I, चरण—D.

**84.** d -महं—D. I, -तमं—D. (margin)

उद्दामपामरजराविधुरं शरीरं
नीरन्ध्रमाकुलितमामयसङ्करेण ।
दुर्वासनाभिरनिशं पिशिताशनाभि-
राक्रम्यते तत इतः शरणं त्वमीश ॥ ८५ ॥

अस्पृष्ट एव धन-दार-तनू-तनूज-
मानापमानकुलशीलविचिन्तनेन ।
अज्ञातदिग्विदिगनन्यपरः परेश-
मन्तः स्मरन्नविरतं क्व नु बंभ्रमीमि ॥ ८६ ॥

मुक्तिर्न कर्णपथमेति किमिव सिद्धिः
कारुण्यपुण्यनिलयार्थनमेतदेव ।
त्वां ध्यायतः क्वचन काननसन्निवेशे
शेषं प्रयान्तु मम जन्मशताहृतानि ॥ ८७ ॥

जन्मावसानमपि जन्म तथावसानं
यत्र क्वचिन्मम सुरोत्तम जाघटीतु ।
किन्तु श्रुतिं स्पृशतु कापि सुधाप्रवाह-
सन्दोहनिर्भरपटुर्भवदीयवार्त्ता ॥ ८८ ॥ ( क्रमशः )

---

86. a एव—D. बन्ध्—I.

87. a मूर्त्तिर्न मुक्ति—I. मुक्तिर्न मुक्ति—D. मुक्तिर्न कर्ण—D. ( margin )

d शताक्रतानि—D. I, शतानि तानि, शताहृतानि—D. (margin)

---

८५। पिशिताशनाभिः राक्षसीभिरिव दुष्टवासनाभिर्मदीयं शरीरं चाक्रम्यते इत्यर्थः ।

८७। हे कारुण्यपुण्यनिलय एतदेव अर्थनं प्रार्थनम् । जन्म- शताहृतानि कर्म्माणीति शेषः ।

# विविदिषा

( पूर्वानुवृत्ता )

[ निबन्धकः—श्रीउपेन्द्रनाथ-सेनगुप्तः काव्यतीर्थः ]

ननु जरामरणादिदुःखजातं कथमुत्पद्यते ? सर्वं दुःखं जातिप्रत्ययं जन्मास्ति दुःखं मरणञ्चास्ति, यदि जन्म न स्यात् तदा मरणमपि न स्यात्। कुतो जन्म भवति ? भवात्, यतो भवः सत्तास्ति ततो जातिः, यदि सत्ता न स्यात्, तदा जातिरपि न स्यात्। स च भवः उपादान-प्रत्ययः, यत् किल वाह्यं जगद् उप समीप आदत्ते तदुपादानम्, असत्यु-पादाने भवो नश्यति। उपादानन्तु तृष्णाप्रत्ययं, तृष्णा वासनाख्या, असत्यां तृष्णायाम् उपादानं नश्यति। वेदनाप्रत्यया तृष्णा, वेदना तु विषयानुभूतिरूपा, असत्यां वेदनायां तृष्णा नश्यति। वेदना पुनः स्पर्शप्रत्यया, स्पर्शस्तु विषयैः समम् इन्द्रियाणां स्पर्शः सम्बन्धो वा, असति स्पर्शे वेदना नश्यति। स्पर्शस्तु षडायतनप्रत्ययः, षडायतनानि तु षडिन्द्रियाणि, पञ्च ज्ञानेन्द्रियाण्यन्तःकरणञ्च। नामरूपप्रत्ययं षडा-यतनम्, तत्र नाम वेदनासंज्ञासंस्कारविज्ञानानां समाहारः, रूपन्तु क्षित्यप्तेजोमरुतां भूतानां चतुष्टयस्य समष्टिः, नामरूपे एकीभूय पञ्चस्कन्धान् घटयतः। असतोर्नामरूपयोः षडायतनानि नश्यन्ति। विज्ञानप्रत्यये नामरूपे, विज्ञानं पुनर्वृत्तिविशेषः। या वृत्तिः सुख-दुःखहर्षलज्जादिप्रत्ययान् सम्बध्नाति प्रत्ययानां धारावाहिकज्ञाने च कारणं भवति, सर्वान् प्रत्ययान् यथायथं सन्निवेशयति, स्वकर्मणि विनि-युङ्क्ते च तच्चिच्छक्त्यात्मकं किञ्चित्। असति विज्ञाने नामरूपे नश्यतः। संस्कारप्रत्ययं विज्ञानम्। स्मृतिवितर्कविचारप्रीति मोहाद्या द्विपञ्चाशच्चित्तवृत्तयः संस्कारनाम्नाभिधीयन्ते, समासेन सर्वा एव चित्तवृत्तयः संस्कारा इत्यभिधीयन्ते। असति संस्कारे विज्ञानं नश्यति।

अविद्याप्रत्ययः संस्कारः। असत्याम् अविद्यायां संस्कारनिरोधः। तस्याश्चाविद्याया निरोधोऽष्टाङ्गयोगमार्गानुशीलनेन भवति। कोऽसा-वष्टाङ्गयोग इति उपरिष्टाद्वक्ष्यते। सङ्क्षेपत इदमेव भगवता बुद्धेनाविष्कृतं सत्यम्। एतानि द्वादश निदानानि इति बौद्धशास्त्रे प्रथितानि। अयमेव प्रतीत्य-समुत्पादः कथ्यते। अथेदानीं कोऽयं वस्तुशून्यवादो नामेति तदालोच्यते। अविद्यायां नष्टायां किमव-शिष्यते? ननु शून्यमेव। ननु किमिदं शून्यं नाम, सर्वेषां वस्तूनामत्यन्ताभावरूपम् उताहो भावरूपं किञ्चित्? तत्र बौद्ध-विद्वेषिणः सर्व्व एव टीकाभाष्यादिकृतः सर्वेषां वस्तूनामत्यन्ता-भावरूपं शून्यमेव शून्यशब्देन जगदुः। स्वभाववादिनः केचिदर्वाचीन-बौद्धशास्त्रप्रणेतारश्च शून्यशब्दस्य तथाविधामेव व्याख्यां चक्रुः। परं— प्राचीनबौद्धशास्त्रे शून्यशब्दस्य तादृशी कापि व्याख्या न लभ्यते, भगवान् बुद्धोऽपि शून्यशब्देन तथाविधं किञ्चिन्न बोधयामास। बुद्धेन कोऽपि शास्त्रग्रन्थो न विरचितः। धर्म्मकीर्त्तिनामा कश्चित् बौद्धाचार्य्यः स्वकृतग्रन्थे शास्त्राणि तु "तद्विनेयाः प्रचक्रिरे" एवमुक्तवान्। बुद्धस्य मतमप्यर्वाचीनकाले विभिन्नप्रकारैर्व्याख्यातं विभिन्नशिष्यैर्विकृततां प्रापद्यत। तथा च बोधिचित्तविवरणे श्रूयते—

"देशना लोकनाथानां सत्त्वाशयवशानुगाः।
भिद्यन्ते बहुधा लोक उपायैर्बहुभिः पुनः॥
गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणा।
भिन्नापि देशनाभिन्ना शून्यताद्वयलक्षणा॥"

अपि च भगवता बुद्धेन यादृशो योगोऽनुष्ठितः, तेनाभावात्मकं शून्यं नासाद्यते, परं भावरूपं वेदान्तिकानां परमात्मेव किञ्चित् वस्तु। निरवलम्बनस्य मनसोऽवस्थितिर्न सम्भवति। एतत्तु शून्यं काठानां ब्रह्मवल्लिव,—

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात् प्रमुच्यते॥

कठ १।३।१५

इदमपि शून्यं बलहीनेन न लभ्यते, अस्यापि—
क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति।

कठ १।३।१५

अत एव (अष्टसाहस्रिका) प्रज्ञापारमितायां षोडशपरिवर्त्ते—"गम्भीरेयं देवपुत्राः प्रज्ञापारमिता दुरभिसम्भवानुत्तरा सम्यक् सम्बोधिः परमदुरभिसम्भवाऽनुत्तरा सम्यक् सम्बोधिरभिसम्बोद्धुं दुष्प्रज्ञैर्हीनवीर्यैर्हीनाधिकमुक्तिकैरनुपायकुशलैः पापमित्रसंसेविभिः।" अपि च तत्रैव "शून्यत्वाद् भगवन् सर्वधर्म्माणां न स कश्चिद्धर्म्मः संविद्यते यो धर्म्मः शक्योऽभिसम्बोद्धुम्। तथा हि भगवन् सर्वधर्म्माः शून्या, यस्यापि भगवन् धर्म्मस्य प्रहाणाय धर्म्मो देश्यते सोऽपि धर्म्मो न संविद्यते, एवं यश्चाभिसम्बुध्येतानुत्तरां सम्यक् सम्बोधिं यच्चाभिसम्बोद्धव्यं यश्च जानीयाद् यच्च ज्ञातव्यं सर्वं एते धर्म्माः शून्याः।" अत एव शून्यमिदं—

"यतश्चोदेति सूर्य्योऽस्तं यत्र च गच्छति।
तं देवा सर्वेऽर्पितास्तदु नात्येति कश्चन॥" इति

( कठ० २।४।९ )

कठोल्लिखितवस्तुवत् किञ्चित्। अपि च—प्रज्ञापारमितायामष्टादशपरिवर्त्ते,—"शून्यतायाः सुभूते एतदधिवचनं यदेतद् गम्भीर"-मित्यादित आरभ्य—"ये च सुभूते शून्या अक्षया अपि ते। या च शून्यता अप्रमेयतापि सा तस्मात्तर्हि सुभूते एषां धर्म्माणामर्थतो विशेषो वा न नानाकरणं वा नोपलभ्यते। अभिलापा एते सुभूते तथागते, नाख्याता अभिलपिता अप्रमेयमिति वा असंख्येयमिति वा अक्षयमिति वा शून्यमिति वा अनिमित्तमिति वा अप्रणिहितमिति वा अनभिसंस्कार इति वा अनुत्पाद इति वा वाऽजातिरिति वाऽभाव

इति वा विराग इति वा निरोध इति वा निर्वाणमिति वा।" अत्रा-भावो विषयाणामिति वेदितव्यम्। वस्तुतः प्राचीनबौद्धाः कुत्रापि शून्यं सर्वेषां वस्तूनामत्यन्ताभावरूपमिति नाभिहितवन्तः। शून्यस्य भाव-रूपत्वे अद्वैतत्वसिद्धौ च वेदान्तिकानां ब्रह्मवस्तुना तस्याभेद एव मन्तव्यः। अत्र वैदेशिकस्य कस्यचित् महापण्डितस्य निर्वाणविषयक-मतमुल्लिख्यते, तेन तु बौद्धशास्त्रं भूयो भूयः समालोच्य लिखितमिदम्—

"Nirvana is not a state of pure nothingness. It is a form of existence of which none of the qualities presented in the constant flux of experience can be predicated, which therefore, appears nothingness to us in comparisen with the states with which existence has familiarised us. It is deliverance from all needs and sorrows, from hate and passion, from birth and death. It is only to be attained by the highest possible concentration of thought and will. In the mystical concept of God ( of the German mystics ) as well as in the Buddhist conception of Nirvana, it is precisely inexhaustable possibility which bursts through every conceptual form and makes every determination an impossibility." ( Prcf. Harold Hoffdng , of Copenheglue. )

अस्यार्थसारस्तु,—बौद्धशास्त्रस्य निर्वाणपदं सर्वेषामभावानामत्यन्ता-भावरूपं किमपि असद्भाववबोधयति। सर्वदानुभूयमानानां विषयाणां केनापि ( निर्वाणाख्य-भावरूपं ) इदं वस्तु प्रकाशयितुं न शक्यते अतः अस्मदनुभूतैर्वस्तुभिरस्य सादृश्याभावाद् इदं शून्यरूपेण प्रतीयते। रागद्वेषजन्ममृत्युप्रभृतिसर्वदुःखाद् विमुक्तिरेव निर्वाणम्, श्रेष्ठसमाधि-

नैवेदमधिगन्तव्यम्। शर्म्मण्य ( जारमानी) देशीयानां रहस्यरसिकानां दार्शनिकानाम् ईश्वरसम्बन्धीयं ज्ञानं बौद्धानां निर्वाणविषयकञ्च ज्ञानं— नितरामिव भावरूपत्वं व्रजतः, परं केनापि ज्ञानविषयेण ज्ञानमिदं निरूपयितुं न शक्यते। ( पण्डितप्रवर हेराल्डहफडिङ्गस्य ? कोपेन हेगेनवासिनः )

बौद्धानां शून्यवादं क्षणिकवादञ्च प्रायेण सर्वे एव भाष्यकृतः समधिकृतवन्तः। पातञ्जलदर्शनस्य व्यासभाष्येऽप्यस्ति कश्चिन् महान् अवयवी यः परमाणुपुञ्जानां समष्टिमप्यतिशेते इति प्रतितिष्ठापयिषुणा भाष्यकारेण "यस्य पुनरवस्तुकः स प्रचयविशेषः सूक्ष्मञ्च कारणमनुपलभ्यमविकल्पस्य तस्यावयवाभावात् अतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति प्रायेण सर्वमेव प्राप्तं···मिथ्याज्ञान"मित्येवंविध-वाक्यैः बौद्धमतमाक्रान्तं दृश्यते, एवमन्यत्रापि। यदि शून्यत्वं निर्वाणञ्च भावरूपं किञ्चित् तदा तस्मिन् प्रायेण सर्वेषामेव प्रतिपक्षस्थापित-दोषाणां निरसनं स्यात्। भगवता बुद्धेन अहिंसादयो ये धर्माः प्रचारिताः, वेदादौ भारतादौ च तेषां बाहुल्येनैव प्रचारो दृश्यते। तथा च महाभारते—

"अहिंसा सत्यमक्रोधः सर्वाश्रमगतं तपः।

( शान्ति० १६१।१५ )

न भूतानामहिंसाया ज्यायान् धर्मोऽस्ति कश्चन।
यस्मान्नोद्विजते भूतं जातु किञ्चित् कथञ्चन॥

( शान्ति० २६२।२- )

ऋषयो ब्राह्मणा देवाः प्रशंसन्ति महामते।
अहिंसालक्षणं धर्मं वेदप्रामाण्यदर्शनात्॥

( अनु० ११४।२ )

अहिंसा परमो धर्मस्तथाहिंसा परं तपः।
अहिंसा परमं सत्यं यतो धर्मः प्रवर्त्तते॥ (अनु० ११५।२३)
तदेतदुत्तमं धर्ममहिंसा धर्मलक्षणम्। ( अनु० ११५।७८ )

अहिंसालक्षणो धर्म्म इति धर्म्मविदो विदुः ।

( अनु० ११६।२१ )

मन्वादिस्मृतिसंहितादिषु अहिंसामैत्रीप्रभृतीनां प्रशंसा कृता। तथा च मनौ—

इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।

अहिंसया च भूतानाममृतत्वाय कल्पते ॥ ( मनु० ६।६० )

अपि च भगवान् मनुः स्वकृतसंहितायामेकत्र जीव-नाशभिया भूमिकर्षणमपि निषेधन् बुद्धेन याहिंसा प्रचारिता तामेवाहिंसां समादृतवान्। अन्येष्वपि स्मृतिसंहितादिषु तन्त्रेषु च—बौद्धमतसमर्थकं पर्य्याप्तं वस्तु विद्यते, अत्र तु निबन्धस्य दैर्घ्यभिया अस्माभिस्तेषामाकलनात् विरम्यते। केचन बौद्धा आत्मानं नाङ्गीकुर्वन्ति इति तन्मतं दूषयन्ति, अपरे च केचन असद्वादिनो बौद्धा इति तन्मते दोषं पश्यन्ति। यदि शून्यं भावरूपं तत्त्वं स्यात् तर्हि आत्मेति शब्दमात्रस्य अव्यवहाराद् बौद्धा नापराद्धवन्तः किमधिकं वेदेऽपि केवलम् ऋग्वेदीय-नासदासीयसूक्ते एव स्फुटतरो वेदान्तवादवाक्ये अनुभूयते नान्यत्र, न तेन अन्येषां वेदानां कापि अनुपपत्तिरसमादरो वा। असद्वादस्तु उपनिषद्यपि दृश्यते, तथा च—"असद्वा इदमेवाग्र आसीत्" इत्यादि श्रूयते। ( तैत्ति० ( २।७ ) विभिन्नप्रस्थानानां संवाद उपनिषद एव लभ्यते तथा च,

"कालस्वभावो नियतिर्यदृच्छा

भूतानि योनिः पुरुषः इति चिन्त्यम् ।

संयोग एषां न त्वात्मभावा-

दात्माप्यनीशः सुखदुःखहेतोः ॥ ( श्वेता० १।२ )

इत्यादि श्वेताश्वतरवाक्यं सर्वेषां विदितम्। बुद्धेन कीदृशमतं समाहितं तन्निश्चयेन वक्तुं न शक्यते, परं तन्मतं यद्भवति तद्भवतु, तस्मात् प्रागपि तस्य प्रचार आसीत्। अत एव भगवता बुद्धेन नूतनं किञ्चिन्न

प्रचारितम्, परन्तु तदाविर्भावसमये अन्तःशुद्धिरहितानां शुष्ककर्म्म-काण्डरतानां प्रादुर्भावेण धर्म्म आकुलितो बभूव, स किल भगवान् आविर्भूय स्वयं योगोपदेशदानेन आत्मानम् आदर्शरूपेण प्रदर्श्य च "अन्धभूतानां लोकानां कर्त्ताहं सदृशो प्रभा"मिति प्रतिज्ञाय लोकानां शिक्षां विदधत् आत्मनो युगे युगेऽवतीर्णस्य भगवतो नारायणस्यावतारत्वं प्रथयामास। अत्रेदमपि वक्तव्यं यद्, बौद्धानां मतेऽपि "स्वकर्म्मफल-भाक् पुमान्"। अपि च तेषां मतेऽपि जन्मान्तरमस्ति। जातकग्रन्थे भगवतो बुद्धस्यैव बहूनां जन्मनां विवरणं समासाद्यते। बौद्धशास्त्रे स्वर्ग-नरकादीनां कथापि बाहुल्येनैवास्ति, परं यथा वेदान्तिकानां मते स्वर्गलाभादीनामसारता बौद्धमतेऽपि तथैव। अत एव बौद्धधर्मः सर्वथा वेदविरोधीति वक्तुं न शक्यते।

नास्ति वेदोदितं लोके इति येषां मतिः स्थिरा।
नास्तिकास्ते समाख्याता अस्ति येषां त आस्तिकाः॥

इत्युक्तलक्षणं नास्तिकत्वं च कथं बौद्धेषु समारोपयितुं शक्यते तदपि भाव्यम्।        ( क्रमशः )

---

## संस्कृतपत्रिका-विमर्शनम्

**ब्राह्मणमहासम्मेलनम्**—ब्राह्मणमहासम्मेलनं नाम मासिकं संस्कृतपत्रं केवलं सनातनधर्म्मरक्षायै बद्धपरिकरं वाराणसी-धामतः प्रकाशितं भवति। "वर्त्तमानस्य युगसङ्कटस्य सन्धिमुहूर्त्ते एतत्सदृशस्य एकस्य सामयिकपत्रस्य प्रयोजनमस्ती"ति अनेनैवो-द्घोष्यते। यद्यपि साहित्यरसपिपासूनां सहृदयानां सम्यङ्मनोरञ्जन-मनेन भविष्यति वा न वेति महान् सन्देहो वर्त्तते, तथापि वयमेतस्य

सास्थ्यं सुदीर्घं जीवनञ्च कामयामहे। यतोऽस्माकं भारतीयानां साहित्यसेवाऽपि न धर्मसेवातो भिन्ना। 'चतुर्वर्गफलप्राप्तिः सुखाद्दल्पधियामपि काव्यादेव।' चतुर्वर्गमध्ये धर्मस्तु आदावेव निर्दिष्टः। अस्माकं साहित्यरसास्वादनं ब्रह्मास्वादसहोदरम्। आधुनिकास्तु तस्मादादर्शाद् भ्रष्टा इव लक्ष्यन्त इति नितरां दुःखिता वयम्। परम् एतन्मते तु यत् किञ्चनाधुनिकं तदेवासाधु, पुराणमित्येव हि साधु सर्वम्। अस्मन्मतं तस्माद् भिन्नमेव—'पुराणमित्येव न साधु सर्वम्, न सर्वमेवाधुनिकमसाधु। न वा यत्किञ्चनाधुनिकनाम्नोद्घोषितम् —'आधुनिकसभ्यसमाचाराः' इतिशीर्षके निबन्धे अन्यत्र वा तत् सर्वमेवाधुनिकम्। को वा न जानाति यदाचारनिन्दा-परदारगमनपरस्वापहरणास्पृश्यतावर्जनशास्त्रनिन्दाद्यनुकूलयुक्तिजालविस्तारचार्वाकादिभिर्नास्तिकैः स्मरणातीतकालात् प्रभृति कृतः, क्रियते, करिष्यते च। न इमे आधुनिकसभ्यसमाचाराः। प्रतियुगमेवासन् लौकायतिकाः स्थास्यन्ति च। यदि पुराणमात्रमेव साधु तर्हि एतेषां मतमपि साधुतया ख्यातं स्यात्। अत एव ग्राह्यमपि भवेत्। अस्माकं मते तु न पुराणमात्रमेव ग्राह्यं, न वाधुनिकमात्रमेव त्याज्यम्। माधुकरी वृत्तिरेवात्र साधीयसी। परं पुराणं वा भवतु नवीनं वा भवतु सनातनधर्मविरोधि मतमपि सप्रयोजनमेव सनातनधर्मस्य उत्कर्षप्रतिपादनाय—रात्रिर्यथा दिवसस्य, दुःखं यथा सुखस्य, अन्धकारो यथा आलोकस्येति।

**सुप्रभातम्**—सुप्रभातं नाम संस्कृतसाहित्यसमाजस्य मासिकमुखपत्रम्। सम्पादकीयात् स्पष्टमवगम्यते यत् पत्रमिदं सामाजिकनिबन्धबहुलं ब्राह्मणसम्मेलनप्रतिपक्षीभूतञ्च। अनेनैवोक्तं—'चिरं स्थापितायाः वङ्गीय-ब्राह्मणपरिषदो वृहदायोजनं ब्राह्मणमहासम्मेलननाम्ना काश्यां सञ्जातमासीत्। तत्र च—यथा स्वार्थपरायणै-

मीहत्त्वाकाङ्क्षिभिः कैश्चन द्विवैः पण्डितैः स्वार्थसाधनाय नियमहत्या धर्म्महत्या च कृता, साऽपि विदितप्रायैव पत्रपाठकानाम्।' इति। साम्प्रतमुदासीनप्राया वयं सामाजिकवार्त्तादौ।

**उद्योतः**—पञ्चनदीय संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्। पञ्चनदीयत्वमस्य वैशिष्ट्यमतस्तत्रैवास्य प्रचारबाहुल्यमभ्यर्थयामहे। अत्यन्तमेव नूनं सार्धरूप्यकमस्य वार्षिकं शुल्कं स्थापितम्। परम् —'अग्रिमे वर्षेऽवश्यं तद्वर्धनीयं भविष्यति। यतो ग्राहकसङ्ख्याद्यापि सन्तोषप्रदा न जाता' तस्माद्वार्षिकप्रवर्धनभयात् "ग्राहकसङ्ख्याभिवर्धनमवश्यमेव कुर्वन्तु भवन्त इति सादरमभ्यर्थना" अस्य सम्पादकानाम्।

**श्रीशारदा**—मैसूरविभागात् प्रकाशिता, आयुर्वेदविमर्शबहुला च। वर्णाश्रमधर्म्मविषयकाश्च निबन्धाः स्वल्पा अपि न विद्यन्ते इति न। अनेनोच्यते—'वर्णाश्रमाचारधर्म्मनिर्मूलनमेव स्वराज्यसिद्धेः सोपानमिति ये तु भणन्ति ते छ्ह्मनादिप्रपञ्चचारित्रमेव न जानन्ती'ति। विचारयन्तु साध्वसाधुविचारनिपुणा अस्या उक्तेः सारवत्ताम्।

## रसमञ्जरी *

[ निबन्धकः—श्रीदक्षिणारञ्जन-शास्त्री एम्. ए ]

छात्रप्रतिभा—ग्रामान्तरादागतः शिरोमणिर्माधवमपृच्छत्—'कस्यान्तेवासी भवान्' इति। अधीती व्याकरणे माधवः सगर्वमाह—'तत्रभवतो विद्यानिधिस्ये'ति। शिरोमणिराह...'माधव, अदन्तानामेव ङसः स्यो भवति। कथमुच्यते त्वया विद्यानिधिस्ये'ति? माधवेन पुनरपि सदर्पमेवोक्तं—'किं भवता न ज्ञायते यद् विद्यानिधिरप्यदन्त-स्तस्य एकोऽपि नास्ति दन्तो मुखविवरे? अदन्तत्वादेव मया ङसः स्थाने स्यः कृतः' इति।

* * * * * * * * *

शिरोमणिः पुनरप्यपृच्छन्माधवं—'माधव, व्याकरणे व्युत्पन्नो भवान् उच्यतां स्त्रियाः सम्बोधनैकवचने कीदृशं रूपं भविष्यती'ति। माधवेनोक्तं—'प्रेयसि, प्रिये, प्रियतमे वा भवति' इति।

* * * * * * * * *

शिरोमणिः पुनराह...'माधव, व्याकरणे ते अगाधपाण्डित्यं सञ्जातम्। परं दर्शने ते कीदृशं ज्ञानमिति जिज्ञासुरहं पृच्छामि 'को नाम जैमिनि'रिति। माधवेनोक्तं सकोपं 'चौरः स दार्शनिकाप-सदो यो बौद्धशास्त्रादेव सर्वं तत्त्वं संगृहीतवान्' इति। शिरोमणिनोक्तं 'किं तत्र प्रमाण'मिति। माधवेनोक्तं 'तद् बुद्धशाखादिति' 'तस्य सूत्र-मेवात्र प्रमाणम्' इति।

* * * * * * * * *

---

* इतः परं सरलः सरसश्च क्षुद्रतमः सन्दर्भविशेषो "रसमञ्जरी" इत्याख्यया पत्रिकायां प्रचरिष्यति। आशास्महे "रसमञ्जरी"यं मतिमञ्जर्याः सौरभ्यैव वाचकानां हृदयमदयमावर्जयितेति।

सं० सा० प० स०।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

| November 1929. | १८५१ शकीये कार्त्तिके १२श-वर्षस्य ७म-संख्या | Vol. XII. No 7. |
|---|---|---|

## विजया

[ निबन्धकः—श्रीउपेन्द्रमोहन-साङ्ख्यतीर्थः ]

धर धर धर भूधरपति-पुत्रि ! तनयदत्तं
भक्तिबहुलमर्थविकलमर्चनमतिसत्तम्।
स्वीकुरु तरुपल्लवगुरु-कुम्भशिरसि पादं
नाशय सति सन्ततिमनु सन्ततमवसादम्॥ १

भयमपनय दलितहृदयमुन्नतहृदयाधी-
ननुकम्पय ननु शाम्भवि ! तनुजाननुशाधि।
आशिषमुपवर्षय सुतमूर्द्धसु शतधारां
जहतु त इह मोह-महितसंसृतिगुरुकाराम्॥ २

अर्चनमिह कतिपयदिनमेत्य जननि तुच्छं
प्रबहुल-नेत्रसलिलसिक्त-यवसगुच्छम्।
हर्षमवनि-दुर्लभमुपपाद्य तनयसङ्गे
रङ्गिणि ! पुनरद्य किमिति मज्जसि गुरुभङ्गे॥ ३

प्रभवसि सुतसद्मनि पतिवेश्मनि तव दास्यं
खिद्यसि गृहकर्म्मसु पुनरत्र भवति लास्यम् ।
पितृवनमनु तत्र वससि सौध इह हि शेषे
कथमिह सति ! वर्त्तितुमभिवाञ्छसि नहि देशे ॥ ४
चिरमनुचर पतिमतिवरमस्ति किमत इष्टं
स्वामिनि दृढभक्तिरिति हि रमणी-शुभदिष्टम् ।
केवलमिह कतिपयदिनमम्ब ! सुतकदम्बं
शोकमलिनमिच्छति वत मातरमवलम्बम् ॥ ५
गिरिश-रमणि ! किमिति तत्र भवसि निरनुकम्पा
पात्यत इह सुतवचसि किमिति विषम-शम्पा ॥
तारकरिपु-वारणमुख-मुखविनिहित-दृष्ट्या
सुतचयमवलोकय सति ! हृदयसरसदृष्ट्या ॥ ६
जननि ! सुतवदाशु किमिति तव च विरसमास्यं
नन्दति कथमिन्दुविमलमद्य न किल हास्यम् ।
पतिगृहगतिरत्र न सति ! हेतुरभवदिष्टः
ताम्यति नहि नियतकाम्यकर्म्मणि वत शिष्टः ॥ ७
तिष्ठतु तद् यदुपतपति भृशमिह हरजायां
सुतगणमुपतपति किन्तु विरहो विजयायाम् ।
भवदनन्य-मातृक इति ताम्यति सुतसार्थ-
स्त्रिदिवजननि ! मानवमनु कोऽपि तव हि नाथः ॥ ८
प्रकृतिसुलभ-दयया प्रतिवर्षमतुलहर्षे
सुतगणमनुषञ्जय सति याद्दशमिह वर्षे ।
त्रिदिनमात्रमाहितमिह मिलनं तव तथ्यं
भवतु जननि मानवमनु दिवसत्रयपथ्यम् ॥ ९

# श्रीमल्लिनाथ-मखीन्द्रः सञ्जीविनी च

[ निबन्धकः—के. ए. रामलिङ्गशास्त्री ]

वैदुष्यश्रिया राजमान-भाजनं श्रीमन्मल्लिनाथसूरिणं मन्यामहे —संस्कृतसाहित्यरसास्वादलम्पटाः सर्वेऽपि विद्वद्विविदुषुभटगणाः सर्वदा संस्मरन्त्येवेति ; संस्कृतसाहित्यरत्नाकरे लघुत्रय-गुरुत्रयत्वेन प्रथितानां रघुवंश-कुमारसम्भव-मेघसन्देशानां, शिशुपालवध-किराता-र्जुनीय-नैषधीयचरित्रानां भट्टिकाव्यादीनां च अन्येषां काव्यानां वैश-द्येन, वैशारद्येन च व्याख्याता असौ सूरिवर्यः सर्वेषां विदुषां विवि-दुषूणां च हृदयकुहराजिरे प्रतिष्ठितः समस्तशास्त्रार्थतत्त्वं सदा उपदिशन्निव प्रतिभासते ; अन्तर्वाणिरेष असदृशवाग्व्यनुग्रहविशेषेण 'नामूलं लिख्यते किञ्चिन्नाऽनपेक्षितमुच्यते' इति स्वप्रतिज्ञानुसारं पठन-पाठनोपयुक्ताखिलकाव्यपद्यविवरणं करतलामलकवत् बहु-प्रमाणप्रबन्धोपोद्बलनेन विशदीचकार च उपचकार च इति नाति-शयोक्तिः ; यत्र कुत्रापि ईषदनवधानं न दोषावहम् ; 'न हि सर्वः सर्वं जानाति' इति नीत्या, 'सहजं गच्छतः स्खलनम्' इति नयेन च ; अमुना मनीषिणा आरचितस्य अत्युत्तमस्य आजानसिद्धस्य उपकारस्य सर्वथा वयं कृतज्ञाः स्मः ; अधुना अधीति-बोधाऽऽचरण-प्रचारणार्थं-सुपयुज्येतेति विचिन्त्य कश्चन विवरणविशेष उद्घाट्यते अदसीय-रघुवंश-सञ्जीविन्याम् ; तद्यथा—

"तत्राऽक्षोभ्यं यशोराशिं निवेश्याऽवरुरोह सः ।
पौलस्त्यतुलितस्याऽद्रेरादधान इव ह्रियम्" ॥ ८० ॥

इति रघुवंशचतुर्थसर्गीयपद्यव्याख्यां सञ्जीविनी विवृणोति एवम्— 'स रघुः, तत्र हिमाद्रौ, अक्षोभ्यम् अधृष्यम्; यशोराशिं निवेश्य निधाय; पौलस्त्येन रावणेन तुलितस्य चालितस्य अद्रेः कैलासस्य ह्रियम् आदधानः जनयन्निव अवरुरोह अवततार; कैलासमगत्वैव प्रतिनिवृत्त इत्यर्थः; नहि—शूराः परेण पराजितम् अभियुज्यन्ते, इति भावः।' अत्र कवेराशयो नैव स्फुटोभवति; अतः किञ्चित् प्रस्तूयते—

"परस्परेण विज्ञातस्तेषूपायनपाणिषु।
राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा॥" इति

पूर्वतनपद्ये हिमवता नगराजेन रघुमहाराजस्य सामरस्यं सम्पादितमिति विज्ञायते; हिमाद्रिशिखर एव स्थाणु अच्छाच्छं स्वकीयं यशः पर्वताकारं समूह्य, रजतमयस्य रावणान्दोलितस्य शिववासस्य स्वसदृशशैलान्तरनिर्मापणेन लज्जां सञ्जनयन्निव नृप उपत्यकामभिजगाहे; शङ्करावासं केलासं कालिदासः—'राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः।' इति क्वचित् अट्टहासत्वेन,—'कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः।' इति दर्पणत्वेन क्वचिद्वर्णयामास; तद्वत् रघुमहीपतिनापि स्वकीय-यशोराशिना गुम्फितेन कैलासान्तरं निर्मितमिति, प्राचीनः कैलासः बिभायेति अभिप्रायः; विनीतवेषप्रवेश्य किल श्रीशङ्करालयः। ततश्चात्र मूढकीर्तित्वेन कैलासो वर्णितः।

पाठभेदविषयेऽपि—

"ताम्बूलीनां दलैस्तत्र रचितापानभूमयः।
नारिकेलासवं योधाः शात्रवं व पपुर्यशः" ॥ ४२ ॥

अत्र, 'शात्रवं च पपुर्यशः' इति पाठं स्वीकृत्य तदनुगुणं मल्लिनाथ कविः—योधाः महेन्द्रगिरौ नारिकेलमद्यं पपुः तत्र विजह्रुरित्यर्थः शात्रवं यशश्च पपुः जह्रुरित्यर्थ इति प्रणिजगाद; तदेतदसङ्गतमिव प्रतिभाति, कथम्? श्रीमद्भट्टोजीदीक्षितवरेण्यैः खलु—'मणौ वोष्ट्रस्य

लम्बेते प्रियौ वत्सतरौ मम।' इति कथम् इत्याशङ्क्य, 'इवार्थे व-शब्दो वा-शब्दो वा बोध्यः' इति कौमुदीमूलग्रन्थव्याख्यावसरे—'वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्।' इति, 'व वा यथा तथैवैवं साम्ये' इति निघण्टु निर्दिश्य, तदुपष्टम्भकतया च कालिदासीयं पद्यमिदं निरदिक्षत्—शातवं यशो व, कीर्तिमिव शुभ्रं नालिकेरमधु भटा असेवन्तेति तदर्थः ;—

"स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम्।

पपौ वसिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्तमिवातितृष्णः" ॥६९॥

इति द्वितीयसर्गपद्ये महाकविरयं क्षीरस्य यशःसाम्यं वर्णयामासेति स्मिष्यते ; यशोविषयप्रस्तावात् इयदुक्तम्।

किञ्च, इन्दुमतीस्वयंवरमहोत्सवदिदृक्षार्थमाहूतागतराजन्यप्रस्ताव-नायाम्—

"अथोरगाख्यस्य पुरस्य नाथं दौवारिकी देवसरूपमेत्य।

इतश्चकोराक्षि ! विलोकयेति........

सुनन्दा इन्दुमतीम् अवहितां विधाय उपश्लोकयति स्म पाण्ड्य-महाराजम्—

"पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।

आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः" ॥६०॥

इत्यादि पद्यैः ; अत्र व्याख्याता अविदितदेशस्थितिरिव 'उरगाख्यस्य पुरस्य पाण्ड्यदेशे कान्यकुब्जतीरवर्ति-नागपुरस्य नाथम् एत्य प्राप्य' इति बभाषे ; 'रघुवंशविमर्श'प्रबन्धप्रबन्धा यशःकायेन जीवन् 'सहृदया'-सम्पादकः स्वकीये विमर्शग्रन्थे नागपुरं नागपट्टणम् (Nagaputa, Tanjore Dt.) इति विवेचयति स्म ; एतदपि न श्लक्ष्णम् ; किं तर्हि, 'नागपुरम्' इति श्रीमत् 'हालास्य' क्षेत्रं निर-दिक्षत् महाकविः ; तस्यैतस्याधुना (Madura) 'मधुरा-पुरी'ति नामधेयं विलसति ; हालास्यक्षेत्रं पूर्वं कदम्बवनमयमभूत् ; पाण्ड्य-

भूपतिभिः तदेतत् परिष्कृतम् ; तदाऽऽदिशेषः फणीन्द्रः विषाख्यः नगररचनार्थं सीमां निर्दिदेश ; 'मधुरोदकसंसिक्ता मधुरेयं महापुरी' इति शिवलीलार्णवे श्रीनीलकण्ठदीक्षितवर्यः कवयाञ्चकार ; अत्रैव पाण्ड्योपपदा धीरोदात्ता अपरिमिता भूपाः प्रजा रञ्जयामासुः, अनन्तरं नायकोपपदाः पृथिवीपालाः 'तिरुमलै'-नायकस्य सचिवः, सामासञ्च श्रीमान् नीलकण्ठदीक्षिततज्जो रराज ३०० हायनेभ्यः पूर्वम् इति ज्ञायते ;

अत्रैव नागपुरे श्रीमीनाक्षी-सुन्दरेश्वरौ देवौ भक्ताभीप्सितवितरणार्थं सदा सज्जौ चकास्तः ; अत्रैव भगवान् चतुःषष्टिलीलाः कलयामासेत्यवगम्यते ; अतः 'उरगपुर'-पदेन श्रीमत् 'हालास्यक्षेत्र' पुरमेव (मधुरापुरमेव Madura) महाकविना वर्णितमित्यवधेय अस्मिन्नेव दिव्यक्षेत्रे निवासेन वासवस्य वृत्रहननोद्भूता ब्रह्महत्या निवृत्तेति आगमोऽवगमयति। अपि च,—

"ततो गौरीगुरुं शैलमारुरोहाऽश्वसाधनः।
वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभि." ॥ ७१ ॥

इत्यस्य अनन्तरपद्ये—

"शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसंभ्रमम्।
गुहागतानां सिंहानां परिवृत्यावलोकितम्" ॥७२॥

सैन्यैः समानबलानां गुहावासिनां पञ्चास्यानां सम्बन्धि परिवृत्य परावृत्य अवलोकितम् अवलोकनं कर्तृ, भयकारणे सैन्याऽऽरावे सत्यपि, असंभ्रमम् अन्तःक्षोभविरहितत्वम् शशंस कथयामास ; अर्थात् 'सैन्येभ्यः' इति लभ्यते ; नहि समबलः समबलाद्बिभेति इति भावः, इति व्याख्याति स्म ; इयं क्लिष्टकल्पना नाञ्जसी ; कुतः ? पूर्वतने पद्ये 'अश्वसाधनः' इति राजविशेषणपदस्य सत्त्वात्, राज्ञः अनन्तरपद्येऽपि अध्याहारात् भयकारणे सैन्यघोषे सत्यपि सैन्यतुल्यशौर्याणां सिंहानां यथावस्थितदेशात् अपसरणं विनैव असम्भ्रमं परिवृत्य अवे-

चर्णं कर्म, राजा शस्ताध्ये इति ऋजुः पन्थाः साहित्यविदां हृदयङ्गम इति प्रतिभाति ; एवमेव तत्र तत्र परिष्करणीयम् इति सञ्जीविन्यां लब्धप्रवोधेषु च्छात्रेषु, पण्डितप्रकाण्डेषु च साञ्जलिबन्धं संप्रार्थ्यतेऽस्माभिरिति शुभम् ।

---

## दशमहाविद्या-स्तोत्रम् *

[ निबन्धकः—श्रीयज्ञेश्वरवेदान्तभूषणः ]

या दिग्वस्त्रविभूषितार्द्धशशभृन्मौलिर्विलोलाधरा
दैत्यालीरुधिराक्तमौलिविलसन्माला त्रिनेत्रोज्ज्वल
या विश्वेशमधिष्ठिता नरकरश्रेणी-लसन्मेखला
सा काली कलिकाल-कालदलनी मां पातु विश्वे

व्याघ्रत्वक्परिवीत-सुन्दरकटिर्भीमास्यहास्योज्ज्वल
प्रोद्यन्मेघ-विभा-विभासितवपुर्भीमवचोऽम्बरा ।
हुङ्काराम्बर-निर्गतोन्नतजटाजूटैकसर्पावृता
सा तारा भवदुर्गभव्यविभवा मां पातु विश्वेश्वरी ॥२

प्रोद्यद्भानुसहस्रसन्निभवपुः पाशाङ्कुशेष्वासने-
षूनाधाय शयैः क्रमाद् युगयुगेर्या याति दैत्याहवम् ।
ब्रह्माद्यैः परिवारितत्रिपुरजिन्नाभ्युत्थिताब्जे स्थिता
सा राजेश्वरशक्ति-शाक्तजननी मां पातु विश्वेश्वरी ॥३

भक्तानां हितकाम्यया भयवरं हस्तैस्तु पाशाङ्कुशं
धृत्वा या भुवनस्य वैरिनिकरं हत्वाऽशुभाद्रक्षति ।

---

* श्रीरामप्रसाद-काव्यतीर्थेन संगृहीतम् ।

भूपतिभिः तदेतत् परिष्कृतम्; तदाऽऽदिशेषः फणीन्द्रः विषास्यः नगररचनार्थं सीमां निर्दिदेश; 'मधुरोदकसंसिक्ता मधुरेयं महापुरी' इति शिवलीलार्णवे श्रीनीलकण्ठदीक्षितवर्यः कवयाञ्चकार; अत्रैव पाण्ड्योपपदा धीरोदात्ता अपरिमिता भूपाः प्रजा रञ्जयामासुः, अनन्तरं नायकोपपदाः पृथिवीपालाः 'तिरुमलै'-नायकस्य सचिवः, सामासश्च श्रीमान् नीलकण्ठदीक्षितनामा रराज ३०० हायनेभ्यः पूर्वम् इति ज्ञायते;

अत्रैव नागपुरे श्रीमीनाक्षी-सुन्दरेश्वरौ देवौ भक्ताभीप्सितवितरणार्थं सदा सज्जौ चकास्तः; अत्रैव भगवान् चतुःषष्टिलीलाः कलयामासेत्यवगम्यते; अतः 'उरगपुर'-पदेन श्रीमत् 'हालास्यक्षेत्र' पुरमेव (मधुरापुरमेव Madura) महाकविना वर्णितमित्यवधेय अस्मिन्नेव दिव्यक्षेत्रे निवासेन वासवस्य वृत्रहननोद्भूता ब्रह्महत्या निवृत्तेति आगमोऽवगमयति। अपि च,—

"ततो गौरीगुरुं शैलमारुरोहाऽश्वसाधनः।
वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः" ॥ ७१ ॥

इत्यस्य अनन्तरपद्ये—

"शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसंभ्रमम्।
गुहागतानां सिंहानां परिवृत्यावलोकितम्" ॥७२॥

सैन्यैः समानबलानां गुहावासिनां पञ्चास्यानां सम्बन्धि परिवृत्य परावृत्य अवलोकितम् अवलोकनं कर्तृ, भयकारणे सैन्याऽऽरावे सत्यपि, असंभ्रमम् अन्तःक्षोभविरहितत्वम् शशंस कथयामास; अर्थात् 'सैन्येभ्यः' इति लभ्यते; नहि समबलः समबलाद्बिभेति इति भावः, इति व्याख्याति स्म; इयं क्लिष्टकल्पना नाञ्जसी; कुतः? पूर्वतने पद्ये 'अश्वसाधनः' इति राजविशेषणपदस्य सत्त्वात्, राज्ञः अनन्तरपद्येऽपि अध्याहारात् भयकारणे सैन्यघोषे सत्यपि सैन्यतुल्यशौर्याणां सिंहानां यथावस्थितदेशात् अपसरणं विनैव असम्भ्रमं परिवृत्य अवे-

वर्णं कर्म, राजा ग्रसाध्ये इति ऋजुः पन्थाः साहित्यविदां हृदयङ्गम इति प्रतिभाति ; एवमेव तत्र तत्र परिष्कारणीयम् इति सञ्जीविन्यां लब्धप्रबोधेषु च्छात्रेषु, पण्डितप्रकाण्डेषु च साञ्जलिबन्धं संप्रार्थ्यते-ऽस्माभिरिति शुभम्।

---

## दशमहाविद्या-स्तोत्रम् *

[ निबन्धकः—श्रीयज्ञेश्वरवेदान्तभूषणः ]

या दिग्वस्त्रविभूषिताऽशशभृन्मौलिर्विलोलाधरा
दैत्यालीरुधिराक्तमौलिविलसन्माला त्रिनेत्रोज्ज्वला।
या विश्वेशमधिष्ठिता नरकरश्रेणी-लसन्मेखला
सा काली कलिकाल-कालदलनी मां पातु विश्वेश्वरी ॥१

व्याघ्रत्वक्परिवीत-सुन्दरकटिर्भीमास्यहास्योज्ज्वला
प्रोद्यन्मेघ-विभा-विभासितवपुर्भीमवचोऽम्बरा।
हुङ्काराम्बर-निर्गतोन्नतजटाजूटैकसर्पावृता
सा तारा भवदुर्गभव्यविभवा मां पातु विश्वेश्वरी।

प्रोद्यद्भानुसहस्रसन्निभवपुः पाशाङ्कुशेष्वासने-
षूनाधाय शयैः क्रमाद् युगयुगैर्या याति दैत्याहवम्।
ब्रह्माद्यैः परिवारितत्रिपुरजिन्नाभ्युत्थिताब्जे स्थिता
सा राजेश्वरशक्ति-शाक्तजननी मां पातु विश्वेश्वरी ॥२

भक्तानां हितकाम्ययाभयवरं हस्तैस्तु पाशाङ्कुशं
धृत्वा या भुवनस्य वैरिनिकरं हत्वाऽशुभाद्रक्षति।

---

* श्रीरामप्रसाद-काव्यतीर्थेन संगृहीतम्।

या रक्ताब्जनिभाङ्गदीप्तमुकुटा हास्यास्यतेजस्त्रयी
सा शक्तिर्भुवनेश्वरी भवभयान्मां पातु विश्वेश्वरी ॥४

अस्तग्रस्तविभाकरारुणविभा पूर्णेन्दुबिम्बानना
विद्युद्दामलसद्विलासमणिहारोद्दीप्तपीनस्तनी।
हस्ताब्जैर्धृतपुस्तकाभयवराक्षस्रक् त्रिनेत्रोज्ज्वला
सा भक्तार्च्चितभैरवी शुभकरी मां पातु विश्वेश्वरी ॥५

या कोदण्डविमण्डितारिभयदा हस्तेन मौलिं मुदा
छित्त्वा वामकरे निधाय विगलद्रक्तं पिबन्ती मुहुः।
नृत्यन्ती नियतं निरस्तवसनं द्वन्द्वोपरि प्रेतिनी-
युक्ता सा विगतास्थिविग्रहधरा मां पातु विश्वेश्वरी ॥६

रुक्षाक्षी मलिनाम्बरा वरकरा सव्येतरे शूर्पधृग्-
हस्ते विस्तृतघोणया भयकरी क्रूरा कठोरानना।
काकाङ्काङ्कित-यान-वासनिरता नित्यं पिपासार्दिता
सा धूमा वलिधूपधूमधयिनी मां पातु विश्वेश्वरी ॥७

धृत्वा वामकरे सपत्नरसनामादाय दक्षे गदां
शत्रोः संहरणे रता प्रतिदिनं पीताम्बरा पीतभा।
पीयूषाब्धिनिवासरत्ननिलये सिंहासनाध्यासिनी
सा देवी वगलामुखी रिपुभयान्मां पातु विश्वेश्वरी ॥८

सान्द्राब्दूदरगाढ़कृष्णरजनीश्यामा त्रिनेत्राञ्चिता
बालेव विभाति भातचपला शुभ्रांशुभालोज्ज्वला।
हस्तैः पाश-कृपाण-खेटक-सृणीर्या बिभ्रती लीलया
मातङ्गी नृपपीठवासनिरता मां पातु विश्वेश्वरी ॥९

विद्युद्दीप्तसुवर्णपर्वतनिभां भास्वत्किरीटोज्ज्वला-
माशा-पुष्करिणः सुवर्णकलसैः पीयूषपूर्णैर्मुदा।
यां सिञ्चन्त्यरविन्दयुग्मवरदाभीतीर्भुजैर्बिभ्रतीं
सा शक्तिः कमलामलातिकमला मां पातु विश्वेश्वरी ॥१

ये मानवा भक्तिपरीतमानसा-
स्तुवन्ति विद्या-दशकं सुसिद्धिदम्।
विधूय विघ्नप्रचयं परं पदं
व्रजन्ति तेऽद्धा गिरिशानुशासनात् ॥११

---

# विविदिषा

( पूर्वानुवृत्ता )

[ निबन्धकः—श्रीउपेन्द्रनाथ-सेनगुप्तः काव्यतीर्थः ]

अविद्याप्रभृतिभ्य एव दुःख रोग-मरणादीनि जायन्ते इति प्रागेवोक्तम्। अविद्यादीनि द्वादश निदानानि च पुनः अष्टाङ्गयोगेन नश्यन्ति। तत्र, सम्यक्दृष्टिः, सम्यक् सङ्कल्पः, सम्यक् वाक्यं, सम्यक् कर्म्मान्तः, (उत्तमव्यवसाय इत्यर्थः) सम्यगाजीवः (आजीवः-जीविका) सम्यक् व्यायामः ( व्यायामः चेष्टा ) सम्यक् स्मृतिः, सम्यक् समाधिश्च अष्टाङ्गयोगमार्गेण एते गृह्यन्ते। तत्र चत्वारि आर्य्यसत्यानि, तद् यथा—'दुःखमस्तीति प्रथमं सत्यं, दुःखोत्पत्तिकारणमप्यस्तीति द्वितीयम्, दुःखात् मुक्तिरपि सम्भवोति तृतीयम्, अष्टाङ्गयोगाभ्यास एव दुःखमुक्तेरुपायः इति चतुर्थं' सत्यम्। सर्वमेतत् धर्म्मपदग्रन्थस्य बुद्धवग्गे 'चत्वारि अरिय सच्चानी'त्यादिषु श्लोकेषु द्रष्टव्यम्।

बौद्धैः प्रथममेव रत्नत्रयस्य शरणं ग्रहीतव्यम्। रत्नत्रयश्च—बुद्धः १ धर्म्मः २ सङ्घश्च ३। त्रीणि तावत् कुशलमूलानि, तद् यथा—बोधिचित्तोत्पाद आशयविशुद्धिरहङ्कारममकारत्यागश्च (ध. स.) अत्र बोधिचित्तोत्पादश्चित्तनैर्म्मल्यसाधनम्। सप्तविधानुत्तरपूजा, तद्-यथा—वन्दना १ अर्थात् प्रणमामीत्यादिरूपा नतिः, अर्थात् धूपदीपादिप्रदानं, पापदेशना ३ अर्थात् चापल्यैः

वा मयेदं पापं कृतमिति तद् विनश्यतु इति बुद्धसमीपे कथनम्, अनुमोदना ४ अर्थात् पुण्यानुमोदनम्, अध्येषणा ५ अर्थात् स्वाध्यायः, बोधिचित्तोत्पादः ६ पूर्वमेव व्याख्यातः, परिणमनम् ७ अर्थात् विनयः। दश कुशलमूलानि तद्यथा—प्राणातिपातोऽदत्तादानं काममिथ्याचारो मृषावादपैशुन्यं पारुष्यं सम्भिन्नप्रलापोऽभिध्याव्यापादो मिथ्यादृष्टिश्चेति। (ध. स.) तत्र प्राणातिपातो हिंसा, अदत्तादानं चौर्य्यं, काममिथ्याचारो यथेच्छाचारः मिथ्याचारश्च, सम्भिन्नप्रलापो विरुद्धभाषिता, अभिध्या मिथ्याभिनिवेशः व्यापादः प्राणिहत्या मिथ्यादृष्टिः नास्तिकता। अत्रेदमवधेयं यद् बौद्धा अपि नास्तिकतां निन्दन्ति।

एतान्येव दश शीलानीत्यभिधीयन्ते, आर्य्यशास्त्रे च एतान्येव दशविधपापानि। दशकुशलमूलानि च एतेषां विरोधेन ज्ञातव्यानि, अर्थात् अहिंसादीनि एव दश कुशलमूलानि। तत्र पञ्च आनन्तर्य्याणि, तद् यथा—मातृवधः पितृवधः सुहृद्वधः तथागतहिंसा, दुष्टचित्तरुधिरोत्पादसङ्घभेदश्च। आनन्तर्य्याणि निन्दितकर्माणि महापातकानि वा। अष्टौ लोकधर्माः, तद्यथा—लाभोऽलाभः सुखं दुःखं यशोऽयशो निन्दा प्रशंसा च। लोकधर्माः उपेक्षणीया इत्यर्थः। षट् क्लेशाः, रागः प्रतिघो मानोऽविद्या कुदृष्टिर्विचिकित्सा च। तत्र प्रतिघः विद्वेषः, कर्म्मफलं नास्ति मरणमेव मुक्तिरित्यादिप्रकारकं कुज्ञानं कुदृष्टिः, विचिकित्सा बुद्धोपदेशे सन्देहः। चतुर्विंशतिरुपक्लेशाः, तद्यथा—क्रोधः, उपनाहः, म्रक्षः, प्रदाशः, ईर्ष्या, मात्सर्य्यं, मदः, शाठ्यं, माया, विहिंसा, ह्रीः, अनपत्रपा, स्त्यानम्, अश्राद्धं, कौसीद्यं, प्रमादः, मुषितस्मृतिः, विक्षेपः, सम्प्रजना, कौकृत्यं, मिद्धं, वितर्कः, विचारश्च। तत्र माया वञ्चना, स्त्यानमनुत्साहः, साम्प्रजन्यं कुकर्म्मासक्तिः, मिद्धम् औद्धत्यं, म्रक्षादीनामर्थस्तु, दुर्बोधः। पञ्च मात्सर्य्याणि, तद्यथा—धर्म्ममात्सर्य्यं लाभमात्सर्य्यम्, आवासमात्सर्य्यं, कुशलमात्सर्य्यं, वर्णमात्सर्य्यञ्चेति। तत्र चतस्रः श्रद्धाः, तद्यथा,—आर्य्यसत्यं, त्रिरत्नं,

कर्म्म, कर्म्मफलञ्च। दानं त्रिविधं, तद्यथा—धर्म्मदानं मामिषदानं मैत्रीदानञ्च। तत्र मामिषदानं द्रव्यदानम्। त्रिविधं कर्म्म तद्यथा—दृष्टधर्म्मवेदनीयम् उत्पद्यवेदनीयम्, अपरवेदनीयञ्चेति। अस्मिन् जन्मनि अनुभूतफलं कर्म्म दृष्टधर्म्मवेदनीयम्, अपरजन्मनि कृतं यत् कर्म्म शरीराङ्कुरमुत्पादयति तदुत्पद्यवेदनीयम्, अस्मिन् जन्मनि कृतं यत् कर्म्म आगामिनि जन्मनि फलं जनयति तदपरवेदनीयम्। एतान्येव पातञ्जले दृष्टादृष्टवेदनीयादिक्रमेण कथितानि। त्रीण्यकुशलमूलानि, तद्यथा—लोभो मोहो द्वेषश्चेति, एतद्विपर्य्ययेण त्रीणि कुशलमूलानि च। तिस्रः शिक्षाः, तद्यथा—अधिचित्तशिक्षाऽधिशीलशिक्षाऽधिप्रज्ञाशिक्षा चेति। चत्वारो ब्रह्मविहाराः, तद्यथा—मैत्री करुणा मुदितोपेक्षा चेति। एता एव गीतायां ब्राह्मस्थितिसंज्ञया संज्ञिताः। षट् पारमिताः, तद्यथा—दानपारमिता, शीलपारमिता, क्षान्तिपारमिता, वीर्य्यपारमिता, ध्यानपारमिता, प्रज्ञापारमिता च। पारमिता परमभावः परमोत्कर्षप्राप्तिर्वा। चत्वारि संग्रहवस्तूनि, तद्यथा—दानं प्रियवचनमर्थचर्य्या समानार्थता च। समानार्थता समदर्शितेत्यर्थः। चतस्रो धारण्यः, तद्यथा—आत्मधारणी, ग्रन्थधारणी, धर्म्मधारणी, मन्त्रधारणी च। अत्र धारणी रतिरित्यर्थः। षड़नुस्मृतयः, तद्यथा—बुद्धानुस्मृतिः, धर्म्मानुस्मृतिः, संघानुस्मृतिस्त्यागानुस्मृतिः, शीलानुस्मृतिर्देवानुस्मृतिश्च। अनुस्मृतिरनुस्मृतिरित्यर्थः। चत्वारि धर्म्मपदानि, तद्यथा—अनित्याः सर्वसंस्काराः, दुःखाः सर्वसंस्काराः, निरात्मानः सर्वसंस्कारा, शान्तं निर्वाणञ्च। निरात्मानः खपुष्पादिवत् तुच्छा इत्यर्थः।

गतयः षट्, तद्यथा—नरकस्तीर्य्यक् प्रेतोऽसुरो मनुष्यो देवश्चेति, षड्धातवः, तद्यथा—पृथिव्यप्तेजो वायुराकाशो विज्ञानञ्च। अष्टौ विमोक्षाः, तद्यथा—रूपी रूपाणि पश्यति शून्यम्। अध्यात्मरूपसंज्ञी बहिर्धारूपाणि पश्यति शून्यम्। आकाशानन्त्यायतनं पश्यति शून्यम्।

विज्ञानानन्त्यायतनं पश्यति शून्यम्। आकिञ्चन्यायतनं पश्यति शून्यम्। नैवसंज्ञानासंज्ञायतनं पश्यति शून्यम्। संज्ञावेदयित-निरोधं पश्यति शून्यम्। निर्वाणञ्च। निर्वाणं पातञ्जलस्यात्मकैवल्य-मेव। द्वादश धूतगुणाः, तद्यथा—पैण्डपातिकस्त्रैचीवरिकः खलु-पश्चाद्भक्तिकः यथासंस्तारिको वृक्षमूलिक एकासनिक आत्याकासिक आरण्यक श्माशानिकः पांशुकुलिको नामतिकश्च। धूतशब्देन भिक्षु-रवगम्यते। य एकेनैव पिण्डेन दिवसं पातयति अतिवाहयति स पैण्ड-पातिकः एवमन्येऽपि बोद्धव्याः। चत्वारि ध्यानानि, तद्यथा—सवि-तर्कं सविचारं विवेकजं प्रीतिसुखञ्चेति प्रथमं ध्यानम्, अध्यात्मप्रसा-दात् प्रीतिसुखमिति द्वितीयम्। उपेक्षा स्मृतिसंप्रजन्यं सुखमिति तृतीयम्। स्मृतिपरिशुद्धिरदुःखाऽसुखा वेदनेति चतुर्थं ध्यानम्। दश भूमयः, तद्यथा—प्रमुदिता, विमला, प्रभङ्करी, अर्चिष्मती, सुदुर्जया, अभिमुखा, दूरंगमा, अचला, साधुमती मधुमती वा धर्म्म-मेघश्च। भूमिस्तु ध्यानारूढानाम् उन्नतावस्था। धर्मं मिहति क्षरतीति धर्म्ममेघः पातञ्जलेऽपि द्रष्टव्यः, तथा च "प्रसंख्यानेऽप्यकुसी-दस्य सर्वथा विवेकख्यातेर्धर्म्ममेघः समाधिः" इति पातञ्जले ( पा० कै० २८ )। त्रीणि वैशारद्यानि, तद्यथा—अभिसम्बोधिवैशारद्यम्, 'आस्रवक्षयज्ञानवैशारद्यं', नैर्वाणिकमार्गावतरणवैशारद्यञ्च। आस्रवः क्लेश इत्यर्थः। बोधिसत्त्वानां दश वशिता, तद्यथा—आयुर्वशिता, चित्तवशिता, परिस्कारवशिता, धर्म्मवशिता, ऋद्धिवशिता, जन्मवशिता, अधिमुक्तिवशिता, प्रणिधानवशिता, कर्म्मवशिता, ज्ञानवशिता च। द्वे सत्ये, तद्यथा—संवृतिसत्यं, परमार्थसत्यञ्च। संवृतिसत्यं व्याव-हारिकसत्यमित्यर्थः। शीलं त्रिविधं, तद्यथा—सम्भारशीलं, कुशल-संग्रहशीलं, सत्त्वार्थक्रियाशीलञ्च। सत्त्वार्थक्रियाशीलं परोपकार-रूपम्। क्षान्तिस्त्रिविधा, तद्यथा—धर्म्मनिध्यानक्षान्तिर्दुःखाधि-वासनक्षान्तिः परोपकारधर्म्मक्षान्तिश्च। प्रज्ञा त्रिविधा, तद्यथा—

श्रुतमयी, चिन्तामयी, भावनामयी चेति। ज्ञानं त्रिविधं. तद्यथा— अविकल्पकम्, विकल्पसमभावबोधकम्, सत्यार्थोपायोपरक्तञ्चेति। नैरात्म्यं द्विविधम्—धर्म्मनैरात्म्यं, पुद्गलनैरात्म्यञ्च। पुद्गलशब्देन देह उच्यते। पञ्च स्कन्धाः—रूपस्कन्धः, वेदनास्कन्धः, संज्ञास्कन्धः, संस्कारस्कन्धः, विज्ञानस्कन्धश्च। द्वादशायतनानि—चक्षुरादीनि पञ्चेन्द्रियाणि तेषां विषयाः मनः धर्म्मश्च।

वेदना त्रिविधा—सुखवेदना, दुःखवेदना, उभयातीतवेदना चेति। दश बलाः तद् यथा—

दानं शीलञ्च शान्तिश्च ध्यानं वीर्य्यं बलस्तथा।
उपायः प्रणिधिः प्रज्ञा ज्ञानं सर्वगतं हि तत्॥

एतेषु आधिपत्यादेव बुद्धो दशबल इत्युच्यते। तत्र प्रणिधिः गूढ़-दर्शनम्। उपायः द्विविधः, तद्यथा—प्रतिकूलः अनुकूलश्च, तत्र प्रतिकूलः दशधा, तद्यथा—स्वकायदृष्टिः (आत्मभ्रमः स्वकीयद्वैत-भावो वा) विचिकित्सा, शीलव्रतपरामर्शः, कामरागः, प्रतिघः, रूप-रागः, अरूपरागः, मनः, औद्धत्यम्, अविद्या च। अनुकूलस्तु अष्टधा— अष्टाङ्गयोगरूपः। दश शीलानि, तद्यथा—अहिंसा, अस्तेयं, ब्रह्म-चर्य्यं, सत्यभाषणं, मद्यादिपानवर्जनम्, आपराह्णिकभोजनवर्जनं, नृत्यगीतादीनामनुपभोगः, गन्धादीनामनुपभोगः, उच्चासनादीना-मनुपभोगः सुवर्णादीनाम् अपरिग्रहः। अत्र अहिंसादीनि पञ्च शीलानि पातञ्जले यमनामधेयानि। सम्बोध्यङ्गानि सप्त, तद्यथा— स्मृतिः, धर्म्मविचयः, वीर्य्यं, प्रीतिः, प्रश्रब्धिः, समाधिः, उपेक्षा च। आश्रवः चतुर्विधः, तद्यथा—कामाश्रवः, भवाश्रवः, दृष्टाश्रवः, अविद्या-श्रवश्च। आश्रवः क्लेश इत्यर्थः। बौद्धशास्त्रे रागद्वेषमोहाः किञ्चन-शब्देन उच्यन्ते, अत एव अकिञ्चनशब्देन रागादिनिर्मुक्ताः अवगन्तव्याः।

अत्र समासेन सौगतसमयस्य यत्किञ्चिदालोचितं, तेन तु कथमपि बौद्धानां नास्तिकत्वं नाभ्युपगम्यते। न किल ते वेदान् न परिगृह्णन्ति

प्रामाण्यतया इति वक्तुं शक्यते, योगदर्शनस्यापि वेदानुमोदितत्वात्, अपि च तैरनुष्ठितवस्तूनां वेदादिषु चोपलम्भात्। स्मृतौ ये शिष्टाचारा दृश्यन्ते सौगतैस्तेषां सर्वथा अपरिगृहीतत्वेऽपि बौद्धानामाचारा अपि वेदस्मृतिसम्मिता एव। यदि तेषां शून्यं खपुष्पादिवत् किञ्चिन्न स्यात् परन्तु भावरूपमेव किञ्चिद् भवति तदा तु आत्मेति शब्दमात्रस्यापरिग्रहात् न ते कुत्रापि अपराद्धवन्तः, तात्पर्य्यस्य एकस्मिन् एकविधे च वस्तुनि पर्य्यवसानात्। बौद्धमतस्यानुचितसमालोचनात् सौगतमते प्रतिपक्षसमुद्भावितदोषाणामपि याथातथ्ये सन्देहात् न किल तथाकथित-महतामुक्तिमात्रेणैव बौद्धमतपरिगर्हणं शिष्टसम्मतमिति ब्रूमः। तथा च ब्रह्मसूत्रान्तर्गतस्य "आकाशे चाविशेषादि"त्यस्य (ब्रह्म० २।२।२४) सूत्रस्य व्याख्यानप्रसङ्गेन शङ्करभगवत्पादैः लिखितम्—"अपि चावरणाभावमात्रमाकाशं मन्यमानस्य सौगतस्य स्वाभ्युपगमविरोधः प्रसज्येत।" सौगते हि समये "पृथिवी भगवः किं संनिश्रया" इत्यस्मिन् वचनप्रवाहे पृथिव्यादीनामन्ते वायुः किं संनिश्रय" इत्यस्य प्रश्नस्य प्रतिवचनं भवति "वायुराकाशसंनिश्रयः" इति। "तदाकाशस्यावस्तुत्वे न समञ्जसं स्यात्।" परं नागार्जुनकृत-धर्म्मसंग्रहे "पृथिव्यप्तेजो वायुराकाशो विज्ञानञ्च षड् धातवः" इति लिखितं दृश्यते। तत्राकाशः सांख्यवेदान्तवादिनामाकाश इव वस्तु न त्ववस्तु, अत एव आवरणमात्रमाकाशमिति सौगतसम्प्रदायविशेषाभिमतम् आचार्य्यपादोद्धृतवाक्यं निरवलम्बनं स्यात्, न तेन सर्वसौगतानां मतविगर्हणमुचितं भवति। अपि च "अनुस्मृतेश्च" इति सूत्रस्य (ब्र० २।२।२५) व्याख्यानप्रसङ्गेन श्रीमच्छङ्कराचार्य्यपादैरुक्तम्—"अपि च वैनाशिकः सर्वस्य वस्तुनः क्षणिकतामभ्युपयन्नुपलब्धुरपि क्षणिकतामभ्युपेयात्। न च सा सम्भवति। अनुस्मृतेः।" तत्र वक्तव्यं, येन अघटनाघटनपटीयसी काचित् माया स्वीकृता, सर्वञ्च दुर्मीमांस्यं वस्तुजातं येन "अविद्यावशादेवं जायते" इति व्याख्यातञ्च स कथ-

मित्यमभिदधाति ? बौद्धाः अपि अविद्यां स्वीकुर्वन्ति, तन्मतेऽपि अविद्ययैव एवमघटनमपि घटते इति प्रतिवचनं युज्यते, तदा वेदान्तिकस्य अप्रतिवचन एव सम्पद्येत, एवमन्यत्रापि। अपरञ्च ब्रह्मसूत्रप्रणयनसमये भगवतो बुद्धस्य आविर्भावो न बभूव, तत् कथं बौद्धानां सम्प्रदायविशेषसमयमधिकृत्य भगवता वादरायणेन सूत्राणि प्रणीतानीति नाभ्युपगम्यते, अथ प्रागेव तादृङ्मतं वेदादिष्वासीदिति वेदादीनामेव गर्हणमुपयुज्यते, उभयथा सौगतमताक्रमणं—ब्रह्मसूत्राणां स्वकल्पितभाष्यनिर्म्माणञ्च अशेषप्रतिभानिदर्शनस्थानमपि विजिगीषुत्वमेव। अपि च सांख्यशास्त्रेण वेदान्तवादो दूषितः, वेदान्तेन सांख्यशास्त्रं दूषितं, न किल तादृशं शास्त्रं दृश्यते येन परमतं न दूषितं येन केनापि प्रकारेण आत्ममतमपि न रचितं, तत् कथं बौद्धा एव निराकुर्युरन् इति वक्तुं न शक्यते।

शङ्कर-शवरादयोऽपि महान्त एव, ज्ञानेन वीर्य्येण तपसा श्रीमद्भगवन्नारायणावतारः बुद्धोऽपि महान् एव आसीत्, तन्मतमपि पुरस्तात् किञ्चित् वर्णितं विशेषन्तु विशेषज्ञाः दोषज्ञा एव जानन्ति, तदत्र पण्डिता एव अपक्षपातेन विचारेण निर्द्धारयन्तु सत्यम्। अर्वाचीनानां बौद्धानां केचन वेदप्रामाण्यं नाखण्डयन् इति न, किन्तु प्राचीनानां बौद्धानां कोऽपि तच्चकार इति न जानीमः। * यदि केचन प्राचीनबौद्धानामुक्तीनामपि दोषान् दर्शयन्ति तदा तेऽस्माकं भ्रमापनोदनेन महान्तमुपकारं करिष्यन्तीति अलं वाक्प्रपञ्चेन।

अत्र निबन्धे नागार्जुनकृतधर्मसंग्रहात् बहूनि वाक्यानि समुद्धृतानि, ललितविस्तर-प्रज्ञापारमिता-धर्मपदादिग्रन्थाश्च सम्यगवलोकिताः परमस्य निबन्धस्य प्रणयने तत्रभवतो रामदासाभिधस्य सेनोपाधिकस्य

---

* अत्र निबन्धकृता स्वाभिमतानां प्राचीनानामर्व्वाचीनानाञ्च बौद्धानां नामनिर्देशः समयनिर्देशो वा सम्यगपेक्षितोऽपि नोपक्षिप्तः।

सं. सा. प. सः

प्रामाण्यतया इति वक्तुं शक्यते, योगदर्शनस्यापि वेदानुमोदितत्वात्, अपि च तैरनुष्ठितवस्तूनां वेदादिषु चोपलम्भात्। स्मृतौ ये शिष्टाचारा दृश्यन्ते सौगतैस्तेषां सर्वथा अपरिगृहीतत्वेऽपि बौद्धानामाचारा अपि वेदस्मृतिसम्मिता एव। यदि तेषां शून्यं खपुष्पादिवत् किञ्चिन्न स्यात् परन्तु भावरूपमेव किञ्चिद् भवति तदा तु आत्मेति शब्दमात्रस्यापरिग्रहात् न ते कुत्रापि अपराद्धवन्तः, तात्पर्य्यस्य एकस्मिन् एकविधे च वस्तुनि पर्य्यवसानात्। बौद्धमतस्यानुचितसमालोचनात् सौगतमते प्रतिपक्षसमुद्भावितदोषाणामपि याथातथ्ये सन्देहात् न किल तथाकथित-महतामुक्तिमात्रेणैव बौद्धमतपरिगर्हणं शिष्टसम्मतमिति ब्रूमः। तथा च ब्रह्मसूत्रान्तर्गतस्य "आकाशे चाविशेषादि"त्यस्य (ब्रह्म० २।२।२४) सूत्रस्य व्याख्यानप्रसङ्गेन शङ्करभगवत्पादैः लिखितम्—"अपि चावरणाभावमात्रमाकाशं मन्यमानस्य सौगतस्य स्वाभ्युपगमविरोधः प्रसज्येत।" सौगते हि समये "पृथिवी भगवः किं संनिश्रया" इत्यस्मिन् वचनप्रवाहे पृथिव्यादीनामन्ते वायुः किं संनिश्रय" इत्यस्य प्रश्नस्य प्रतिवचनं भवति "वायुराकाशसंनिश्रयः" इति। "तदाकाशस्यावस्तुत्वे न समञ्जसं स्यात्।" परं नागार्जुनकृत-धर्म्मसंग्रहे "पृथिव्यप्तेजो वायुराकाशो विज्ञानञ्च षड् धातवः" इति लिखितं दृश्यते। तत्राकाशः सांख्यवेदान्तवादिनामाकाश इव वस्तु न त्ववस्तु, अत एव आवरणमात्रमाकाशमिति सौगतसम्प्रदायविशेषाभिमतम् आचार्य्यपादोद्धृतवाक्यं निरवलम्बनं स्यात्, न तेन सर्वसौगतानां मतविगर्हणमुचितं भवति। अपि च "अनुस्मृतेश्च" इति सूत्रस्य (ब्र० २।२।२५) व्याख्यानप्रसङ्गेन श्रीमच्छङ्कराचार्य्यपादैरुक्तम्—"अपि च वैनाशिकः सर्वस्य वस्तुनः क्षणिकतामभ्युपयन्नुपलब्धुरपि क्षणिकतामभ्युपेयात्। न च सा सम्भवति। अनुस्मृतेः।" तत्र वक्तव्यं, येन अघटनाघटनपटीयसी काचित् माया स्वीकृता, सर्वञ्च दुर्म्मीमांस्यं वस्तुजातं येन "अविद्यावशादेवं जायते" इति व्याख्यातञ्च स कथ-

मित्थमभिदधाति ? बौद्धाः अपि अविद्यां स्वीकुर्वन्ति, तन्मतेऽपि अविद्ययैव एवमघटनमपि घटते इति प्रतिवचनं युज्यते, तदा वेदान्तिकस्य अप्रतिवचन एव सम्पद्येत, एवमन्यत्रापि। अपरञ्च ब्रह्मसूत्र-प्रणयनसमये भगवतो बुद्धस्य आविर्भावो न बभूव, तत् कथं बौद्धानां सम्प्रदायविशेषसमयमधिकृत्य भगवता बादरायणेन सूत्राणि प्रणीतानीति नाभ्युपगम्यते, अथ प्रागेव तादृङ्मतं वेदादिष्वासीदिति वेदादीनामेव गर्हणमुपयुज्यते, उभयथा सौगतमताक्रमणं—ब्रह्मसूत्राणां स्वकल्पितभाष्यनिर्म्माणञ्च अशेषप्रतिभानिदर्शनस्थानमपि विजिगीषुत्वमेव। अपि च सांख्यशास्त्रेण वेदान्तवादो दूषितः, वेदान्तेन सांख्यशास्त्रं दूषितं, न किल तादृशं शास्त्रं दृश्यते येन परमतं न दूषितं येन केनापि प्रकारेण आत्ममतमपि न रचितं, तत् कथं बौद्धा एव निरुध्येरन् इति वक्तुं न शक्यते।

शङ्कर-शवरादयोऽपि महान्त एव, ज्ञानेन वीर्य्येण तपसा श्रीमद्-भगवन्नारायणावतारः बुद्धोऽपि महान् एव आसीत्, तन्मतमपि पुरस्तात् किञ्चित् वर्णितं विशेषन्तु विशेषज्ञाः दोषज्ञा एव जानन्ति, तदत्र पण्डिता एव अपक्षपातेन विचारेण निर्द्धारयन्तु सत्यम्। अर्वाचीनानां बौद्धानां केचन वेदप्रामाण्यं नाखण्डयन् इति न, किन्तु प्राचीनानां बौद्धानां कोऽपि तच्चकार इति न जानीमः। * यदि केचन प्राचीनबौद्धानामुक्तीनामपि दोषान् दर्शयन्ति तदा तेऽस्माकं भ्रमापनोदनेन महान्तमुपकारं करिष्यन्तीति अलं वाक्प्रपञ्चेन।

अत्र निबन्धे नागार्जुनकृतधर्मसंग्रहात् बहूनि वाक्यानि समुद्धृतानि, ललितविस्तर-प्रज्ञापारमिता-धर्मपदादिग्रन्थाश्च सम्यगवलोकिताः परमस्य निबन्धस्य प्रणयने तत्रभवतो रामदासाभिधस्य सेनोपाधिकस्य

---

* अत्र निबन्धकृता स्वाभिमतानां प्राचीनानामर्व्वाचीनानाञ्च बौद्धानां नामनिर्देशः समयनिर्देशो वा सम्यगपेक्षितोऽपि नोपक्षिप्तः।

सं. सा. प. सः

प्रामाण्यतया इति वक्तुं शक्यते, योगदर्शनस्यापि वेदानुमोदितत्वात्, अपि च तैरनुष्ठितवस्तूनां वेदादिषु चोपलम्भात्। स्मृतौ ये शिष्टाचारा दृश्यन्ते सौगतैस्तेषां सर्वथा अपरिगृहीतत्वेऽपि बौद्धानामाचारा अपि वेदस्मृतिसम्मिता एव। यदि तेषां शून्यं खपुष्पादिवत् किञ्चिन्न स्यात् परन्तु भावरूपमेव किञ्चिद् भवति तदा तु आत्मेति शब्दमात्रस्यापरिग्रहात् न ते कुत्रापि अपराद्धवन्तः, तात्पर्य्यस्य एकस्मिन् एकविधे च वस्तुनि पर्य्यवसानात्। बौद्धमतस्यानुचितसमालोचनात् सौगतमते प्रतिपक्षसमुद्भावितदोषाणामपि याथातथ्ये सन्देहात् न किल तथाकथित-महतामुक्तिमात्रेणैव बौद्धमतपरिगर्हणं शिष्टसम्मतमिति ब्रूमः। तथा च ब्रह्मसूत्रान्तर्गतस्य "आकाशे चाविशेषादि"त्यस्य ( ब्रह्म० २।२।२४ ) सूत्रस्य व्याख्यानप्रसङ्गेन शङ्करभगवत्पादैः लिखितम्—"अपि चावरणाभावमात्रमाकाशं मन्यमानस्य सौगतस्य स्वाभ्युपगमविरोधः प्रसज्येत।" सौगते हि समये "पृथिवी भगवः किं संनिश्रया" इत्यस्मिन् वचनप्रवाहे पृथिव्यादीनामन्ते वायुः किं संनिश्रय" इत्यस्य प्रश्नस्य प्रतिवचनं भवति "वायुराकाशसंनिश्रयः" इति। "तदाकाशस्यावस्तुत्वे न समञ्जसं स्यात्।" परं नागार्जुनकृत-धर्म्मसंग्रहे "पृथिव्यप्तेजो वायुराकाशो विज्ञानञ्च षड् धातवः" इति लिखितं दृश्यते। तत्राकाशः सांख्यवेदान्तवादिनामाकाश इव वस्तु न त्ववस्तु, अत एव आवरणमात्रमाकाशमिति सौगतसम्प्रदायविशेषाभिमतम् आचार्य्यपादोद्धृतवाक्यं निरवलम्बनं स्यात्, न तेन सर्वसौगतानां मतविगर्हणमुचितं भवति। अपि च "अनुस्मृतेश्च" इति सूत्रस्य ( ब्र० २।२।२५ ) व्याख्यानप्रसङ्गेन श्रीमच्छङ्कराचार्य्यपादैरुक्तम्—"अपि च वैनाशिकः सर्वस्य वस्तुनः क्षणिकतामभ्युपयन्नुपलब्धुरपि क्षणिकतामभ्युपेयात्। न च सा सम्भवति। अनुस्मृतेः।" तत्र वक्तव्यं, येन अघटनाघटनपटीयसी काचित् माया स्वीकृता, सर्वञ्च दुर्मीमांस्यं वस्तुजातं येन "अविद्यावशादेवं जायते" इति व्याख्यातञ्च स कथ-

मित्थमभिदधाति ? बौद्धाः अपि अविद्यां स्वीकुर्वन्ति, तन्मतेऽपि अविद्ययैव एवमघटनमपि घटते इति प्रतिवचनं युज्यते, तदा वेदान्तिकस्य अप्रतिवचन एव सम्पद्येत, एवमन्यत्रापि। अपरञ्च ब्रह्मसूत्र-प्रणयनसमये भगवतो बुद्धस्य आविर्भावो न बभूव, तत् कथं बौद्धानां सम्प्रदायविशेषसमयमधिकृत्य भगवता वादरायणेन सूत्राणि प्रणीतानीति नाभ्युपगम्यते, अथ प्रागेव तादृङ्मतं वेदादिष्वासीदिति वेदादीनामेव गर्हणमुपयुज्यते, उभयथा सौगतमताक्रमणं—ब्रह्मसूत्राणां स्वकल्पितभाष्यनिर्म्माणञ्च अशेषप्रतिभानिदर्शनस्थानमपि विजिगीषुत्वमेव। अपि च सांख्यशास्त्रेण वेदान्तवादो दूषितः, वेदान्तेन सांख्यशास्त्रं दूषितं, न किल तादृशं शास्त्रं दृश्यते येन परमतं न दूषितं येन केनापि प्रकारेण आत्ममतमपि न रचितं, तत् कथं बौद्धा एव निगृह्येरन् इति वक्तुं न शक्यते।

शङ्कर-शबरादयोऽपि महान्त एव, ज्ञानेन वीर्य्येण तपसा श्रीमद्भगवन्नारायणावतारः बुद्धोऽपि महान् एव आसीत्, तन्मतमपि पुरस्तात् किञ्चित् वर्णितं विशेषन्तु विशेषज्ञाः दोषज्ञा एव जानन्ति, तदत्र पण्डिता एव अपक्षपातेन विचारेण निर्द्धारयन्तु सत्यम्। अर्वाचीनानां बौद्धानां केचन वेदप्रामाण्यं नाखण्डयन् इति न, किन्तु प्राचीनानां बौद्धानां कोऽपि तच्चकार इति न जानीमः। * यदि केचन प्राचीनबौद्धानामुक्तीनामपि दोषान् दर्शयन्ति तदा तेऽस्माकं भ्रमापनोदनेन महान्तमुपकारं करिष्यन्तीति अलं वाक्प्रपञ्चेन।

अत्र निबन्धे नागार्जुनकृतधर्मसंग्रहात् बहूनि वाक्यानि समुद्धृतानि, ललितविस्तर-प्रज्ञापारमिता-धर्मपदादिग्रन्थाश्च सम्यगवलोकिताः परमस्य निबन्धस्य प्रणयने तत्रभवतो रामदासाभिधस्य सेनोपाधिकस्य

---

* अत्र निबन्धकृता स्वाभिमतानां प्राचीनानामर्व्वाचीनानाञ्च बौद्धानां नामनिर्देशः समयनिर्देशो वा सम्यगपेक्षितोऽपि नोपक्षिप्तः।

सं. सा. प. सः

पथि ...... सरणिरनुसृता। नात्र वयं सिद्धान्तविशेषावगाहिनः परं शास्त्रालोचनेन बुद्धमतेऽस्माभिः कश्चिद्दोषो न समाम्नायि, परं यन्मते ब्राह्मणा एव मतिमतामादर्शस्थानीयाः लोकानुग्रहाय त्यक्तसर्वभोगेन परम-यतिना येनाहिंसा मैत्री च लोके प्रतिष्ठापिते, ब्रह्मविद्यालाभ-मार्गश्च अष्टाङ्गमार्गोपदेशेन सुगमः कृतः, ज्ञानवैराग्यचित्तनैर्मल्यादिना आध्यात्मिकोन्नतौ च परमो यत्नः कृतः, यः खलु श्रीमद्भगवन्नारायणा-वतार इति मत्स्यादिभिरेकपंक्तौ गण्यते कथं श्रीमदाचार्य्यपादा-दिभिः महद्भिः अर्वाचीनानां सम्प्रदायविशेषाणां मतमाकर्ण्य तन्मते तस्मिंश्च अनास्था प्रदर्शिता ? कथं वा बौद्धाः देशादस्मात् निपीड़न-निःसारिताः, न वा कथमद्यापि बौद्धानां बुद्धस्य बौद्धशास्त्रस्य च यथो-चितसमादरः बौद्धशास्त्रस्य यथारीति चर्चा च समं वेदान्तादिभिः न भविष्यति इत्येव मे विविदिषा विदुषां पुरतः समुपस्थाप्यते, अधुना विद्वांस एव प्रमाणमिति।

---

## सर्वप्रत्ययमाला

( पूर्वतोऽनुवृत्ता )

[ श्रीशङ्कराचार्य्यविरचिता ]

धनादृते न सम्पत्तिर्द्वितीया स्यादृते धनम्।
एनबित्यन्तदिक्शब्दयोगेऽपि स्याद्विकल्पितः॥ १

पृथङ्-नाना-विनायोगे तृतीया पञ्चमी तथा।
ग्रामात् पृथग्विहारोऽयं ग्रामेण पृथगित्यपि॥ १:

धनान्नाना च लक्ष्मीः स्यात् धनेनेत्यथवा भवेत्।
विना वातं विना वर्षं विद्युत्प्रपतनं विना॥ १२७

विना वातादिदोषेण केन तौ पातितौ द्रुमौ ।
अस्त्रीलिङ्गे गुणे हेतौ तृतीया पञ्चमी यथा ॥ १२८
जाड्याद् गृहीतो जाड्येन गृहीत इति वा भवेत् ।
हेतौ तृतीया-पञ्चम्यौ स्यातां तदुभयं यथा ॥ १२९
अग्निमान् धूमवत्त्वेन धूमवत्त्वादसौ गिरिः ।
भयात्पलायते शत्रुर्भयेन तु पलायते ॥ १३०
पञ्चम्यर्थो मया प्रोक्तः षष्ठ्यर्थोऽथ प्रकथ्यते ।
षष्ठी तु कारकं मुक्त्वा सम्बन्धार्थे व्यवस्थिता ॥ १३१
सम्बन्धभेदा बहवो भवन्त्येकोत्तरं शतम् ।
तत्र स्वस्वामिसम्बन्धो राज्ञोऽमात्य इतीरितः ॥ १३२
आश्रयाश्रयिभावेन नृपस्य धनमित्यसौ ।
स्वामिभृत्याख्यसम्बन्धो राज्ञोऽमात्य इतीरितः ॥ १३३
आश्रयाश्रयिभावाख्यो नद्यास्तीरमितीष्यते ।
वाच्यवाचकभावाख्यः शब्दस्यार्थ इतीरितः ॥ १३४
पितुः पुत्रेण सम्बन्धः स्याज्जन्यजनकाह्वयः ।
कार्य्यकारणसम्बन्धो मृदो घट इतीदृशः ॥ १३५
सुहृदोः सङ्गतिः प्रीत्यै वैरिणो मरणाय सा ।
मित्रयोरमृतं वाक्यं पुत्रयोरधिकं ततः ॥ १३६
दन्तिनां संहतिर्भाति महतां वामुचामिव ।
वृक्षाणां फलमत्राऽस्ति पुष्पाणां गन्ध उत्तमः ॥ १३७
प्रियाणां मधुरं वाक्यं कवीनां रसवद्वचः ।
गुरूणां वचनं पथ्यं कर्तृणामुत्तमं वचः ॥ १३८
तुलार्थशब्दैर्योगे च वर्जयित्वा तुलोपमे ।
षष्ठी भवेत्तृतीया च तदुदाहरणं यथा ॥ १३९
कमलेन समं वक्त्रं वक्त्रस्य सदृशः शशी ।
सदृशः शशिना राजा तस्य भास्वान् प्रभावतः ॥ १४०

नेत्राभ्यामुत्पले तुल्ये तुल्ये उत्पलयोश्च ते ।
नगैः समाना नागेन्द्रा नागानां सदृशा नगाः ॥ १४१
एवं ज्ञेयाः प्रयोगेषु विशेषा ये भवन्ति हि ।
षष्ठी स्यात् कृत्यदेर्योगे कर्त्रर्थे वाऽथ कर्मणि ॥ १४२
प्रभूणामासिका पीठे सर्पाणां शायिका बिले ।
बहूनामत्र पुष्पाणामुत्पत्तिरिति कर्तरि । १४३
अपां स्रष्टा पुरां भेत्ता कर्ता पुण्यस्य सर्वदा ।
शत्रूणां नाशकोऽर्थस्य प्रदातेत्यत्र कर्मणि ॥ १४४
तुमुन् क्त्वाल्यपृक्तां निष्ठा-शतृशानच् क्वसूकञाम् ।
उप्रत्ययेष्णुचो योगे षष्ठ्यत्र प्रतिषिध्यते ॥ १४५
गङ्गां गन्तुं गृहं गत्वा पितरावभिवाद्य च ।
गन्ता देशान् गतोऽध्वानं गतवानाश्रमं मुनेः ॥ १४६
गच्छन्नन्नानि भुञ्जानो गयां चापि प्रपेदिवान् ।
गामुकस्तीर्थजातानि जिहासुः कल्मषं निजम् ॥ १४७
निराकरिष्णुर्बौद्धादीन् मनो जिष्णुर्जितेन्द्रियः ।
भोक्तुमोदनमादातुं शरानिति तुमुन् भवेत् ॥ १४८
गत्वा ग्राममिति क्त्वा स्यात् प्राप्य ग्राममिति ल्यपि ।
पायं पायं पयो भुङ्क्ते तृषाऽऽर्तश्चेत्यसौ णमुल् ॥ १४९
कटान् कर्ता प्रवदिता जनानित्यत्र तृन् भवेत् ।
क्तवतुः प्राप्तवान् ग्रामं क्तो ग्रामं गत इत्यसौ ॥ १५०
शतृप्रत्यय उक्तः स्याद्गच्छन् ग्राममितीदृशः ।
सेवमानो नृपं चेति शानचो रूपमिष्यते ॥ १५१
क्वसुः स्याच्छुश्रुवाञ्छास्त्रं गामुको ग्राममित्युकञ् ।
ग्रामं जिगमिषुश्चेति भवेदुप्रत्ययस्तथा ॥ १५२
अलङ्करिष्णुरात्मानमिष्णुजन्तं पदं भवेत् ।
इत्येतेषां प्रयोगेषु न षष्ठी कर्तृकर्मणोः ॥ १५३

दुष्करं कृतवांस्तेन दुष्पारं पापिना जलम् ।
तृतीया खलयुचोर्योगे दुष्पारो भवता त्विति ॥ १५४
कृत्यप्रत्यययोगे तु वा षष्ठी कर्तरीष्यते ।
तव्यानीयर्ण्यौ यत् क्यप् च केलिमः कृत्यसंज्ञकाः ॥ १५
कर्तव्यो भवतो धर्मः करणीयो मठस्तव ।
तव कृत्यमिदं सर्वमापाद्यं कृतिनां यशः ॥ २५६
कर्तव्यो भवता धर्मः करणीयो मठस्त्वया ।
त्वया कृत्यमिदं सर्वमापाद्यं कृतिभिर्यशः ॥ १५७
शत्रन्तस्य तु षष्ठी वा द्विषन्नित्यस्य कर्मणि ।
सपिण्डानां द्विषन् पापो सपिण्डांश्च द्विषन्नपि ॥ १५८
चोरान् द्विषन् जनः सर्वश्चोराणाञ्च द्विषन्निति ।
स्मरणार्थैस्तु शब्दैः स्याद्योगे षष्ठी विकल्पिता ॥ १५९
मातुः स्मरति बालोऽयं मातरं स्मरतीति वा ।
अधीगर्थदयेशाञ्च षष्ठी कर्मणि तद्यथा ॥ १ ०
मातुरध्येति दयते प्राणिनामीशते नृणाम् ।
लोकानामीशते देवा बन्धूनां दयते घृणी ॥ १६१
षष्ठी स्यादेवमादीनां कर्मणीत्यवगम्यताम् ।
जासि-निप्रहणक्राथपिषां हिंसार्थवाचिनाम् ॥ १६
षष्ठी कर्मणि निर्दिष्टा तदुदाहरणं यथा ।
जासयत्यथ शत्रूणां प्रणिहन्ति पिनष्टि च ॥ १६३
षष्ठ्यर्थोऽयं मया प्रोक्तः सप्तम्यर्थोऽथ कथ्यते ।
सप्तम्याऽधिकरणे तदर्थः सप्तमीरितः ॥ १६४
औपश्लेष-वैषयिक-व्यापकासत्तिभेदवान् ।
चतुर्थाऽऽधार आख्यातस्तदुदाहरणं यथा ॥ १६५
आस्ते सिंहासने राजेत्यौपश्लेषिक-सप्तमी ।
तिलेषु तैलमित्यादौ व्यापिका सप्तमीष्यते ॥ १६

गङ्गायां घोष इत्यादिर्भवत्यासन्नसप्तमी ।
वृक्षे स्थितं कपिं पश्य गगने विहगेश्वरम् ॥ १६७
वनेषु मत्तमातङ्गाः शरभा गिरिसानुषु ।
भूभृत्सु पादपाः सन्ति सन्ति गङ्गासु वालुकाः ॥ १६८
वार्तासु वर्तते बुद्धिः प्रायो धर्मकथासु नः ।
यस्य तु क्रिययाऽन्यस्य लक्ष्यतेऽत्र क्रियाऽपरा ॥ १६९
तस्य क्रियावतश्चापि सप्तमी तदुदाहृतिः ।
उदितेऽर्केऽभवत् पुत्रः पुत्रे जाते गता व्यथा ॥ १७०
गोष्वयं दुह्यमानासु गतो दुग्धास्विहाऽऽगतः ॥ १७१

वीह्यादिबीजेष्वनिमुच्यमाने-
ष्वगानुपात्तेषु गृहं प्रविष्टः ।
पुष्यत्सु चूतेषु गतोऽहमेषु
पक्वेषु सर्वेषु समागतोऽस्मि ॥ १७२

यस्य तु क्रिययाऽन्यस्य लक्ष्यते तु क्रियाऽपरा ।
अनादराधिके तत्र भवेत् षष्ठी च सप्तमी ॥ १७३
भीमस्य युध्यमानस्य जीवतोः कृष्णपार्थयोः ।
पश्यतां पाण्डुपुत्राणामभिमन्युर्निपातितः ॥ १७४
सज्यचापे स्थिते कर्णे पश्यतोर्द्रोणभीष्मयोः ।
क्रुध्यत्सु धार्त्तराष्ट्रेषु धर्मराज उपागतः ॥ १७५
जात्या वा क्रियया वाऽपि गुणैर्वा समुदायतः ।
यतो निर्धार्य्यते वस्तु तत्र षष्ठी च सप्तमी ॥ १७६
नृपाणां क्षत्रियः शूरो नृपेषु क्षत्रियोऽथवा ।
अध्वगानां वरो धावन्नध्वगेषु जवी वरः ॥ १७७
गवां कृष्णा हि कल्याणी गोषु कृष्णा गुणान्विता
विभक्तिः सप्तमी नित्यमिनन्तार्थस्य कर्मणि ॥ १७८
इष्टी तुरगमेधेषु कृती कर्मसु सर्वदा ।

अधीती वेदशास्त्रेषु श्रुती धर्मकथासु च ॥ १७९
गृहीती सर्वशास्त्रेषु नित्यं गुरुषु पूजिती ।
निमित्तात् कर्मसंयोगे सप्तमी तदुदाहृतिः ॥ १८०
चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति दन्तिनम् ।
बालेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ १८१
स्वामीश्वराधिपतिभिर्योगे षष्ठी च सप्तमी ।
गोषु स्वामी गवां स्वामी गवामधिपतिस्तथा ॥ १८२
गोष्वीश्वरस्तथैव स्याद् गवामीश्वर इत्यपि ।
साध्वसाधुप्रयोगेऽपि परिप्रत्यनुवर्जिते ॥ १८३
साधु मातरि पुत्रोऽयमसाध्वन्यजनेष्विति ।
मातरं प्रति साध्वेषा चैवं पर्य्यनुयोगयोः ॥ १८४
एवं सप्तविभक्त्यर्था विस्तरेण प्रदर्शिताः ।
कृदन्तास्तद्धितान्ताश्च समासाश्चाऽव्ययानि च । १८५
स्त्रीप्रत्ययान्तशब्दाश्च सुबन्ताः पञ्चधा मताः ॥ १८६

इति श्रीशङ्कराचार्य्यविरचितायां सर्वप्रत्ययमालायां
सप्तविभक्त्यर्थदर्शनं नाम प्रथमोऽध्यायः ।

---

# आतङ्कनिरसनम् *

[ निबन्धकः—श्रीदुर्गाप्रसन्न-विद्याभूषणः ]

१९२९ खृष्टाब्दीय २३शे सेप्टेम्बर-दिवसीयकलकत्तामुद्रित-"जैनगजट्" नामधेय-साप्ताहिक-संवादपत्रे सम्पादकीयस्तम्भे "अवि-

---

* वर्त्तमानवर्षीय-ज्येष्ठसंख्यायां प्रकाशितस्य प्रकाश्यमाननिबन्धलेखकेन निबद्धस्य "ब्राह्मणानां मत्स्यभोजनस्य शास्त्रीयत्व"मितिशीर्षकस्य लेखस्य, कलिकातानगरीतः प्रचारितायां 'जैनगजट' पत्रिकायां हिन्दीभाषया कश्चि-

चारितरस्य-मीमांसा”भिधेयः कश्चिद् निबन्धः प्रकाशतां नीतः, तदव-लोकनेन विज्ञातं मया, यन्मल्लिखित-“ब्राह्मणानां मत्स्यभोजनस्य शास्त्रीयत्व”मिति-शीर्षकस्य निबन्धस्य प्रतिवादात्मकोऽसाविति ।

यद्यपि शिष्ट-परिगृहीत-वेदादिशास्त्र-प्रामाण्यमनङ्गीकुर्वाणानां जैनानां व्यर्थ-जल्पनमालोकयतामस्माकं नाल्पमपि प्रतिवदितव्यं तथापि वृथादम्भावष्टम्भेन भूयोभूयोऽशिष्ट-वाग्व्यवहारेण च तत्प्रति-वादाय मां मुखरीकृतवान् जैन-पत्रिकासम्पाद-महोदयः ।

मदीयनिबन्ध-सन्दूषकेण जैनधुरन्धरेण यदस्मन्निबन्ध-सन्दर्शनेन “निन्दितमपि मत्स्य-मांस-भोजनं शास्त्रानुमतमिति मनसि विधाय मनुजाः स्वीयहीनाचारं द्रढयन्तो जीवभक्षणरूपेण राक्षसकल्पेनात्मानं श्वभ्रादिगतिपात्रमवापादयिष्यन्तो”ति प्रलपितं तत्र विविच्यते, कोऽयं जीवो नाम ? दृश्यते तु ब्रह्मवैवर्त्तपुराणे प्रकृतिखण्डे—“प्राणदेहादि-भृद्देही स जीवः परिकीर्त्तित” इति जीवबलप्राणधारणे इत्यस्मा-द्धातोर्निष्पन्नत्वाच्च प्राणसम्बन्धवान् देहाद्यवच्छिन्न आत्मा जीव इति प्रतिपन्नम् । स च आकीट-पतङ्गेभ्यः स्थावर-जङ्गमात्मकेषु वृक्ष-तृण-

---

दाक्षेपः सम्पादकीयत्वेन प्राकाश्यं नीतः । स हि निबन्धस्तत्सम्पादकेन तदनुपदमेव गैर्वाणगिरा परिणमय्य प्रकाशार्थमस्मत्पत्रिकायां प्रेषितः, किन्त्व-नुवादात्मकत्वात् नालमास्महे तं प्रकाशयितुमिति सलज्जमावेदयामो वयं सम्पादकमहोदयेषु । एतद्विषये च विशेषतो वक्तव्यमेतदेवास्माकम् यत्—अभि-लाषवन्तः काममदन्तु मत्स्यान् मांसं वा निरामिषाशिनश्च प्रकामं परिवर्जयन्तु नाम, वयं न कञ्चित् प्रेरयामो नापि निवारयामः नवा शास्त्रनिषेधमालेख्य मत्स्यादानाभुत्पत्स्यते विरक्तिर्मत्स्यादने, निरामिषाशिनाच्च शास्त्रादेशमालेख्य तत्रानुरक्तिश्च । परं शास्त्रकाराणां क्वासीत् पक्षपात इत्येवं निर्णेतुमयमुद्यमो मा तावत् साम्प्रदायिकविवादपदमास्तामिति नेतः परमेतद्विषयिणी काचना-लोचना पत्रिकायामस्यां प्रकाशयिष्यते ।

सं. सा. प. स.

वल्लरी-बीजपर्य्यन्तेषु सर्वत्र समभावेन विराजमानो दृश्यते, क्वचित् प्रकटभावेन कुत्रचिद् वाऽप्रकट-भावेन। तथा च—आकीटपतङ्गेभ्यो वृक्ष-वल्लरी-तृणपर्य्यन्तेषु जीवः प्रकटः, बीजादिषु चाप्रकटः। बीजादङ्कुरोत्पत्त्यनन्तरं प्रत्यक्षेण लक्ष्यत्वात्, तत्पूर्वमदर्शनाच्च।

न चासत एवोत्पत्तिरिति वाच्यम्, असतोऽनुत्पत्तेः। तथा चोक्तं शास्त्रकृद्भिः—"नासतो विद्यते भावः" इति। यदि नाम आकीटपतङ्गेभ्य आबीजात् सर्व्वत्र जीवः समभावेन विराजमानस्तर्हि किमिति न नाम निबन्धदूषकेणापि धान्यादिबीजभर्जन-पेषण-कण्डनादिना शाक वृक्षादिच्छेदनेन तथा गृहप्राङ्गणमार्जन-घासनाशेन च तद्गत-जीवहननेन वा स्वनिरयगमनपथः सुगमोऽकारि? क्रियते वा? तेनापि स्वकृतनिबन्धे वृक्षादीनां जीवत्वं स्वयमेवाङ्गीकृत्य प्रतिपादितमिति न तद् विशेषेणास्माकं प्रतिपादयितव्यम्। न च जीवहननमृते जीवनयात्रा निर्व्वहति जीवानाम्, विशेषतो गृहस्थानाम्। तथा च प्राणविद्यायां श्रूयते—

सहोवाच किं मेऽन्नं भविष्यति यत् किञ्चिदाश्वभ्यः आशकुनिभ्यः इति।

महाभारते शान्तिपर्व्वणि च—

> अजाश्चाश्वश्च मेषश्च गौश्च पक्षिगणाश्च ये।
> ग्राम्यारण्याश्चौषधयः प्राणस्यान्नमिति श्रुतिः॥
> तथैवान्नं ह्यहरहः सायं प्रातर्निरूप्यते।
> पशवश्चाथ धान्यञ्च यज्ञस्याङ्गमिति श्रुतिः॥

श्रीधरस्वामिधृत-स्मृतिवचनेषु प्राप्यते—

> "गृहमेधी गृहस्थः स्यात् हिंसा तस्यैव विद्यते"॥ इत्यादि।
> "देवतातिथिसेवार्थं रक्षार्थं देहगेहयोः।
> हिंसा काचिद् गृहस्थेन स्वीकार्य्या शास्त्रशासनात्॥

जीवदेहं विना नैव देहस्य रचणं भवेत् ।
नहि धर्मो गृहस्थस्य जीवो जीवस्य जीवनम् ॥" इति च ।

मनुना च मतमेतदनुमोदितं दृश्यते—

"प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत् ।
स्थावरं जङ्गमञ्चैव सर्वं प्राणस्य भोजनम् ॥"

अत्र प्राणशब्देन जीव उच्यते, प्राणितीति प्राणो जीवः इति टीकाकृद्व्याख्यानात् । न च पञ्चेन्द्रियत्वेनैकेन्द्रियत्वेन वा जीवगतोऽस्ति कश्चिद् विशेषः, येन पञ्चेन्द्रियत्वविशेषं प्रदर्श्य अस्मान् अधिक्षिप्तवान् जैनपत्रिकासम्पादकमहोदयः ।

अपि च सम्पादकमहोदयेन यदुक्तं वृक्षादय एकेन्द्रिया इति, तत् पृच्छामि वृक्षादीनामेकेन्द्रियत्वे किं मानम् ? दृश्यते हि वल्लरीप्रभृतीनां दृगिन्द्रिय-व्यापारोऽपि । तथाहि यस्यां दिशि वृक्षशाखादिकमालम्बनीयं वर्त्तते तस्यां दिश्येव वल्लरीणां गमनं तदालम्बनञ्च, तथाहि वृद्धानां भणितिः—"विनाश्रयं न तिष्ठन्ति पण्डिता वनिता लताः" इति । दृश्यते वृक्षादीनाम् आलोकानुसारेण शाखाविस्तृतिः । कासाञ्चिच्च "लज्जावती"ति प्रसिद्धाभिधेयानां वल्लरीणां स्पर्शमात्रेण निमीलनम् । एतेन तासां स्पर्शसम्विदप्यस्तीत्यविसम्वादिनो वाचो युक्तिः । केषाञ्चिच्च वृक्षविशेषाणां पतङ्गभुङ्नामधेयानां काञ्चनपत्रवद्विफालपत्राणां पतङ्गपतनमात्रेण सङ्कोचनं, निःशेषपतङ्गजीर्णताकाल-पर्य्यन्तं तदवस्थयाऽवस्थानञ्च । वृक्ष तृण-लतादीनामपि स्वापश्वास-प्रश्वासादिकमस्तीति तत्त्वविदामनुभवः ।

अतस्तेषां छेदन-विदारणादौ दुःखकरविषये अवश्यमेव दुःखं, सुखकरविषये च सुखमस्तीति सर्वथा स्वीकर्त्तव्यम् ।

तथा च मनुः—

तमसा बहुरूपेण वेष्टिताः कर्म्महेतुना ।
अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः ॥ इति ।

अतो वृक्षादीनामेकेन्द्रियत्ववादिना शास्त्रिमहोदयेन कीदृशी मुग्धा वैदग्ध्री प्रकटिता तद् विविच्यतां सद्भिः पाठकमहोदयैः। वृक्षादीनां जीवत्वसत्त्वादेवास्मच्छास्त्रे वृक्षच्छेदनादौ प्रायश्चित्तं दृश्यते, तथा च मनुः—

"फलदानां तु वृक्षाणां छेदने जप्यमृक्शतम्।
गुल्मवल्लीलतानाञ्च पुष्पितानाञ्च वीरुधाम्॥" इत्यादि

ननु पृच्छामि जैन-महाभागानां सुखभोगार्थं या पर्य्यङ्कासनादिका सामग्री वर्त्तते सा किं स्वयमुत्पन्ना? उत वृक्षच्छेदन-पाटन-विदारणादि-घटिता? या च तेषां पाकादिक्रिया सा किं निरिन्धना? सेन्धना चेद् वृक्षवधसम्बन्धगन्धोऽपि किं तत्र नास्ति? अस्ति चेत् अहिंसा कीदृशी? हिंसाशब्दस्य प्राणि-वधे रूढ़त्वात्, अहिंसाशब्दस्य च तद्विपरीतार्थत्वात्।

अपि च शास्त्रिमहोदयेन मन्निबन्ध-सन्दूषणाभिप्रायेण यदुल्लिखितं,—

"योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया।
स जीवंश्च मृतश्चैव न क्वचित् सुखमेधते॥"

इति मनुवचनं, तत् किं न स्वमतेऽपि प्रतिकूलम्? अस्मादृशवत् तेषामपि वृक्षतृणलतादीनां छेदनभोजनादिना प्राणिहिंसाया अनिस्तारात्। जलपानादिद्वारा संख्यातीतसूक्ष्मजीवदेहभक्षणाच्च। दृश्यन्ते चाणुवीक्षणयन्त्रसाहाय्येन जलमध्ये संख्यातीताः सूक्ष्मा जीवदेहाः।

अस्माकं या वैधहिंसा हिंसात्वेनाभिमता जैनपत्रिका सम्पादकमहोदयेन, सा तु अहिंसैव, हव्यकव्याद्यर्थं जीववधस्य शास्त्रानुमोदितत्वात्। तथा च मनुः—

"या वेदविहिता हिंसा नियतास्मिंश्चराचरे।
अहिंसामेव तां विद्याद् वेदाद्धर्मो हि निर्बभौ॥"

स्मृत्यन्तरञ्च—

"विधिपूर्वा तु या हिंसा सा त्वहिंसा प्रकीर्त्तिता ॥" इति ।

अवैधहिंसायान्तु कदापि नास्माकं सम्मतिरिति विजानन्तु सम्पादक-शास्त्रि-महोदयाः। तथा च पूर्वनिबन्धे मया लिखितं "कामतोऽवैध-निषिद्धमत्स्याशनेन दोषस्तु सुतरामेव", सम्पादक-शास्त्रि-महोदयानां शाकभक्षणादावपि जीवहिंसायाः क उपायः ? इति गतो जीवधारित्व-पक्षः।

मनुष्यत्वादिपक्षमवलम्ब्य शास्त्रिमहोदयेन यत् प्रलपितं तदिदानीमालोच्यते,—

मनुष्याहारपक्षं पक्षीकृत्य यदाख्यातं शास्त्रिमहोदयेन "यो हि तीक्ष्णदंष्ट्रो जिह्वाग्रभागेण पानीयं पिबति यश्च क्रूरस्वभावस्तस्यैव मांसमशनीय"मिति। तत्र पृच्छामि, एतादृगुद्भट-सिद्धान्तः शास्त्रिमहोदयेन कस्मिन् शास्त्रे उपलब्धः ? अपि च मनुष्यत्वपक्षमवलम्ब्य "ये तु मत्स्यमांसादिकमश्नन्ति ते तु मनुष्यपदवाच्या एव भवितुं नार्हन्ति, परन्तु राक्षसा वा नराधमा वा" इति यत् प्रलपितं तत्र इदमस्माभिर्वक्तव्यम्, किं शास्त्रिमहोदयस्य मतेन य एव मांसं खादन्ति त एव तीक्ष्णदंष्ट्रादिविशेषणवाच्याः मनुष्यपदवाच्यबहिर्भूताः ?, हन्त तर्हि "सर्वं हिंस्रमयं जगत्"।

वयन्तु महाभारतादीतिहाससमालोचनया, यशःप्रभा-समुद्भासित-सप्तविष्टपानां मूर्त्तधर्मस्वरूपाणां साक्षात् करुणारसजलनिधीनां, ब्रह्मण्यदाक्षिण्यप्रमुख-वरेण्य-गुणगणैक-पात्राणां पुण्य-प्रभावेण सशरीरं स्वर्गं गतानां पुण्यश्लोकधर्म्मावतारधर्म्मात्मजमहाराज-युधिष्ठिरादीनामपि मांसभक्षणमालोकयामः, तथा च महाभारते वनपर्वणि ५० तमाध्याये वैशम्पायनं प्रति जनमेजयस्य—"किमासीत् पाण्डुपुत्राणां वने भोजनमुत्तमम्" इति प्रश्ने—

"वानीयञ्च मृगांश्चैव शुद्धैर्बाणैर्निपातितान् ।
ब्राह्मणानां निवेद्याग्रमभुञ्जन् पुरुषर्षभाः ॥ इत्युत्तरतः ।

अपि च निखिल-भूभारहरणकारण-कलित-कलेवराणां दलित-सकल-नरक-बलानां साक्षात् करुणामय-विग्रहाणां स्मरणनिवारित-मानवकृत-दुरितनिवहानां दुष्पार-भवपारावार-सन्तारणैककर्णधाराणां विश्ववन्द्य-वृन्दारक-वृन्दवन्दित-चरणारविन्दानां श्रीमत्-परमेश्वर-भगवत्कृष्णचन्द्रादीनामपि यादवसहितानां मांसादिभोजनं हरिवंशे महाभारते विष्णुपर्वणि ८८ तमाध्याये समासादयामः । तथाच—

अन्नानि वीरा बुभुजुः प्रतीता मांसानि पक्वानि फलाम्लकानि ।
मैरेय-माध्वीक-सुरासवांस्ते सूदोपनीतांश्च पपुः प्रियाभिः ॥

अन्यच्च च—

यजनान्ते तदन्नञ्च तत्पयो दधि चोत्तमम् ।
मांसञ्च मायया कृष्णो गिरिर्भूत्वा समश्नुते ॥ इत्यादिभ्यः ।

किञ्च—नाममात्रस्मरणजनितागणितमहापातकादिपापविरामस्य रामस्यापि राजसूयाश्वमेधप्रमुखमखानुष्ठानं मांसभक्षणञ्च अवेक्षामहे वयं रामायणादौ ।

भट्टावपि—"बुभुजे देवसात् कृत्वा शूल्यमुख्यञ्च होमवान्" इति दृश्यते । उत्तररामचरितादावपि रघुकुलगुरोर्वशिष्ठस्य मधुपर्के मांसाशनमासाद्यते ।

किं नाम जैनपण्डितप्रकाण्ड-शास्त्रिमहोदयसविधे मांसाशिन एते युधिष्ठिरादयः पण्डिताग्रगण्या जगच्छरण्यवरेण्य-गुणग्राम-मण्डिताः करुणाशौण्ड-प्रवीणा महापुरुषप्रकाण्डा अपि मानवधर्म्म-विरहिताः ? स्वकरकमलकलितललितलेखनीगलिततीक्ष्णदंष्ट्रादि-विशेषणविशेषविशिष्टाः प्राणिविशेषाः ? मनुष्यपदवीबहिर्भूता राक्षसाः ? नराधमा वा ? येन मांसभक्षणमात्रेणैव तत्तद्विशेषणपात्रतां नीता मानवाः ?

ही ही भोः, यदि नाम जैनपण्डितमहोदयमतेन विशिष्टमनुष्य-धुरन्धरा अपि युधिष्ठिरादयो मांसभोजनान्मनुष्यपदवाच्या भवितुं नार्हन्ति, तर्हि का कथा मादृशानाम् ? शास्त्रिमहोदया इव मनुष्य-पदवाच्यतामासादयितुं नाभिलषामो वयमिति गतो मनुष्यत्वादि पक्षाक्षेपः।

इदानीं शास्त्रदृष्टिपक्ष आलोच्यते—शास्त्रदृष्ट्या ब्राह्मणादीनां वैध-मत्स्य-मांसभोजनविधिरस्माभिरासाद्यते। तथा च मनुस्मृतौ पञ्चमाध्याये—

प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया।
यथाविधि नियुक्तस्तु प्राणानामपि चात्यये॥
प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत्।
स्थावरं जङ्गमञ्चैव सर्वं प्राणस्य भोजनम्॥

अत्र प्राणशब्देन जीवो बोध्यः, प्राणितीति प्राणो जीवः इति ...क्षद्व्याख्यानात्।

नात्ता दूष्यत्यदन्नद्यान् प्राणिनोऽहन्यहन्यपि।
धात्रैव सृष्टा ह्याद्याश्च प्राणिनोऽत्तार एव च।
क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा।
देवान् पितॄंश्चार्चयित्वा खादन्मांसं न दूष्यति॥

अवैधमांसभक्षणे निषेधोऽपि दृश्यते यथा—

नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः।
जग्ध्वा ह्यविधिना मांसं प्रेत्य तैरद्यतेऽवशः।
यावन्ति पशुरोमाणि तावत् कृत्वो ह मारणम्।
वृथा पशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि॥

तथा श्रुतिस्मृतिषु यज्ञाद्यर्थं पशुहिंसनस्य प्रशंसापि दृश्यते। तथा च श्रुतिः—

पशुर्वै नीयमानः स मृत्युं प्राप्श्यत् स देवान्नान्वकामयतैतुम् ।
तं देवा अब्रुवन् एहि स्वर्गं त्वा वै लोकं गमयिष्यामः ॥
न वा उ एतन्म्रियसे न रिष्यसि देवाइत् ।
एहि पथिभिः सुगेभिः ।

मनुरप्याह—

यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।
यज्ञोऽस्य भूत्यै सर्वस्य तस्माद् यज्ञे वधोऽवधः ॥
ओषध्यः पशवो वृक्षास्तिर्य्यञ्चः पक्षिणस्तथा ।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः ॥
मधुपर्के च यज्ञे च पितृदैवतकर्म्मणि ।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥
एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद् द्विजः ।
आत्मानञ्च पशुञ्चैव गमयत्युत्तमां गतिम् ॥
या वेदविहिता हिंसा नियतास्मिंश्चराचरे ।
अहिंसामेव तां विद्याद् वेदाद्धर्मो हि निर्बभौ ॥ इति ।

महाभारते चानुशासनपर्वणि—

प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया ।
अल्पदोषमिहाख्यातं विपरीते तु लिप्यते ॥ इति ।

भागवते एकादशस्कन्धे च—

तथा पशोरालभनं न हिंसा । इति ।

अत एतेभ्यो वचनेभ्यो वैधो हिंसा न हिंसा, ततश्च न दोषावहा इति प्राप्यते । महाभारते शान्तिपर्वणि ३६श-तमाध्याये युधिष्ठिरस्य भक्ष्याभक्ष्यप्रश्ने—

"अभक्ष्या ब्राह्मणैर्मत्स्याः शल्कैर्ये वै विवर्जिताः

इत्यादि भीष्मवचनेन सशल्का मत्स्या ब्राह्मणैर्भक्ष्या इति स्पष्टं प्रतीयते ।

विष्णुमन्त्रे च विष्णोर्नैवेद्यमविकृत्योक्तं—नाभक्ष्यं नैवेद्यार्थे,

ही ही भोः, यदि नाम जैनपण्डितमहोदयमतेन विशिष्टमनुष्य-धुरन्धरा अपि युधिष्ठिरादयो मांसभोजनान्मनुष्यपदवाच्या भवितुं नार्हन्ति, तर्हि का कथा मादृशानाम् ? शास्त्रिमहोदया इव मनुष्य-पदवाच्यतामासादयितुं नाभिलषामो वयमिति गतो मनुष्यत्वादि पक्षाक्षेपः।

इदानीं शास्त्रदृष्टिपक्ष आलोच्यते—शास्त्रदृष्ट्या ब्राह्मणादीनां वैध-मत्स्य-मांसभोजनविधिरस्माभिरासाद्यते। तथा च मनुस्मृतौ पञ्चमाध्याये—

प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया।
यथाविधि नियुक्तस्तु प्राणानामपि चात्यये॥
प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत्।
स्थावरं जङ्गमञ्चैव सर्वं प्राणस्य भोजनम्॥

अत्र प्राणशब्देन जीवो बोध्यः, प्राणितीति प्राणो जीवः इति टीकाकृद्व्याख्यानात्।

नात्ता दुष्यत्यदन्नद्यान् प्राणिनोऽहन्यहन्यपि।
धात्रैव सृष्टा ह्यद्याश्च प्राणिनोऽत्तार एव च॥
क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा।
देवान् पितॄंश्चार्चयित्वा खादन्मांसं न दुष्यति॥

अवैधमांसभक्षणे निषेधोऽपि दृश्यते यथा—

नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः।
दग्ध्वा ह्यविधिना मांसं प्रेत्य तैरद्यतेऽवशः॥
यावन्ति पशुरोमाणि तावत् कृत्वो ह मारणम्।
वृथा पशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि॥

तथा श्रुतिस्मृतिषु यज्ञाद्यर्थं पशुहिंसनस्य प्रशंसापि दृश्यते। तथा च श्रुतिः—

पशुर्वै नीयमानः स मृत्युं प्राप्श्यत् स देवान्नान्वकामयतैतुम् ।
तं देवा आब्रुवन् एहि स्वर्गं त्वा वै लोकं गमयिष्यामः ॥
न वा उ एतन्म्रियसे तरिष्यसि देवादृत् ।
एहि पथिभिः सुगेभिः ।

मनुरप्याह—

यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।
यज्ञोऽस्य भूत्यै सर्वस्य तस्माद् यज्ञे वधोऽवधः ॥
ओषध्यः पशवो वृक्षास्तिर्य्यञ्चः पक्षिणश्च ये ।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितोः पुनः ॥
मधुपर्के च यज्ञे च पितृदैवतकर्म्मणि ।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥
एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद् द्विजः ।
आत्मानञ्च पशुञ्चैव गमयत्युत्तमां गतिम् ॥
या वेदविहिता हिंसा नियतास्मिंश्चराचरे ।
अहिंसामेव तां विद्याद् वेदाद्धर्मो हि निर्बभौ ॥ इति ।

महाभारते चानुशासनपर्वणि—

प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया ।
अल्पदोषमिहाख्यातं विपरीते तु लिप्यते ॥ इति ।

भागवते एकादशस्कन्धे च—

तथा पशोरालभनं न हिंसा। इति ।

अत एतेभ्यो वचनेभ्यो वैधो हिंसा न हिंसा, ततश्च न दोषावहा इति प्राप्यते। महाभारते शान्तिपर्वणि ३६श-तमाध्याये युधिष्ठिरस्य भक्ष्याभक्ष्यप्रश्ने—

"अभक्ष्या ब्राह्मणैर्मत्स्याः शल्कैर्ये वै विवर्जिताः ।"

इत्यादि भीष्मवचनेन सशल्का मत्स्या ब्राह्मणैर्भक्ष्या इति स्पष्टं प्रतीयते।

विष्णुसूत्रे च विष्णुनैवेद्यमधिकृत्योक्तं—नाभक्ष्यं नैवेद्यार्थे,

हो हो भोः, यदि नाम जैनपण्डितमहोदयमतेन विशिष्टमनुष्य-धुरन्धरा अपि युधिष्ठिरादयो मांसभोजनान्मनुष्यपदवाच्या भवितुं नार्हन्ति, तर्हि का कथा मादृशानाम् ? शास्त्रिमहोदया इव मनुष्य-पदवाच्यतामासादयितुं नाभिलषामो वयमिति गतो मनुष्यत्वादि पक्षाक्षेपः।

इदानीं शास्त्रदृष्टिपक्ष आलोच्यते—शास्त्रदृष्ट्या ब्राह्मणादीनां वैध-मत्स्य-मांसभोजनविधिरस्माभिरासाद्यते। तथा च मनुस्मृतौ पञ्चमाध्याये—

> प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया।
> यथाविधि नियुक्तस्तु प्राणानामपि चात्यये॥
> प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत्।
> स्थावरं जङ्गमञ्चैव सर्वं प्राणस्य भोजनम्॥

अत्र प्राणशब्देन जीवो बोध्यः, प्राणितीति प्राणो जीवः इति टीकाकृद्व्याख्यानात्।

> नात्ता दुष्यत्यदन्नद्यान् प्राणिनोऽहन्यहन्यपि।
> धात्रैव सृष्टा ह्याद्याश्च प्राणिनोऽत्तार एव च।
> क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा।
> देवान् पितॄंश्चार्चयित्वा खादन्मांसं न दुष्यति॥

अवैधमांसभक्षणे निषेधोऽपि दृश्यते यथा—

> नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः।
> दग्ध्वा ह्यविधिना मांसं प्रेत्य तैरद्यतेऽवशः।
> यावन्ति पशुरोमाणि तावत् कृत्वो ह मारणम्।
> वृथा पशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि॥

तथा श्रुतिस्मृतिषु यज्ञाद्यर्थं पशुहिंसनस्य प्रशंसापि दृश्यते। तथा च श्रुतिः—

पशुर्वै नीयमानः स मृत्युं प्राप्यत् स देवान्नान्वकामयतैतुम् ।
तं देवा अब्रुवन् एहि स्वर्गं त्वा वै लोकं गमयिष्यामः ॥
न वा उ एतन्म्रियसे न रिष्यसि देवाइत् ।
एहि पथिभिः सुगेभिः ।

मनुरप्याह—

यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।
यज्ञोऽस्य भूत्यै सर्वस्य तस्माद् यज्ञे वधोऽवधः ॥
ओषध्यः पशवो वृक्षास्तिर्य्यञ्चः पक्षिणश्च ये ।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः ॥
मधुपर्के च यज्ञे च पितृदैवतकर्म्मणि ।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥
एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद् द्विजः ।
आत्मानञ्च पशुञ्चैव गमयत्युत्तमां गतिम् ॥
या वेदविहिता हिंसा नियतास्मिंश्चराचरे ।
अहिंसामेव तां विद्याद् वेदाद्धर्मो हि निर्बभौ ॥ इति ।

महाभारते चानुशासनपर्वणि—

प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया ।
अल्पदोषमिहाख्यातं विपरीते तु लिप्यते ॥ इति ।

भागवते एकादशस्कन्धे च—

तथा पशोरालभनं न हिंसा । इति ।

अत एतेभ्यो वचनेभ्यो वैधी हिंसा न हिंसा, ततश्च न दोषावहा इति प्राप्यते । महाभारते शान्तिपर्वणि ३६श-तमाध्याये युधिष्ठिरस्य भक्ष्याभक्ष्यप्रश्ने—

"अभक्ष्या ब्राह्मणैर्मत्स्याः शल्कैर्ये वै विवर्जिताः ।"

इत्यादि भीष्मवचनेन सशल्का मत्स्या ब्राह्मणैर्भक्ष्या इति स्पष्टं प्रतीयते ।

विष्णुसूत्रे च विष्णुनैवेद्यमधिकृत्योक्तं—नाभक्ष्यं नैवेद्यार्थे,

ही ही भोः, यदि नाम जैनपण्डितमहोदयमतेन विशिष्टमनुष्य धुरन्धरा अपि युधिष्ठिरादयो मांसभोजनान्मनुष्यपदवाच्या भवित् नार्हन्ति, तर्हि का कथा मादृशानाम् ? शास्त्रिमहोदया इव मनुष्य पदवाच्यतामासादयितुं नाभिलषामो वयमिति गतो मनुष्यत्वादि पक्षाक्षेपः।

इदानीं शास्त्रदृष्टिपक्ष आलोच्यते—शास्त्रदृष्ट्या ब्राह्मणादीन वैध-मत्स्य-मांसभोजनविधिरस्माभिरासाद्यते। तथा च मनुस्मृते पञ्चमाध्याये—

प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया।
यथाविधि नियुक्तस्तु प्राणानामपि चात्यये॥
प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत्।
स्थावरं जङ्गमञ्चैव सर्वं प्राणस्य भोजनम्॥

अत्र प्राणशब्देन जीवो बोध्यः, प्राणितीति प्राणो जीवः इति टीकाकृद्व्याख्यानात्।

नात्ता दूष्यत्यदन्नद्यान् प्राणिनोऽहन्यहन्यपि।
धात्रैव सृष्टा ह्याद्याश्च प्राणिनोऽत्तार एव च।
क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा।
देवान् पितॄंश्चार्चयित्वा खादन्मांसं न दूष्यति॥

अवैधमांसभक्षणे निषेधोऽपि दृश्यते यथा—

नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः।
दग्ध्वा ह्यविधिना मांसं प्रेत्य तैरद्यतेऽवशः।
यावन्ति पशुरोमाणि तावत् कृत्वो ह मारणम्।
वृथा पशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि॥

तथा श्रुतिस्मृतिषु यज्ञाद्यर्थं पशुहिंसनस्य प्रशंसापि दृश्यते। तथा च श्रुतिः—

पशुर्वै नीयमानः स मृत्युं प्राप्सयत् स देवान्नान्वकामयतैतुम्।
तं देवा अब्रुवन् एहि स्वर्गं त्वा वै लोकं गमयिष्यामः॥
न वा उ एतन्म्रियसे तरिष्यसि देवाइत्।
एहि पथिभिः सुगेभिः।

मनुरप्याह—

यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा।
यज्ञोऽस्य भूत्यै सर्वस्य तस्माद् यज्ञे वधोऽवधः॥
ओषध्यः पशवो वृक्षास्तिर्य्यञ्चः पक्षिणश्च ये।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः॥
मधुपर्के च यज्ञे च पितृदैवतकर्म्मणि।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः॥
एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद् द्विजः।
आत्मानञ्च पशुञ्चैव गमयत्युत्तमां गतिम्॥
या वेदविहिता हिंसा नियतास्मिंश्चराचरे।
अहिंसामेव तां विद्याद् वेदाद्धर्मो हि निर्बभौ॥ इति।

महाभारते चानुशासनपर्वणि—

प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया।
अल्पदोषमिहाख्यातं विपरीते तु लिप्यते॥ इति।

भागवते एकादशस्कन्धे च—

तथा पशोरालभनं न हिंसा। इति।

अत एतेभ्यो वचनेभ्यो वैधो हिंसा न हिंसा, ततश्च न दोषावहा इति प्राप्यते। महाभारते शान्तिपर्वणि ३६श-तमाध्याये युधिष्ठिरस्य भक्ष्याभक्ष्यप्रश्ने—

"अभक्ष्या ब्राह्मणैर्मत्स्याः शल्कैर्ये वै विवर्जिताः।"

इत्यादि भीष्मवचनेन सशल्का मत्स्या ब्राह्मणैर्भक्ष्या इति स्पष्टं प्रतीयते।

विष्णुसूत्रे च विष्णुनैवेद्यमधिकृत्योक्तं—नाभक्ष्यं नैवेद्यार्थे

भक्ष्येष्वजामहिषीक्षीरं वर्जयेत् पञ्चनख-मत्स्य-वराहमांसानि च। इति।

अत्र भक्ष्येषु मत्स्यस्य विष्णुनैवेद्यार्थं वर्जनदर्शनात् मत्स्या भक्ष्या इति प्राप्तम्। अन्यथा नाभक्ष्यं नैवेद्यार्थे इत्युक्त्यैव गतार्थत्वात् किं विशिष्टभक्ष्येषु परिगणय्य वर्जनेनेति।

मत्स्यादेः प्रत्याख्याननिषेधश्च दृश्यते, तथा च याज्ञवल्क्यस्मृतौ—

कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः।
मांसं शय्यासनं धानाः प्रत्याख्येया न वारि च॥

मनुस्मृतौ च—

शय्यां गृहं कुशान् गन्धान् आपः पुष्पं मणिं दधि।
मत्स्यान् धानाः पयो मांसं शाकञ्चैव न निर्णुदेत्॥

'न निर्णुदेत्' न प्रत्याचक्षीत इत्यर्थः।

मत्स्यमांसादिना श्राद्धकरणे तु पितृणां तृप्तिविशेषः स्मर्य्यते, तथा च महाभारतेऽनुशासनपर्वणि—

द्वौ मासौ तु भवेत्तृप्तिर्मत्स्यैः पितृगणस्य च।
त्रीन् मासानाविकेनाहुश्चतुर्मासाञ्छशेन ह।
आजेन मासान् प्रीयन्ते पञ्चैव पितरो नृप॥ (क्रमशः)

---

## लीलाकैवल्यम्

[ निबन्धकः—श्रीप्रबोधेन्दुनाथ-ठाकुरः बि. ए. ]

परिहर सति! वञ्चितपति-पञ्चित-गुरुगञ्जं
रसय रसय विषमविषय-विकल-हृदयकञ्जम्।
साधय वरसज्जां परिहर गुरुलज्जां
चञ्चलमतिरेति झटिति हरिरधिरतिकुञ्जं
भीरु! दरय गृहपतिभयमनुभव रसपुञ्जम्॥

रसमय-रसपात्रि ! मधुरमिलनरात्रि-
रुदयति रतिरङ्गविरतिमङ्ग जहिहि तूर्णं
सुदति ! हृदयभावनिचयमाशु रचय पूर्णम् ॥

स्वपिति सकलपल्ली हसति मधुरमल्ली
ननु दिशि दिशि शारद-शशिकान्त-किरणकान्ती
राजति जितसरसिजमुखि ! द्रक्ष्यस इव यान्ती ॥

नीलनलिननयने ! कथय किमसि भवने
पशुप-युवति ! पूरय रतिरङ्गिणमनु कामं
कलमपनय ननु मणिमय-नूपुरमतिवामम् ॥

शारदशशिभासा रजनिरमलहासा
यास्यसि कथमभिसृतिपथमाशु रचय वेशं
ननु निशमय वपुषि शमय निपुणमसितलेशम् ॥

विरचय निजगात्रं मलयज-रसपात्रं
गञ्जित-गलिताञ्जनगिरि-गर्वं चिकुरपाशं
नय रसवति ! कुसुमविततिभातिषु लघु नाशम् ॥

मरकतमणिहारं वहसि किमतिभारं
हृदयजमधिवासय यदि सितसरसिजदाम
वर्त्मनि शिवमस्तु क इव वेत्तु तदिह नाम ॥

नीलवसनमधुना दर्शितमयि विधुना
परिहर परसंशयकरमाहर सित-सिचयं
गुणवति ! नय विनयमदयकलुषवचननिचयम् ॥

वेणुरणति दूरं जनयति रसपूरं
वारिजमुखि ! भावय सुखि मधुसुरहरचित्तं
चल कुलवति ! वल्लवपतिरिच्छति सह नृत्यम् ॥

कवलय कुलभीतिं सवलय रसरीतिं

वितनु सुतनु ! नागरमनु नूतननटरङ्ग'
रङ्गिणि ! रससङ्गिनि तव घटय सघनमङ्गम् ॥

कृत-कल-करताला निखिल पशुप-वाला
नाटय नट नवनटवर एष नटति साकं
विश्ववलय ! पश्य कलय परमसुकृतिपाकम् ॥

मनसिजमदहारी रासरसविहारी
नृत्यति कति तरलितमतिरनु नृत्यति राधा
पश्य भुवन ! नश्यतु तव जनन-मरण-बाधा ॥

---

## परिषत्प्रशस्तिः

[ निबन्धकः—श्रीसुरेन्द्रनाथविद्यारत्नः एम्. ए ।

यत्र प्रसन्नगम्भीरा भावाबन्धरसोज्ज्वला ।
गैर्व्वाणी सेव्यते वाणी संसत् सा कस्य न प्रिया ॥
गीष्पतिं पशुपतिं सभापतिं प्राप्य हृष्टहृदयो दिवस्पतिः ।
तद्वियोगविधुरोऽपि मन्यते तां सभां स्थितिमतीं स्थिरायतिम् ॥
तर्काचार्य्या विविधविबुधाः कोविदश्रेष्ठसभ्या
यत्रादित्याः स्फुरितधिषणातेजसो दुर्निरीक्ष्याः ।
कालीदुर्गाचरणरजसा नीरजीकारितान्त-
स्तस्याः सा स्याद् दनुतनुज-भी-ग्रस्तधैर्य्याकुला किम् ॥
इयमिष्टफलाय कल्पतां नटविज्ञानकलासुमञ्जरी ।
नव "पञ्च" सुचारुवल्लरी प्रतिभापुष्पविलासहासिनी ॥

---

# ग्रन्थ-निकषः

[ निबन्धकः—श्रीचिन्ताहरणचक्रवर्त्ति-काव्यतीर्थः एम्. ए. ]

A Descriptive Catalogue of the Sanskrit Mss. in the Tanjore Maharaja Serfoji's Sarasvati Mahal Library, Tanjore, by P. P. S. Sastri, B. A. (Oxon.), M. A. (Madras), M. R. A. S.

ताञ्जोरस्थितप्रसिद्धग्रन्थागारस्य प्रस्तूयमानविशालसूचिपुस्तकस्य त्रयोविंशतिखण्डात्मकस्याद्य यावत् प्रकाशं नीतं खण्डत्रितयमुपलब्धमस्माभिः। ग्रन्थागारस्यैतस्य सविस्तारसूचिनिर्माणप्रयत्नोऽयं सर्वथाऽस्माभिरनुमोद्यते आशास्यते च निर्वाधमेतत् कृत्यं पूर्णतया सफलतामुपगतं संस्कृतसाहित्येतिवृत्तमालोचयतां महान्तमुपकारमुपजनयेदिति।

सूचि-ग्रन्थादौ ग्रन्थागारस्येतिहासं समासतो वर्णयता सम्पादकेन श्रीमता शास्त्रिमहोदयेन सर्वथा साधु समनुष्ठितम्। वर्षाणां शतचतुष्टयं यावत् क्रमेण वृद्धिं भजतोऽस्य ग्रन्थागारस्य विवरणप्रकटनेन न जानीमः कियन्तो वा नवीननवीना ग्रन्थविशेषा विलुप्तत्वेन प्रतीयमानाः सामाजिकानामतितरां तृप्तिमुपजनयेयुः।

तृतीयखण्डप्रारम्भे प्रस्तूयमानग्रन्थस्य विवरणमुपन्यस्तम्। तत्र प्रतिखण्डं विषया निरूपिताः। एवञ्च सप्तदशखण्डे दर्शनग्रन्थविवरणात्मके शैव-शाक्त-गाणपत-दर्शनग्रन्थानां विवरणमुपनिबध्येत। ऊनविंशे च खण्डे शैवाद्यागमग्रन्थाः, एकविंशे च शैवादिमन्त्रशास्त्रग्रन्थाः विन्निवेशयेयुरिति निर्णीतम्। परं सम्भवति आगमशास्त्रे एव शैवादिदर्शनानां मन्त्रशास्त्राणां च सम्यगन्तर्भावे तेषां पृथगुपन्यासस्य च प्रयोजनं न सर्वथोपलभ्यतेऽस्माभिः। विषयेऽत्र सम्पादकमहोदयस्य दृष्टिराकृष्यते।

वितनु सुतनु ! नागरमनु नूतननटरङ्ग
रङ्गिणि ! रससङ्गिनि तव घटय सघनमङ्गम् ॥
कृत-कल-करताला निखिल पशुप-वाला
नाटय नट नवनटवर एष नटति साकं
विश्ववलय ! पश्य कलय परमसुकृतिपाकम् ॥
मनसिजमदहारी रासरसविहारी
नृत्यति कृति तरलितमतिरनु नृत्यति राधा
पश्य भुवन ! नश्यतु तव जनन-मरण-बाधा ॥

---

## परिषत्प्रशस्तिः

[ निबन्धकः—श्रीसुरेन्द्रनाथविद्यारत्नः एम्. ए ]

यत्र प्रसन्नगम्भीरा भावाबन्धरसोज्ज्वला ।
गैर्व्वाणी सेव्यते वाणी संसत् सा कस्य न प्रिया ॥
गोष्पतिं पशुपतिं सभापतिं प्राप्य हृष्टहृदयो दिवस्पतिः ।
तद्वियोगविधुरोऽपि मन्यते तां सभां स्थितिमतीं स्थिरायतिम् ॥
तर्काचार्य्या विविधविबुधाः कोविदश्रेष्ठसभ्या
यत्रादित्याः स्फुरितधिषणातेजसो दुर्निरीक्षाः ।
कालीदुर्गाचरणरजसा नीरजीकारितान्त-
स्तत्त्वाः सा स्याद् दनुतनुज-भी-ग्रस्तधैर्य्याकुला किम् ॥
इयमिष्टफलाय कल्पतां नटविज्ञानकलासुमञ्जरी ।
नव "पत्र" सुचारुवल्लरी प्रतिभापुष्पविलासहासिनी ॥

---

## ग्रन्थ-निकषः

[ निबन्धकः—श्रीचिन्ताहरणचक्रवर्त्ति-काव्यतीर्थः एम्. ए. ]

A Descriptive Catalogue of the Sanskrit Mss. in the Tanjore Maharaja Serfoji's Sarasvati Mahal Library, Tanjore, by P. P. S. Sastri, B. A. (Oxon.), M. A. (Madras), M. R. A. S.

ताञ्जोरस्थितप्रसिद्धग्रन्थागारस्य प्रस्तूयमानविशालसूचिपुस्तकस्य त्रयोविंशतिखण्डात्मकस्याद्य यावत् प्रकाशं नीतं खण्डत्रितयमुपलब्धमस्माभिः। ग्रन्थागारस्यैतस्य सविस्तारसूचिनिर्माणप्रयत्नोऽयं सर्वथाऽस्माभिरनुमोद्यते आशास्यते च निर्बाधमेतत् कृत्यं पूर्णतया सफलतामुपगतं संस्कृतसाहित्येतिवृत्तमालोचयतां महान्तमुपकारमुपजनयेदिति।

सूचि-ग्रन्थादौ ग्रन्थागारस्येतिहासं समासतो वर्णयता सम्पादकेन श्रीमता शास्त्रिमहोदयेन सर्वथा साधु समनुष्ठितम्। वर्षाणां शतचतुष्टयं यावत् क्रमेण वृद्धिं भजतोऽस्य ग्रन्थागारस्य विवरणप्रकटनेन न जानीमः कियन्तो वा नवीननवीना ग्रन्थविशेषा विलुप्तत्वेन प्रतीयमानाः सामाजिकानामतितरां तृप्तिमुपजनयेयुः।

तृतीयखण्डप्रारम्भे प्रस्तूयमानग्रन्थस्य विवरणमुपन्यस्तम्। तत्र प्रतिखण्डं विषया निरूपिताः। एवञ्च सप्तदशखण्डे दर्शनग्रन्थविवरणात्मके शैव-शाक्त-गाणपत-दर्शनग्रन्थानां विवरणमुपनिबध्येत। ऊनविंशे च खण्डे शैवाद्यागमग्रन्थाः, एकविंशे च शैवादिमन्त्रशास्त्रग्रन्थाः विव्रियेयुरिति निर्णीतम्। परं सम्भवति आगमशास्त्रे एव शैवादिदर्शनानां मन्त्रशास्त्राणां च सम्यगन्तर्भावे तेषां पृथगुपन्यासस्य च प्रयोजनं न सर्वथोपलभ्यतेऽस्माभिः। विषयेऽत्र सम्पादकमहोदयस्य दृष्टिराकृष्यते।

किं तावदनया छात्रसमित्या प्रयोजनमिति चेदत्रोच्यते। वयोवृद्धानां विदुषां समवाये सुकुमारमतीनां जड़धियां छात्राणां वाणी न सम्यक् स्फुरति इति मत्वा येन ते स्वच्छन्दं संस्कृतमालोचयितुं पारयेयु-स्तदर्थमेव प्रतिष्ठितेयं समितिः। स्वानुष्ठितायां समानवयोविद्यप्रायायां संसदि छात्राणां स्वाभिप्रायप्रकाशप्रयत्नो यथा सफलतां गाहते तथा भवति नो विद्वज्जनसमागमे। अथोऽस्याः समितेर्नियमावली दीयते—

१। परिषद्विद्यालयस्य सर्वे विद्यार्थिनो नियमेनास्याः समितेः सभ्यपदं गृह्णीयुः। २। विभिन्नविद्यालयाध्यापकैः स्वीयविद्यार्थितया विज्ञापितास्छात्रा अप्यस्याः समितेः सभ्यपदमर्हेयुः। ३। समितेरस्याः सभ्यपदग्रहणे किमपि शुल्कं नापेक्ष्येत। ४। समितेरस्या अधिवेशने निबन्धा व्याख्यानानि पारस्परिकसंवादाश्च संस्कृतवाचमेवोपजीवेयुः। ५। एतस्याः सम्बन्धिनो निबन्धादयः सर्वे एव विशेषतो विद्यार्थिना-मुपकारमनुरुध्येरन्।

प्रतिमासं समितेरस्याः साधारणाधिवेशनं भवति तत्र छात्रैः संस्कृतभाषया निबन्धा विरच्यन्ते पठ्यन्ते समालोच्यन्ते च। एवं प्रबन्धसमालोचनाविरचनादिना नूनं विवर्धतेतरां तेषां संस्कृतेषु ज्ञानम्। मासिकसभासु रघुवंशीयानां कुमारसम्भवस्थितानां रामा-यणमहाभारतगतानामन्येषामपि सुकविभाषितानां श्लोकानामावृत्ति-र्भवति। प्रचलति च कदाचित्तासु सभासु श्लोकविवादो यः किल अति हि नाम पुरातनः। एकेन समुच्चारितस्य श्लोकस्यान्त्यं व्यञ्जनं समादायान्येन तद्व्यञ्जनादिश्लोकोच्चारणं श्लोकविवादो नाम। आलोच्य-वर्षे द्वादशसंख्यकानि अधिवेशनानि जातानि। अधस्तादुल्लिख्य-माना निबन्धा अधःसमुल्लिख्यमानैश्छात्रैर्विरचिता वाचिताश्च। सुष्ठु समालोचिताश्च सदस्यैस्ते ते निबन्धाः।

| | प्रबन्धाः | रचयितारः |
|---|---|---|
| प्रथमाधिवेशने | छात्रसमितेः प्रयोजनम् | श्रीविष्णुपदभट्टाचार्य्यः |
| द्वितीयाधिवेशने | श्लोकविवादः | श्रीरामकृष्णचक्रवर्त्ती, एम्. ए. |

अपरञ्च किमपि वक्तव्यमस्ति ग्रन्थस्यास्य उपयोगातिरिक्तं द्रष्टु-मीहमानानाम् अस्माकम्। तथा च तृतीयखण्डान्ते विन्यस्तायां ग्रन्थनामसूचौ यदि Catalogus Catalogorum ग्रन्थे Aufrecht महोदयैरनुल्लिखितानां ग्रन्थानां नामपार्श्वे चिह्नं किमपि प्रदीयेत तथा प्राचीनतरा अन्यथा वा उपयोगमावहन्तो ग्रन्था सूच्यामेतस्यां चिह्नविशेषैरङ्किताः स्युस्तदा ग्रन्थमालोचयतां विशेषतः सौकर्य्यं स्यादिति विषयोऽयं सर्वथा विचारमर्हति सम्पादकमहाभागानाम्। एतदप्यत्र वक्तव्यम् यथा बडोदाप्रकाशितसूच्यामेवैवंविधालोचनसौकर्य्य-मुपलभामहे नान्यत्र कुत्रापि। एवं कृते उपयोगवतोऽस्य ग्रन्थस्योप-योगो वर्द्धिततरामिति निःसंशयं वच इति शम्।

---

## संस्कृत-साहित्य-परिषच्छात्रसमितेः प्रथमवर्षीय-कार्य्यविवरणम्

[ निबन्धकः—श्रीविष्णुपदभट्टाचार्य्यः बि. ए. ]

महतस्तमसः पारे पुरुषं ह्यतितेजसम्।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञानात्मने नमः॥

पञ्चत्रिंशदुत्तरत्रयोदशशततमवङ्गीयाब्दे शुभशौरभाद्रपदे परिष-च्छात्राणां श्रीमतां ज्ञानदाचरणशर्मभट्टाचार्य्याणामुत्साहेन नाम मात्रावसितायाः संस्कृतसाहित्यपरिषच्छात्रसमितेः पुनः प्रतिष्ठापनं सञ्जातम्। शाखाविशेषः खल्वियं परिषच्छात्रसमितिः संस्कृत-साहित्य-परिषदः। दश सदस्यान् समादाय प्रतिष्ठितेयमासीत् समितिः। अनाडम्बरोपक्रमायां सकलच्छात्रजनहितैषिण्यामस्यां समित्यां सम्प्रति प्रायेण पञ्चाशत्संख्यकसदस्या विद्यन्ते।

आर्य्यगौरववाहिन्याः सुरसरस्वत्याः प्रचारेण समुन्नतिसम्पादन-म्तावदस्याः समितेर्मुख्यं लक्ष्यस्थानम्। परिषदा सह लक्ष्यैक्येऽपि

किं तावदनया छात्रसमित्या प्रयोजनमिति चेदत्रोच्यते। वयोवृद्धानां विदुषां समवाये सुकुमारमतीनां जड़धियां छात्राणां वाणी न सम्यक् स्फुरति इति ज्ञात्वा येन ते स्वच्छन्दं संस्कृतमालोचयितुं पारयेयु-स्तदर्थमेव प्रतिष्ठितेयं समितिः। स्वानुष्ठितायां समानवयोविद्यप्रायायां संसदि छात्राणां स्वाभिप्रायप्रकाशप्रयत्नो यथा सफलतां गाहते तथा भवति नो विद्वज्जनसमागमे। अथोऽस्याः समितेर्नियमावली दीयते—

१। परिषद्विद्यालयस्य सर्वे विद्यार्थिनो नियमेनास्याः समितेः-सभ्यपदं गृह्णीयुः। २। विभिन्नविद्यालयाध्यापकैः स्वीयविद्यार्थितया विज्ञापितास्छात्रा अप्यस्याः समितेः सभ्यपदमर्हेयुः। ३। समितेरस्याः सभ्यपदग्रहणे किमपि शुल्कं नापेक्ष्येत। ४। समितेरस्या अधिवेशने निबन्धा व्याख्यानानि पारस्परिकसंवादाश्च संस्कृतवाचमेवोपजीवेयुः। ५। एतस्याः सम्बन्धिनो निबन्धादयः सर्वे एव विशेषतो विद्यार्थिना-मुपकारमनुरुध्येरन्।

प्रतिमासं समितेरस्याः साधारणाधिवेशनं भवति तत्र छात्रैः संस्कृतभाषया निबन्धा विरच्यन्ते पठ्यन्ते समालोच्यन्ते च। एवं प्रबन्धसमालोचनाविरचनादिना नूनं विवर्धतेतरां तेषां संस्कृतेषु ज्ञानम्। मासिकसभासु रघुवंशीयानां कुमारसम्भवस्थितानां रामा-यणमहाभारतगतानामन्येषामपि सुकविभावितानां श्लोकानामावृत्ति-र्भवति। प्रचलति च कदाचित्तासु सभासु श्लोकविवादो यः किल अति हि नाम पुरातनः। एकेन समुच्चारितस्य श्लोकस्यान्त्यं व्यञ्जनं समादायान्येन तद्व्यञ्जनादिश्लोकोच्चारणं श्लोकविवादो नाम। आलोच्य-वर्षे द्वादशसंख्यकानि अधिवेशनानि जातानि। अधस्तादुल्लिख्य-माना निबन्धा अधःसमुल्लिख्यमानैश्छात्रैर्विरचिता वाचिताश्च। सुष्ठु समालोचिताश्च सदस्यैस्ते ते निबन्धाः।

| | प्रबन्धाः | रचयितारः |
|---|---|---|
| प्रथमाधिवेशने | छात्रसमितेः प्रयोजनम् | श्रीविष्णुपदभट्टाचार्य्यः |
| द्वितीयाधिवेशने | श्लोकविवादः | श्रीरामकृष्णचक्रवर्त्ती, एम्. ए. |

अपरञ्च किमपि वक्तव्यमस्ति ग्रन्थस्यास्य उपयोगातिरेकं द्रष्टु-मीहमानानाम् अस्माकम्। तथा च तृतीयखण्डान्ते विन्यस्तायां ग्रन्थनामसूची यदि Catalogus Catalogorum ग्रन्थे Aufrecht महोदयैरनुल्लिखितानां ग्रन्थानां नामपार्श्वे चिह्नं किमपि प्रदीयेत तथा प्राचीनतरा अन्यथा वा उपयोगमावहन्तो ग्रन्था सूच्यामेतस्यां चिह्नविशेषैरङ्किताः स्युस्तदा ग्रन्थमालोचयतां विशेषतः सौकर्य्यं स्यादिति विषयोऽयं सर्वथा विचारमर्हति सम्पादकमहाभागानाम्। एतदप्यत्र वक्तव्यम् यथा बडोदाप्रकाशितसूच्यामेवैवंविधालोचनसौकर्य्य-मुपलभामहे नान्यत्र कुत्रापि। एवं कृते उपयोगवतोऽस्य ग्रन्थस्योप-योगो वर्द्धततरामिति निःसंशयं वच इति शम्।

---

## संस्कृत-साहित्य-परिषच्छात्रसमितेः प्रथमवर्षीय-कार्य्यविवरणम्

[ निबन्धकः—श्रीविष्णुपदभट्टाचार्य्यः बि. ए. ]

महतस्तमसः पारे पुरुषं ह्यतितेजसम्।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञानात्मने नमः॥

पञ्चत्रिंशदुत्तरत्रयोदशशततमवङ्गीयाब्दे शुभश्रीरभाद्रपदे परिष-च्छात्राणां श्रीमतां ज्ञानदाचरणशर्म्मभट्टाचार्य्याणामुत्साहेन नाम मात्रावसितायाः संस्कृतसाहित्यपरिषच्छात्रसमितेः पुनः प्रतिष्ठापनं सञ्जातम्। शाखाविशेषः खल्वियं परिषच्छात्रसमितिः संस्कृत-साहित्य-परिषदः। दश सदस्यान् समादाय प्रतिष्ठितेयमासीत् समितिः। अनाड़म्बरोपक्रमायां सकलच्छात्रजनहितैषिण्यामस्यां समित्यां सम्प्रति प्रायेण पञ्चाशत्संख्यकसदस्या विद्यन्ते।

आर्य्यगौरववाहिन्याः सुरसरस्वत्याः प्रचारेण समुन्नतिसम्पादन-न्तावदस्याः समितेर्मुख्यं लक्ष्यस्थानम्। परिषदा सह लक्ष्यैक्येऽपि

अपरञ्च किमपि वक्तव्यमस्ति ग्रन्थस्यास्य उपयोगातिरेकं द्रष्टु-मीहमानानाम् अस्माकम्। तथा च तृतीयखण्डान्ते विन्यस्तायां ग्रन्थनामसूचौ यदि Catalogus Catalogorum ग्रन्थे Aufrecht महोदयैरनुल्लिखितानां ग्रन्थानां नामपार्श्वे चिह्नं किमपि प्रदीयेत तथा प्राचीनतरा अन्यथा वा उपयोगमावहन्तो ग्रन्था सूच्यामेतस्यां चिह्नविशेषैरङ्किताः स्युस्तदा ग्रन्थमालोचयतां विशेषतः सौकर्य्यं स्यादिति विषयोऽयं सर्वथा विचारमर्हति सम्पादकमहाभागानाम्। एतदप्यत्र वक्तव्यम् यथा बडोदाप्रकाशितसूच्यामेवैवंविधालोचनसौकर्य्य-मुपलभामहे नान्यत्र कुत्रापि। एवं कृते उपयोगवतोऽस्य ग्रन्थस्योप-योगो वर्द्धततरामिति निःसंशयं वच इति शम्।

---

## संस्कृत-साहित्य-परिषच्छात्रसमितेः प्रथमवर्षीय-कार्य्यविवरणम्

[ निबन्धकः—श्रीविष्णुपदभट्टाचार्य्यः बि. ए. ]

महतस्तमसः पारे पुरुषं ह्यतितेजसम्।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञानात्मने नमः॥

पञ्चत्रिंशदुत्तरत्रयोदशशततमवङ्गीयाब्दे शुभसौरभाद्रपदे परिष-च्छात्राणां श्रीमतां ज्ञानदाचरणशर्मभट्टाचार्य्याणामुत्साहेन नाम मात्रावसितायाः संस्कृतसाहित्यपरिषच्छात्रसमितेः पुनः प्रतिष्ठापनं सञ्जातम्। शाखाविशेषः खल्वियं परिषच्छात्रसमितिः संस्कृत-साहित्य-परिषदः। दश सदस्यान् समादाय प्रतिष्ठितेयमासीत् समितिः। अनाड़म्बरोपक्रमायां सकलच्छात्रजनहितैषिण्यामस्यां समित्यां सम्प्रति प्रायेण पञ्चाशत्संख्यकसदस्या विद्यन्ते।

आर्य्यगौरववाहिन्याः सुरसरस्वत्याः प्रचारेण समुन्नतिसम्पादन-न्तावदस्याः समितेर्मुख्यं लक्ष्यस्थानम्। परिषदा सह लक्ष्यैक्येऽपि

किं तावदनया छात्त्रसमित्या प्रयोजनमिति चेदत्रोच्यते। वयोवृद्धानां विदुषां समवाये सुकुमारमतीनां जड़धियां छात्त्राणां वाणी न सम्यक् स्फुरति इति कृत्वा येन ते स्वच्छन्दं संस्कृतमालोचयितुं पारयेयु-स्तदर्थमेव प्रतिष्ठितेयं समितिः। स्वानुष्ठितायां समानवयोविद्यप्रायायां संसदि छात्त्राणां स्वाभिप्रायप्रकाशप्रयत्नो यथा सफलतां गाहते तथा भवति नो विद्वज्जनसमागमे। अथोऽस्याः समितेर्नियमावली दीयते—

१। परिषद्विद्यालयस्य सर्वे विद्यार्थिनो नियमेनास्याः समितेः सभ्यपदं गृह्णीयुः। २। विभिन्नविद्यालयाध्यापकैः स्वीयविद्यार्थितया विज्ञापितास्छात्त्रा अप्यस्याः समितेः सभ्यपदमर्हेयुः। ३। समितेरस्याः सभ्यपदग्रहणे किमपि शुल्कं नापेक्ष्येत। ४। समितेरस्या अधिवेशने निबन्धा व्याख्यानानि पारस्परिकसंवादाश्च संस्कृतवाचमेवोपजीवेयुः। ५। एतस्याः सम्बन्धिनो निबन्धादयः सर्वे एव विशेषतो विद्यार्थिना-मुपकारमनुरुध्येरन्।

प्रतिमासं समितेरस्याः साधारणाधिवेशनं भवति तत्र छात्त्रैः संस्कृतभाषया निबन्धा विरच्यन्ते पठ्यन्ते समालोच्यन्ते च। एवं प्रबन्धसमालोचनाविरचनादिना नूनं विवर्धतेतरां तेषां संस्कृतेषु ज्ञानम्। मासिकसभासु रघुवंशीयानां कुमारसम्भवस्थितानां रामायणमहाभारतगतानामन्येषामपि सुकविभाषितानां श्लोकानामावृत्ति-र्भवति। प्रचलति च कदाचित्तासु सभासु श्लोकविवादो यः किल अति हि नाम पुरातनः। एकेन समुच्चारितस्य श्लोकस्यान्त्यं व्यञ्जनं समादायान्येन तद्व्यञ्जनादिश्लोकोच्चारणं श्लोकविवादो नाम। आलोच्य-वर्षे द्वादशसंख्यकानि अधिवेशनानि जातानि। अधस्तादुल्लिख्य-माना निबन्धा अधःसमुल्लिख्यमानैश्छात्त्रैर्विरचिता वाचिताश्च। सुष्ठु समालोचिताश्च सदस्यैस्ते ते निबन्धाः।

| | प्रबन्धाः | रचयितारः |
|---|---|---|
| प्रथमाधिवेशने | छात्त्रसमितेः प्रयोजनम् | श्रीविष्णुपदभट्टाचार्य्यः |
| द्वितीयाधिवेशने | श्लोकविवादः | श्रीरामकृष्णचक्रवर्त्ती, एम्. ए. |

| | | |
|---|---|---|
| तृतीयाधिवेशने | युधिष्ठिरः स्वार्थपरो न वा | श्रीज्ञानदाचरणभट्टाचार्य्यः |
| | छात्राणां कर्त्तव्यम् | श्रीबङ्किमचन्द्र दासः, वि. ए. |
| चतुर्थाधिवेशने | उत्तररामचरिते शाकुन्तले च | |
| | स्त्रीशिक्षाया निदर्शनम् | श्रीअमरेन्द्रनाथमजुमदारः, वि. ए. |
| पञ्चमाधिवेशने | भवभूतिकालिदासयोः | |
| | प्रकृतिवर्णनम् | श्रीहरेन्द्रकुमारगङ्गोपाध्यायः |
| षष्ठाधिवेशने | कादम्बरीमहाश्वेते | श्रीअनादिनाथभट्टाचार्य्यः, वि. ए. |
| सप्तमाधिवेशने | वाणशैली | श्रीगौरीनाथभट्टाचार्य्यः |
| अष्टमाधिवेशने | शिक्षा | श्रीकालीपदभट्टाचार्य्यः |
| नवमाधिवेशने | माघः | श्रीहरेन्द्रकुमारगङ्गोपाध्यायः |
| दशमाधिवेशने | युधिष्ठिरचरितम् | श्रीबङ्किमचन्द्रव्याकरणतीर्थः |
| एकादशाधिवेशने | शिष्टाचारः | श्रीमहेन्द्रलाल साहा, वि. ए. |
| द्वादशाधिवेशने | माघकाव्यम् | श्रीहेमचन्द्रभट्टाचार्य्यः |

अस्याः समितेः कश्चिदभिनयविभागोऽप्यस्ति। आलोच्यवर्षे समिति-सदस्यैः परिषदाचार्य्याणां तत्रभवतां श्रीमत्कालीपदतर्काचार्य्याणां स्यमन्तकोद्धारः, भास्करकविकृतम् उन्मत्तराघवं ( रूपकमिदमनभिनीतपूर्वम् ) भासकृतं दूतघटोत्कचञ्चेति त्रीणि रूपकाणि निपुणमभिनीतानि। स्यमन्तकोद्धारे दारकभूमिकां समाश्रित्य रङ्गं प्रविष्टस्य श्रीमतो मधुसूदनचक्रवर्तिनः अभिनयचातुर्य्यचोरितचित्तैः माननीयसंस्कृतसाहित्यपरिषत्सम्पादकैः श्रीमदमरेश्वरठाकुरवेदान्तशास्त्रि (एम्.ए.पि. एच्. डि,) महोदयैः प्रीत्या तस्मै रौप्यपदकमेकं प्रदत्तम्।

छात्राणां सम्मिलितश्रम एव केवलं छात्रहितैषिणीं समितिमिमां सफलकामां विधातुं प्रभवतीति कृत्वा तेषां समवेतसहानुभूतिं सानुनयं प्रार्थयामहे। मन्यामहे विवर्धयिष्यन्ति ते तेषां स्वकीयामिमां समितिमित्यलं पल्लवितेन।

## परिषच्छात्रसमितिः

**वार्षिक-महोत्सव-विवरणम्**—व्यतीत-सौराश्विनमासस्य चतुर्दशमिति सोमवासरे सायं सार्द्धषष्ठहोरायां परिषच्छात्रसमितेः प्रथमवार्षिकमहोत्सवो महता समाडम्बरेण समाहितः समभवत्। तत्र समवेतानामुपरिष्टान्निवेदितनामानो महात्मानो विशेषेणो-ल्लेख्यतामवगाहन्ते,—महामहोपाध्याय-भागवतकुमारशास्त्री एम्.ए.पि. एइच्. डि, आदित्यनाथमुखोपाध्यायः एम्. ए. पि.एइच्. डि, सुनीति-कुमारचट्टोपाध्यायः एम्. ए. डि. लिट्, किरणचन्द्रदत्तः, क्षितीशचन्द्र-चट्टोपाध्याय (एम्. ए) प्रभृतयश्च। तत्रादौ वाणीवन्दनमिषेण श्रीमता सनत्कुमारचट्टोपाध्यायेनताललयसहकृतं किञ्चिद् गेयपदं गायता सभ्यानां मानसमुत्सुकमकारि। ततश्च तत्रभवता भागवतकुमार-शास्त्रिणा सभापतित्वे वृतास्तत्रभवन्त उपेन्द्रनाथघोषाल( एम्. ए. पि. एइच्, डि.) महोदयाः। एते महोदयाः कलिकाता-विश्वविद्यालये तथा कलिकाता-प्रेसिडेन्सिमहाविद्यालये च इतिहासाध्यापकतायां लब्धख्यातयो विद्वत्समाजेषु प्रख्यातिमापन्नाः। वृतेषु सभापतिषु समितेरन्यतरसम्पादकेन श्रीमता विष्णुपदभट्टाचार्य्येण पठितमासीत् वार्षिककार्य्यविवरणम्। अनेके विद्वांसः समयोपयोगिनं वाग्विस्तरं प्रस्तूय समन्वरञ्जयञ्चैव सभाजनानां मनांसि। सभापतयो भाग-वतकुमारशास्त्रिणश्च छात्रसमितेरधिवेशने विशिष्ट-प्रबन्धरचयित्रे छात्राय रौप्यपदकद्वयमङ्गीकृतवन्तः। अवसाने च छात्रैः स्वयमेव संक्षिप्य नवीनतयैव संस्कृतं मृच्छकटिकं नाम रूपकं प्रयुक्तम्, यस्य दर्शनेन समागताः सर्वे एवापामराः परां प्रीतिमाविरकार्षुः। गभीरतामधिगतायां रजन्यां सञ्जातायाञ्च रूपकाभिनयविरतौ, सभ्या-स्तद्गतचित्ता एव गृहं प्रति प्रतिनिवृत्ताः। इति शम्।

## संस्कृतपत्रिका-विमर्शनम्

**उद्यानपत्रिका**—मद्रदेशस्थ-ताञ्जोरान्तर्गत-तिरुवदिप्रान्तात् प्रकाशिता। अनया सञ्चिकया अस्याः पत्रिकाया द्वितीयं वर्षं पूर्णमभवदिति विदाङ्कुर्वन्तु प्रियपाठकाः। अस्या वार्षिकं मूल्यमतीव स्वल्पमेकं रूप्यकमतः कागदादिकं मुद्रणादिकं वा नातीव रमणीयम्। अत्र न केवलं 'विधिपरिच्छेदो' 'मेघसन्देशो' वा वर्त्तते परं 'देशभाषाध्यापकाः' 'अप्रशान्ति'रित्यादयोऽपि। 'देशभाषाध्यापकाः' इति निबन्धस्तु समीचीनतयैवोपन्यस्तः। भाषाद्वये लब्धप्रज्ञानां खलु भाषान्तरीकरणं शक्यं स्यात्, न केवलं देशभाषाप्रवीणानां न वा केवलम् आङ्गलभाषाविरुदभाजामिति तु अस्माकमपि मतम्। 'अप्रशान्ति' रिति निबन्धे तु सेपृटेम्बर-षष्ठदिनस्य हिन्दुपत्रिकायां लोकस्याप्रशान्तिमधिकृत्य क्वचित् केनचित् कृतस्योपन्यासस्यावेदनं प्रदत्तं समर्थितञ्च। आवेदनञ्चेदम्—"अप्रज्ञः, आत्मप्रज्ञः, ब्रह्मप्रज्ञ इति जीवस्य त्रयः प्रकाराः। स्थावरलोकोऽप्रज्ञः। पशव आत्मप्रज्ञाः। मनुष्यैस्तु ब्रह्मप्रज्ञैर्भवितव्यम्। य इमं प्रज्ञाविशेषमन्तरा वर्त्तते स आत्मनो जन्म तिर्य्यक्सदृशं कुर्वन् पशुप्रकृतितां दर्शयति। यदा मनुष्यो भगवतः सम्बन्धात् प्राच्यवत तदा लोकेऽप्रशान्तिः प्रावर्त्तत। सर्वे कर्मोपजीविनां क्लेशाः, जातिकुलावान्तरकलहाः, सर्वविधाश्चान्ये मतिभेदा मनुष्याणां भगवत्संसेवनविरहादेवोत्पन्ना भवन्ति।" वयमप्यत्रानेनैव 'अप्रशान्ति'रितिशीर्षकनिबन्धकारेण सह वदामः 'को नामास्मादुपन्यासकात् बुद्धिमत्तरं भाषेत ?'

**साहित्यसुधा**—पाटलीपुत्रान्तर्गत-राघवपुरात् प्रकाशमापन्ना। एकहायने वयसि वर्त्तमाना पद्यमयी देशभाषान्विता च।

'क्रमागतो वनितावियोग'स्तितीव करुणरसात्मकः सहृदयमनांसि द्रावयतीत्यत्र नास्ति सन्देहविन्दुरस्माकम्।

The Sanskrit College Magazine—पत्रिकायामस्यां त्रयो विभागा वर्त्तन्ते—संस्कृताङ्गल-वाङ्गलभेदेन। आङ्गलवाङ्गलयोरस्माकमनपेक्षा। संस्कृतांशस्य मुद्रणादिकं नासाधु। निबन्धाश्च भाषाचातुर्य्येण विषयगौरवेण चास्मानानन्दयति इति न। परमस्याः प्रतिवर्षं सकृदाविर्भाव इति न वयं तथा सन्तोषविशेषमनुभवामः, न वा संस्कृतविभागीयच्छात्राणामत्र सहयोगिता नास्तीत्यप्यस्मान् सन्तोषयति। यदुक्तमस्यां सम्पादकीये, "सामयिकं किमपी"ति निबन्धे, प्रवीणेनाध्यापकवर्य्येण—'क्षतभवितव्यता-देवता-नतिभिर्वा शक्तिचयं परिहरद्भिः श्रीहरिपादपद्मसमर्पितफलैः सर्वथा विरोधो हातव्य' इति। अस्य सारवत्तां विचारयन्तु भवन्तः साध्वसाधुविचारनिपुणाः प्रियपाठकाः।

---

## रसमञ्जरी

[ निबन्धकः—श्रीदक्षिणारञ्जन-शास्त्री एम्. ए ]

**छात्रप्रतिभा**—शिरोमणिर्विस्मयाकुलः क्षणं विचिन्त्य पुनरप्याह—माधव, सर्व्वज्ञो भवानिति मे प्रतिभाति। उच्यतामिदानीं को नाम कालिदासः, कीदृशं वा तस्य पाण्डित्यमिति। माधवेन तु नासिकाविकुञ्चनपुरःसरमुक्तं—नितरां संस्कृतानभिज्ञो देवानां प्रियः खलु कालिदासो यो मेघदूतस्य कर्त्ता। स खलु मूर्खो मेघदूतस्य प्रथम एव श्लोके विशेष्यविशेषणयोः समलिङ्गतामप्यजानन् 'कश्चित् कान्ता' इति प्रयुक्तवान्। धिक् तं वालिशाधमम्।

* * * * * *

शिरोमणिना विस्मितेनेवोक्तं—माधव, सर्वशास्त्रज्ञस्यापि ते व्याकरण एव समधिका व्युत्पत्तिरिति प्रतिभाति। उच्यतां तावदपवर्गे तृतीयेति पाणिनिसूत्रस्य को वा समीचीनो नवीनोऽर्थस्तव प्रतिभासमुद्भूत इति। माधवेन सदर्पेणेवोक्तं—तृतीया प्रकृतिर्नपुंसकः। तेनैव अपवर्गे—मोक्षे प्रयतितव्यम्। मिथुनधर्मे अशक्तत्वात्। स्त्रीपुंसलक्षणा व्यक्तिर्मैथुने शक्तत्वात् न मोक्षेऽधिकारिणी। नपुंसकानामेवापवर्गेऽधिकारः। स्त्रीणां पुंसाञ्च भोग एवाधिकारो नत्वपवर्गे इत्येव 'अपवर्गे तृतीयेति' सूत्रे भगवतः पाणिनेरभिप्राय इति।

* * * * * *

शिरोमणिर्विस्मयसागरमग्न इव पुनरप्यवदद् माधव, महीयसी खलु ते नवनवोन्मेषशालिनी बुद्धिरिदानीं ज्ञातुमिच्छामि नीतिशास्त्रे ते कीदृशं पाण्डित्यं जातमिति। श्रुत्वेतन्माधवो विहस्याह—यद्येवं तर्हि आगम्यतां मयैव सार्द्धम्। शिरोमणिरपि तूष्णीमेवानुससार गच्छन्तं तं माधवम्। अथ गच्छतोस्तयोः पथि काचित् षोड़शी सद्यः स्नाता आर्द्रसुचिक्कणवसना रूपलावण्यवती जलकलसमुद्वहन्ती गृहं प्रतिगच्छन्ती चावलोकिता। दृष्ट्वैव तां यवीयान् माधवस्तस्या वस्त्राञ्चलमाकृष्य विहस्याह भवति कस्य त्वम्? अथवा यस्य कस्य वा, आरोपय मामुत्सङ्गे यतस्तत्र ममैवाधिकार इति बलादुत्सङ्गमाश्रयितुं प्रवृत्ते तस्मिन्, शिरोमणिना अन्यैश्च पथिकैर्निवारितः प्रहृतश्चायं सदर्पमाह माधवः—किं न ज्ञायते भवद्भिर्नीतिकारवचनं "मातृवत् परदारेष्विति"? मातेयं मे षोड़शी। मातृक्रोडे कस्याधिकार इत्यपि भवद्भिर्न ज्ञायत इति अनैतिका एव भवन्त इति मन्यामहे।

* * * * * *

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| November 1929. | १८५१ शकाब्दे अग्रहायणे १२श-वर्षस्य ८म-संख्या | Vol. XII. No 7. |
|---|---|---|

## द्रविण-महिमा

[ निबन्धकः—श्रीलक्ष्मीनारायण-द्विवेदी ]

परिभ्रान्तो देशानगणिततुषारातपजलैः
श्रमैस्त्यक्ताहारावमतसुखनिद्रं विधिशतैः ।
उपार्ज्य द्रव्याणि त्वमसि मणिमालावलयिता
यदर्थं तत्कान्ते वितर मम हे मानमहिते ॥ १

मानमिच्छसि चेत्कान्त मा न त्वं धनमर्जयः ।
मानजुष्टो नरो लोके मानजुष्टो न जायते ॥ २

अयि रा इति नूनमद्भुतं त्वयि मुष्टौ सति पादयोर्जनः ।
निपतत्यथ निस्त्वदागतिं विगतिं हन्त्यनुकुक्कुरं परः ॥ ३

धनेन हीनं पुरुषं महान्तं गुणाकरं तूलसमं धुनन्ति ।
धनेन युक्तं व्यसनानुषक्तं दोषाकरं चन्द्र इति श्रयन्ति ॥ ४

धनेन हीनस्य गुणा जनस्य तृणन्ति पङ्कस्थ-सणस्य यद्वत् ।
गलग्रहार्थी अपरस्य वा स्युर्निपातनोत्पातकृते तथा स्युः ॥ ५

यातोऽहं धनिकानां भवनमवाप्तुं धनं किञ्चित् ।
हन्त मया न ज्ञातं पश्चाल्लग्ना ममासिद्धिः ॥ ६

त्वत्सन्निधौ देवि पदं सरोजायते विना त्वाञ्च क्षुरायते च ।
त्वया वने नन्दनगर्भलीला त्वामन्तरा चैत्ररथः श्मशानम् ॥ ७

धन्यासि प्रचुरव्ययाल्पनिचये ! निध्मापितान्याननि !
क्षुत्तृड्व्याधिसरोरुहाधिवसते ! निर्मुक्तमानांशुके ।
स्वान्तक्षीणनिजास्यगोमुमनसः क्षोणास्यसन्दर्शना-
व्यग्रे ! देवि ! दरिद्रते ! ग्रनिपदाम्भोजप्रिये दुर्ग्रहे ॥ ८

दुर्भाग्य ! त्वापनोत्तुं पदतलमयिता हन्त के न प्रदेशाः
केषां केषां कटूक्तिप्रहरणहतिभिर्जारितो वा न मानः ।
केषां वा साचिवीक्षाकुटिलितवदनं दृक्पथं न प्रयातो
हा ! हा ! त्वत्कारणान्मे हिततरमखिलं धर्मकर्मापि नष्टम् ॥ ९

निःस्वस्त्वेद्विहितः कुतो न निहितः कुत्रापि दुर्गे वने
मुग्धो वा न कृतः किमङ्ग वसतिर्देत्ता सरुद्धं पुरम् ।
चेतो वा तपसि न कारितमयै दैवस्य दुश्चेष्टितं
तत्तत्कारयते जनैरगतिभिर्यद् यत्र तैरिष्यते ॥ १०

धृतांशुके पाणितलेऽपि भूयो निवेशिताऽनुक्षणमोचिताऽपि ।
यच्चञ्चले वारविलासिनीव चञ्चुर्यसि तत्र नरस्य दोषः ॥ ११

यदर्थं हे लक्ष्मीस्त्वमसि कृतनिन्दा तमपदं
धिगास्तां सन्तोषं परजनिकरोषं गृह्णती ।
प्रसीदाम्ब स्वान्तं भजति न सुखं त्वामिह विना
तपो विद्या पूजा सकलमिव मोघो भवति च ॥ १२

---

## आतङ्कनिरसनम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—श्रीदुर्गाप्रसन्न-विद्याभूषणः ]

इत्यादि भीष्मवाक्यम्। याज्ञवल्क्यस्मृतौ च—

मात्स्य-हारिणकौरभ्र-शाकुनच्छागपार्षतैः।

एन-रौरव-वाराह-शाशैर्मांसैर्यथाक्रमम्।

मासवृद्ध्याभितृप्यन्ति दत्तैरिह पितामहाः॥

श्राद्धभोजिनो ब्राह्मणाश्च कथ्यन्ते याज्ञवल्क्यस्मृतौ—

अग्र्यः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद् युवा। इत्यादि

पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसम्पदः। इत्यन्तवचनजातैः।

मनुना च—

यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम्।

शाखान्तरमथाध्वर्युं छन्दोगन्तु समाप्तिकम्॥

एषामन्यतमो यस्य भुञ्जीत श्राद्धमर्चितः।

पितॄणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी॥ इति।

एतेषु च वचनजातेषु ब्राह्मणानां मत्स्य-मांसभोजनविधिर्दृश्यते, तत् कथं शास्त्रदृष्ट्यापि मत्स्य-मांसभोजनस्यावैधत्वमिति न जानीमः। नहि अवैध-मत्स्यमांसभोजनं शास्त्रसम्मतमिति मया पूर्वप्रबन्धेऽपि उक्तम्।

श्राद्धादौ यथाविधिनियुक्तस्य च ब्राह्मणस्य मांसाद्यभक्षणे दोषमाह मनुः। तथाहि,—

नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः।

स प्रेत्य पशुतां याति सम्भवानेकविंशतिम्॥ इति।

श्राद्धशेष-यज्ञशेष भोजनञ्च —

विघसाशी भवेन्नित्यं नित्यं वाऽमृतभोजनः ।
विघसो भुक्त-शेषस्तु यज्ञशेषं तथाऽमृतम् ॥

इति मनुना अवश्यकर्त्तव्यत्वेनाभिहितम् ।

यज्ञावशेषभोजनेन च सर्वपापक्षयः श्रूयते गीतोपनिषत्सु—

"यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ॥" इति ।

श्राद्धशेषभक्षणं तथा तदकरणे प्रत्यवायश्च स्मर्य्यते पितृदयितादिषु यथा—

श्राद्धं कृत्वा न मनुजो यो भुङ्क्ते पितृसेवितम् ।
वृथा तस्य भवेच्छ्राद्धं कर्त्ता च नरकं व्रजेत् ॥ इति ।

प्रागुक्तश्रुतिस्मृतिवचननिचयपर्य्यालोचनेन, वेदवेदानुगतशास्त्रशासनशासितानां गृहस्थानां मत्स्यमांसादिना श्राद्धदेवार्चनादिकं यज्ञञ्च विधाय तच्छेषभक्षणे न दोष इति प्राप्यते ; अतो यथाविधि शास्त्रोद्दिष्टमत्स्यमांसभक्षणं वैधमेवेति भूयोऽपि मया मुक्तकण्ठमुच्यते। यत्तु प्रतिवादकशास्त्रिमहोदयः—

यथा स्वात्मा परस्तद्वद् द्रष्टव्यः सुखमिच्छता ।
सुखदुःखानि तुल्यानि यथात्मनि तथापरे ॥इति याज्ञवल्क्यवचनं, तथा—

यस्तु मत्स्यानि मांसानि भक्षयित्वा प्रपद्यते ।
अष्टादशापराधञ्च कल्पयन्ति वसुन्धरे ॥"

इति वराहपुराणवचनम् उद्धृतवान्, तत्र प्रथमं याज्ञवल्क्यवचनं वैधहिंसेतरहिंसानिषेधात्मकम्, वैधहिंसायां तस्य सम्मतिदर्शनात् ।

द्वितीयन्तु वाराहवचनं हव्य-कव्याभ्यामन्यत्र शास्त्रनिर्दिष्टेतरमत्स्यमांसविषयम् इति मन्तव्यम्। अन्यथा शास्त्रिमहोदयेनापि प्रमाणरूपेणोद्धृत-महाभारतीय-शान्तिपर्वोक्तस्य "अभक्ष्या ब्राह्मणै-

मत्स्याः श्राद्धेर्ये वै विवर्जिता" इत्यादि वचनस्य तथा "नियुक्तश्च यथान्यायं यो मांसं नात्ति मानवः" इति प्रागुक्तमनुवचनानुपपत्तिः स्यात्। न चात्मसुखेच्छया कामकारेण जीवहननं मांसभक्षणं वा अनुमोदितमस्माभिः। अस्माभिस्तु यच्छास्त्रीयं तदेवानुमोदितम्। न च वाराहवचनं वैष्णवानां सर्वथा मत्स्यमांसभोजनेऽष्टादशापराध-बोधकमित्यपि वाच्यम्, हरिभक्तिविलासादिग्रन्थे वैष्णवानां तिथि-विशेषे मासविशेषे चामिषवर्जनदर्शनात्। यत्तु शास्त्रिमहोदयेन—

सुरां मत्स्यान् मधु मांसमासवं कृसरौदनम्।
धूर्त्तैः प्रवर्त्तितं ह्येतन्नैतद्वेदेषु कल्पितम्॥ इति।

महाभारतीयवचनेन मत्स्यमांसादीनां हव्यकव्यादौ नियोजनं धूर्त्तप्रवर्त्तितमित्युक्तं, तदपि न समीचीनम्। प्रकरणविशेषतयाऽन्याय-त्वात्तद्वचनस्य। अन्यथा श्रुतिस्मृतयो व्याकुप्येरन्। अपि च 'नैतद् वेदेषु कल्पित"मिति चतुर्थचरणस्य यथाश्रुतार्थाङ्गीकारे "अश्वमेधेन यजेत" "वायव्यां श्वेतच्छागलमालभेत" "चित्रया यजेत" "पशुना रुद्रं यजेत" इत्याद्याः श्रुतयः केषु कल्पिता इति किं शास्त्रिमहाशयं प्रष्टुं नार्हामः? वेदवाक्यानां चापौरुषेयत्वात् धूर्त्तप्रवर्त्तितत्वं कीदृश-मित्येतन्न जानीमः। धूर्त्तप्रवर्त्तितत्वे च यागादिविधीनां परम-धार्मिकाणामशेषशास्त्रतत्त्वार्थदर्शिनां युधिष्ठिरादीनां राजसूयाश्व-मेधादियज्ञेषु कुतः प्रवृत्तिः? जातायामपि प्रवृत्तौ किमर्थं वा सकलशास्त्रपारावारपारीणस्य धार्मिकधुरन्धरस्य भीष्मस्य न निवा-रणम्? किमर्थं वानुमोदितं भीष्मेण? इति किं न प्रष्टव्यो मया शास्त्रिमहोदयः?

अपि च वैदिकमतानुसारिणां निखिलपण्डितमण्डलीनां वैध-हिंसायां प्रवृत्तिदर्शनात् वैध-हिंसायां दोषाभावः सर्वथा लोकार्थः-सम्पादकशास्त्रिमहोदयेनापि। अवैध-पञ्चसूनाजनित दुरित-निवृत्तये

च गृहस्थानां पञ्चमहायज्ञरूपं प्रायश्चित्तमभिहितं शास्त्रकृद्भिः। तथा च मनुः—

पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः।
स गृहेऽपि वसन् नित्यं सूनादोषैर्न लिप्यते॥

गृहस्थैश्च तत्त्वमेव प्रतिपालितं दृश्यते, न हि अवैधहिंसायामस्ति केषामपि सम्मतिः। वैधहिंसायान्तु हिंसाभावतया शास्त्रकृद्भिर्निर्दिष्टत्वात् शिष्टानां प्रवृत्तिरस्ति, अभूत्, स्यास्यति च, नहि तच्छक्यं केनापि वारयितुम्। यत्तु—

"देवोपहारव्याजेन यज्ञव्याजेन येऽथवा।
घ्नन्ति जन्तून् गतप्राणान् घोरान्ते यान्ति दुर्गतिम्॥"

इति मनुस्मृतिरूपेणोद्धृतं सम्पादकमहोदयेन वचनं, तत्र पृच्छामि, गतप्राणानां हननं कीदृशम्? तद्धननेन वा घातकानां कथं दुर्गतिप्राप्तिः?

अहो मृतमारणे दोषस्तु कुत्रापि न श्रुतः। इदानीन्तु सम्पादकशास्त्रिमहोदयेन श्रावितः। सम्प्रति मया श्रीहर्षभाषया उच्यते—

"नवीनमश्रावि तवाननादिद"मिति। उपसंहारे च वक्तव्यं यच्छास्त्रेषु प्रवृत्तिनिवृत्त्युभयमार्ग एव प्रदर्शितः शास्त्रकृद्भिः। मया च पूर्वप्रबन्धे "न च निरामिषाशिनः प्रति किञ्चिद् वक्तव्यं केषाञ्चिदपि, प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफले"ति मन्वनुशासनादित्युक्तम्। तथापि जैनपत्रिकासम्पादकशास्त्रिमहोदयस्य ये मदीयप्रबन्धसन्दर्शनेन सातङ्काक्षेपाः ते नास्मान् विस्मापयन्ति, क्षिप्तानामातङ्कप्रसिद्धेः। इत्यलं बहुप्रलपितेन।

---

# मनोदूतम्

( पूर्वतोऽनुवृत्तम् )

श्रीचैतन्यदेवमातुल-कवीन्द्र-विष्णुदासविरचितम्

[ श्रीचिन्ताहरणकाव्यतीर्थ-(एम्-ए) सम्पादितम् ]

देव त्वदीयचरणाब्जमधुव्रतेषु
त्वत्कीर्त्ति-नामगुणगानदृढव्रतेषु ।
त्वन्यस्तजीवितधनेहितमानसेषु
प्रेमार्थ्यवृत्तिषु कदा नु चरीकरीमि ॥ ८६ ॥

जातस्य देव नि मेन मृतिर्भविची
को दूयतेऽत्र विधुरं पुनरेतदेव ।
अत्रापि जन्मनि तवाङ्घ्रिसरोजभक्ते-
र्गन्धेऽपि यन्न हि मया विहितोऽनुबन्धः ॥ ९० ॥

सिद्धिं वकोऽपि यदिमां तव तापकोऽपि
लेभे वकी च करुणामय देवकी च ।
तन्निग्रहोऽपि तव तावदनुग्रहोऽपि
तुल्यः परं क्रमपरं शरणं भजामि ॥ ९१ ॥

तापत्रयेण किमपि प्रतिहृत्य भारं
संमूर्च्छितेन परितः परितप्यमानः ।
अज्ञानगाढतिमिरेण यथान्वितोऽहं
लोकत्रयीमशरणः कति पर्य्यटामि ॥ ९२ ॥

---

**91.** a तापकी—D. d किम—I. ·क्रम—D.

**92.** a भारं—D. त्रुटितमेतत् I पुस्तके। ·हृत्य I, D. (magen), ·कृत्य—D. b परितः—I. महता—D. c यथा—I. तथा—D.

---

९०। मृतिर्मरणम् ।

च गृहस्थानां पञ्चमहायज्ञरूपं प्रायश्चित्तमभिहितं शास्त्रकृद्भिः। तथा च मनुः—

पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः।
स गृहेऽपि वसन् नित्यं सूनादोषैर्न लिप्यते॥

गृहस्थेषु तत्सर्वमेव प्रतिपालितं दृश्यते, न हि अवैधहिंसायामस्ति केषामपि सम्मतिः। वैधहिंसायान्तु हिंसाभावतया शास्त्रकृद्भिर्निर्दिष्टत्वात् शिष्टानां प्रवृत्तिरस्ति, अभूत्, स्थास्यति च, नहि तच्छक्यं केनापि वारयितुम्। यत्तु—

"देवोपहारव्याजेन यज्ञव्याजेन येऽथवा।
घ्नन्ति जन्तून् गतप्राणान् घोरान्ते यान्ति दुर्गतिम्॥"

इति मनुस्मृतिरूपेणोद्धृतं सम्पादकमहोदयेन वचनं, तत्र पृच्छामि, गतप्राणानां हननं कीदृशम्? तद्धननेन वा घातकानां कथं दुर्गतिप्राप्तिः?

अहो मृतमारणे दोषस्तु कुत्रापि न श्रुतः। इदानीन्तु सम्पादकशास्त्रिमहोदयेन श्रावितः। सम्प्रति मया श्रीहर्षभाषया उच्यते—

"नवीनमश्रावि तवाननादिद"मिति। उपसंहारे च वक्तव्यं यच्छास्त्रेषु प्रवृत्तिनिवृत्त्युभयमार्ग एव प्रदर्शितः शास्त्रकृद्भिः। मया च पूर्वप्रबन्धे "न च निरामिषाशिनः प्रति किञ्चिद् वक्तव्यं केषाञ्चिदपि, प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफले"ति मन्वनुशासनादित्युक्तम्। तथापि जैनपत्रिकासम्पादकशास्त्रिमहोदयस्य ये मदीयप्रबन्धखण्डनेन सातङ्काक्षेपाः ते नास्मान् विस्मापयन्ति, क्षिप्तानामातङ्कप्रसिद्धेः। इत्यलं बहुप्रलपितेन।

---

# मनोदूतम्

( पूर्वतोऽनुवृत्तम् )

श्रीचैतन्यदेवमातुल-कवीन्द्र-विष्णुदासविरचितम्

[ श्रीचिन्ताहरणकाव्यतीर्थ-(एम्-ए) सम्पादितम् ]

देव त्वदीयचरणाब्जमधुव्रतेषु
त्वत्कीर्त्ति-नामगुणगानदृढव्रतेषु ।
त्वन्यस्तजीवितधनेहितमानसेषु
प्रेमार्थिवृत्तिषु कदा नु चरीकरोमि ॥ ८९ ॥

जातस्य देव नि मेन मृतिर्भवित्री
को दूयतेऽत्र विधुरं पुनरेतदेव ।
अत्रापि जन्मनि तवाङ्घ्रिसरोजभक्ते-
र्गन्धेऽपि यन्न हि मया विहितोऽनुबन्धः ॥ ९० ॥

सिद्धिं वकोऽपि यदिमां तव तापकोऽपि
लेभे वकी च करुणामय देवकी च ।
तन्निग्रहोऽपि तव तावदनुग्रहोऽपि
तुल्यः परं कमपरं शरणं भजामि ॥ ९१ ॥

तापत्रयेण किमपि प्रतिहृत्य भारं
संमूर्च्छितेन परितः परितप्यमानः ।
अज्ञानगाढतिमिरेण यथान्वितोऽहं
लोकत्रयीमशरणः कति पर्य्यटामि ॥ ९२ ॥

---

**91.** a तापकी—D. d किम—I. ·कम—D.

**92.** a भारं—D. त्रुटितमेतत् I पुस्तके । ·हृत्य I, D. (magen), ·क्षत्य—D. b परितः—I. महता—D. c यथा—I. तथा—D.

---

९० । मृतिर्मरणम् ।

दष्टोऽस्मि कालभुजगेन किमप्यपार-
संसारघामरदवानलदह्यमानः ।
निर्वामि तामरसनाभ कदा त्वदङ्घ्रि-
लीलाकथामृतमहातटिनीप्रवाहे ॥ ९३ ॥

तमस्य पादनखनिर्जितशारदेन्दु-
दीनस्य नीरधिसुतामुकुटाङ्किताङ्घ्रिः ।
अन्धस्य सिद्धिमयमञ्जनमार्त्तबन्धो
तस्मात् त्वमेव जगदेकपतिर्गतिर्मे ॥ ९४ ॥

किं वा त्वयातिपतितेन समुद्धृतेने-
त्यस्मात् कृपानिलय मा स्म सुपेक्षतां माम् ।
एवं न ते क्षतिरहं चरितार्थ एत-
दस्त्युत्तममस्ति पतितोद्धरणे यशोऽपि ॥ ९५ ॥

एवं सुदुर्गममपारकृपार्णवाय
पीताम्बराय विनिवेदयतस्तवास्ताम् ।
तस्याङ्घ्रिपङ्करुहि कुम्भसमुद्भवस्य
क्षेमा मुनेरिव मनो दिशि दक्षिणस्याम् ॥ ९६ ॥

---

94. b -मार्त्त D. -मार्त्ति—I.
96. a सुदुर्गमम—I. सुदुर्धर D.

क्षुद्रं गतं परिगृहीतमहाजनो नु
गृह्णातु देव इति मानस मास्म वादीः।
अम्भःप्रवाहनिवहाश्रयतां गतोऽपि
वारांनिधिस्तुहिनबिन्दुमुपेक्षते किम् ॥ ९७ ॥

तत्राच्युते निरतिरिक्तसुखैकसद्म-
न्युत्कण्ठितं व्रज न मानस मां विनैव।
स्थैर्य्यं पुनस्तव तथा द्रढिमानमाप्ते
जानीहि तावदचिरेण गतिर्ममैव ॥ ९८ ॥

किं जल्पितेन बहुना तव तावदास्तां
वैशत्यमात्ममपकैतवमाचता च।
चेतस्ततस्त्वयि तदङ्घ्रिपरे परेशः
सत्यं निवत्स्यति सुखं स्वयमेव देवः ॥ ९९ ॥

चेतस्त्वया सुरहरः परितस्तनूज-
कूपान्तरालविलसज्जगदण्डकोटिः।
निर्व्याजमुह्यत इतः परमाणुना चेत्
ख्यातं ततस्तव यशः सुखिनो वयञ्च ॥ १०० ॥

---

**97.** a गतः—*D.* क्षतः हृतः इति परिशोधितम्—*D.*

**99.** d निवत्स्यति—*I.* निरस्यति—*D.*

**100.** c -मुद्यत—*D.* -मुह्यत—*I.* d इत—*D.* वय—*I.*

---

९९। वैशत्यमात्मम्—विशती भावः वैशत्यम् आविश इत्यर्थः।

१००। तनूजकूप लोमकूपः। परमाणुना इति, मनसोऽणुपरिमाणत्वं प्रसिद्धम्।

बन्धुस्त्वमेव हृदयार्थ्यपथं प्रपन्नं
सत्यं रिपुर्विपथगामितया त्वमेव ।
तत् कातरे मयि विधेहि कृपां यदेत-
दुक्तं कुरुष्व सुरवैरिपदे रमस्व ॥ १०१ ॥

इति श्रीविष्णुदासकवीन्द्रविरचितमनोदूतकाव्यं समाप्तम् ॥

---

1. एतदूर्द्ध्वं D पुस्तकेऽनन्तरं श्लोकद्वयं परिदृश्यते—
ऋत्वष्टकालेन्दुमिते शकाब्दे प्रणम्य भक्त्या हरिपादपद्मम् ।
मासे तपस्ये तपनात्मजाहेऽलेखीददः काव्यमरागहेतुम् ॥
श्रीकृष्णचरणे भक्तिर्मतिस्तत्प्रतिपादके ।
ग्रन्थे यस्य दिवारात्रं स मनुष्य इति भ्रमः ॥

---

१०१ । आर्य्यपथं सत्पथं प्रपन्नं सत् त्वमेव बन्धुः ।

---

## अभिज्ञानशकुन्तले अभिनवतरस्य द्वापरस्य प्रतमः कृतान्तः

[ निबन्धकः—टि रामकृष्णः (विद्यार्थी) ]

अयि भो महाभागा विवेकचतुराः पण्डितप्रकाण्डाः परिषत्पारिषद्याः सहृदयधुरीणाः ! वयमिदानीं प्रतिमासमिव सोत्कण्ठं सादरं च मासिकीम् इमां परिषत्पत्रिकाम् अवालोकिष्महि । अविन्दामहि च प्रत्यवसरमिवानन्दसन्दोहम् । तत्र "अभिज्ञानशकुन्तले अभिनवतरो द्वापरः" इति शीर्षको लेखो व्यलोकि । लेखे

च तस्मिन् वर्णितं शाकुन्तलस्य बहुमानं प्रेक्ष्य विशेषतश्च तत्र निहितादरा वयं भृशं समतुष्याम। तत्र च लेखे लेखकमहाशयेन द्वौ संशयौ अवतारितौ। किन्तु 'अभिनवतरो द्वापरः' इति शीर्षे तरबघटितम् अभिनवपदमेव न हृदयङ्गमम्। यतः एतद्विषयद्वयमपि प्राचीनैश्चर्चितचरमिति अभिनवत्वमेव न सिध्यति, कुतः पुनरभिनवतरत्वम्? एवमेव 'ईदृशसंशयनवावतारः' इत्यत्र नवपदमपि न स्वदते। विचारितौ हि अभिनवतरे व्याख्याने (साराखादिनीनामनि) मञ्जूषायां च संशयाविमौ।

अभिनवे व्याख्याने प्रथमः प्रश्नः समाहितः। द्वितीयश्च विस्तरेण विचार्य मञ्जूषायां समाहितः। परन्तु अनवलोकिताभिनवव्याख्यानानाम् अदृष्टमञ्जूषाभिधनिबन्धमूर्धन्यानाम् अनुत्पन्नैतत्संशयानाञ्चायं द्वापरो नूनमभिनव एव भायात्। मन्ये लेखकमहाशय ईदृशानुद्दिश्यैव प्रायुङ्क्त पदं तादृशमिति वयन्तु संशयितार इव अनधिगतमञ्जूषादीनेवोद्दिश्य तत्प्रश्नस्य समाधिं सम्प्रति सम्प्रदातुं सम्प्रवर्तामहे, अत्र दीयमानः समाधिः सहृदयानां चेतः समुल्लासयताम्। अथ अवतरेम प्रस्तुतां सरणिम्।

(प्रथमसंशयस्य उत्तरम्)

यद्यपि सार्वभौमो राजा दुषन्तो विदितवृत्तान्तः किंवदन्त्या काश्यपो नैष्ठिको ब्रह्मचारीति, तथापि 'इदानीमेव दुहितरं शकुन्तलामतिथिसत्कारायादिश्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः' इति वैखानसवाक्यश्रवणेन 'त्वत्तोऽपि तातकाश्यपस्य' इति सखीवाक्यश्रवणेन च किमस्य मुनेर्नित्यब्रह्मचारित्वं भग्नं, गार्हस्थ्यमवलम्बितं वा इति सम्भावयता राज्ञा, पूर्वमाशंसितम् 'अपि नामेयमसवर्णक्षेत्रसम्भवा स्यात्' इति। वर्णोत्तमानां हि वर्णान्तरेषु दारपरिग्रहो अभ्यनुज्ञातः इत्यपरोक्षोऽयमर्थो धर्मशास्त्रज्ञानाम्। लोकप्रसिद्धमपेक्षया, तच्छिष्याणां तत्सुतायाः सखीनां च सूनृतवादिनां आजन्मनः

शास्त्रमशिक्षितानां हि वचनं प्रबलतरं प्रमाणमिति को वाऽभिरूपो नाभ्युपैति ? पूर्वं नैष्ठिकब्रह्मचारिणोऽपि स्याच्चेत् तस्य आश्रमान्तरपरिग्रहः किं नाम लोकस्तं विजानीयात् ? नहि सर्वेऽपि मुनयो मनसः प्रणिरोद्धारो भवन्ति इति शक्यते निर्विकल्पं निश्चेतुम्। किं वा न शक्यते भवितुं परिगृहीतदारैरपि वसिष्ठादिवत् संयतान्तःकरणैर्मुनिभिः ? कति वा मुनिपुङ्गवाः परमे तपसि वर्तमानाः सन्तः परित्यज्याप्युग्रं तपः पर्याटुः पामरगोचरे वैषयिकव्यापारे। परन्तु लोकः परमार्थतः परमे ब्रह्मणि तिष्ठति काश्यप इत्येव विश्वस्यात्।

उत्तरत्र च 'तत्रभवानि'त्यादिना तत्त्वमवबुभुत्सुना भूभुजा दुष्मन्तेन "नैष्ठिको ब्रह्मचारी तत्रभवान् काश्यप इति हि प्रकाशम्, अथ कथमियं तदात्मजा" इति लोकप्रसिद्धिमादायैव प्रष्टव्यमासीत्। न खल्वेतावताऽवनिपतेर्वाक्येषु पूर्वापरविरोधः प्रसज्यते। पूर्वं भग्नं ब्रह्मचर्यमिति सम्भावयता 'अपि नामे'त्यादिना उक्तम्, इदानीन्तु सखीसमक्षं लोकप्रसिद्धिमादाय 'तत्रभवानि'त्याद्युच्यते। "किं प्रख्यातब्रह्मचर्यः काश्यपः परितत्याज ब्रह्मचर्यं, यत इयं तदात्मजेति श्रूयते" इत्येवंरूपः प्रश्नः सार्वभौमस्य राज्ञः कवीनां च विदितलौकिकसमुदाचाराणां विशेषतो महामतेः कालिदासस्य अननुगुण इति न तथानुयुक्तम्।

किं चात्र ब्रह्मणि स्थित इति ब्रूते न पुनस्तिष्ठतीति ; अतोऽपि प्रतीयते, पूर्वं स्थित इति प्रकाशं, इदानीं युष्मद्वचनात्तु संशये इति ; तथा च तत्त्वावजिगमिषया प्रवृत्तत्वात् अनुसृत्य लोकप्रसिद्धिमुक्तवानेवमिति न कश्चिदत्र संशयावतार इत्येवं समाहितः संशयः प्रथमः।

( अथ द्वितीयं समादध्मः )

द्वितीये हि प्रश्ने, भार्याविहीनस्य कण्वस्य कथमग्निहोत्रहोमः प्रसज्यते इति पृच्छ्यते। प्रसज्यत एवेति वदामः, भार्याविहीनस्यापि अग्निहोत्रस्य विधानात्। अत एव भीष्मोऽपि अग्निहोत्रमाचरिष्टेति

श्रूयते। ऊर्ध्वरेताः खलु पित्रर्थं गृहीतभीषणव्रतभूषणः अन्वर्थ-नामा भीष्मः।

'ऋते शान्तनवात् भीष्मात् न पश्याम्यूर्ध्वरेतसः।'

इति हि प्रशस्यतेऽसौ भारते। भीष्मोऽग्निहोत्रमन्वतिष्ठत् इत्यत्र प्रमाणं किमिति चेत्,—

"महता राजयोगेन परिवारेण संवृतः।

स्तूयमानो महातेजाः भीष्मस्याग्नीननुव्रजन्।

प्राप्तोऽस्मि समये राजन् अग्नीनादाय ते विभो॥"

इत्यजातशत्रोर्वचनमेव प्रमाणत्वेन स्वीकुर्मः।

अत्र च बहुवचनेन त्रयोऽग्नयः अवश्यं स्वीकार्याः। क्वायं विधिः यो नाम पत्नीरहितस्याप्यग्निहोत्रं विधत्ते? बह्वृचब्राह्मणमत्र प्रमाणमुदाहरामः। तत्र हि "अपत्नीकोऽग्निहोत्रमाहरेत् नाहरेत्" इति विचार्य, आहरेदित्याहुरिति सिद्धान्तितम्। अनन्तरं च तदननु-ष्ठाने प्रत्यवायोऽपि श्रूयते 'यदि नाहरेदनद्धा पूरुषः स्या'दिति। अद्धा सत्यम् अनद्धा तद्विपरीतमसत्यम्, अग्निहोत्राननुष्ठाने असत्यो भवे-दित्यर्थः। असत्यत्वं स्वयमेव प्रतिपादयति श्रुतिः प्रश्नोत्तराभ्याम् "कोऽनद्धा पुरुषः? न देवान् न पितॄन् न मनुष्यान्" इति। अत्र पूजयेदिति शेषः, यतोऽयमृणत्रयमपाकर्तुमुत्पन्नः अतोऽग्निहोत्रा-ननुष्ठाने असत्यो भवतीति भावः। मुच्यते हि देवर्णात् अग्निहोत्रेण, ततश्च आहरेदित्याहुरिति सिद्धान्तितमर्थम् उपसंहरति ब्राह्मणम्— 'तस्मादपत्नीकोऽप्यग्निमाहरेत्' इति, नन्वितोऽपि स्पष्टमवगम्यते नैष्ठिकस्याप्यग्निहोत्रे वर्ततेऽधिकार इति।

ननु "पत्नीवदस्य अग्निहोत्रं भवति" इत्यादिवचनमवलम्ब-मानानाम् अस्माकं निरुक्ता श्रुतिर्विरुध्यते इति चेत्, अस्य वचनस्य सन्निहितपत्नीकविषयत्वमभ्युपगम्य वयं विरोधमिममुपरुन्ध्मः, तथा च रुद्रदत्तः—अग्निहोत्रं पत्नीवत् सन्निहितपत्नीकमिति अत एव

शास्त्रमशिक्षितानां हि वचनं प्रबलतरं प्रमाणमिति को वाऽभि-रूपो नाभ्युपैति ? पूर्वं नैष्ठिकब्रह्मचारिणोऽपि स्याच्चेत् तस्य आश्रमान्तरपरिग्रहः किं नाम लोकस्तं विजानीयात् ? नहि सर्वेऽपि मुनयो मनसः प्रणिरोद्धारो भवन्ति इति शक्यते निर्विकल्पं निश्चेतुम्। किं वा न शक्यते भवितुं परिगृहीतदारैरपि वसिष्ठादिवत् संयतान्तः-करणैमुनिभिः ? कति वा मुनिपुङ्गवाः परमे तपसि वर्तमानाः सन्तः परित्यज्याप्युग्रं तपः पर्याटुः पामरगोचरे वैषयिकव्यापारे। परन्तु लोकः परमार्थतः परमे ब्रह्मणि तिष्ठति काश्यप इत्येव विश्वस्यात्।

उत्तरत्र च 'तत्रभवानि'त्यादिना तत्त्वमवबुभुत्सुना भूभुजा दुष्मन्तेन "नैष्ठिको ब्रह्मचारी तत्रभवान् काश्यप इति हि प्रकाशम्, अथ कथमियं तदात्मजा" इति लोकप्रसिद्धिमादायैव प्रष्टव्यमासीत्। न खल्वेतावताऽवनिपतेर्वाक्येषु पूर्वापरविरोधः प्रसज्यते। पूर्वं भग्नं ब्रह्मचर्यमिति सम्भावयता 'अपि नामे'त्यादिना उक्तम्, इदानीन्तु सखीसमक्षं लोकप्रसिद्धिमादाय 'तत्रभवानि'त्याद्युच्यते। "किं प्रख्यातब्रह्मचर्यः काश्यपः परितत्याज ब्रह्मचर्यं, यन इयं तदात्मजेति श्रूयते" इत्येवंरूपः प्रश्नः सार्वभौमस्य राज्ञः कवीनां च विदितलौकिकसमुदाचाराणां विशेषतो महामतेः कालिदासस्य अननुगुण इति न तथानुयुक्तम्।

किं चात्र ब्रह्मणि स्थित इति ब्रूते न पुनस्तिष्ठतीति ; अतोऽपि प्रतीयते, पूर्वं स्थित इति प्रकाशं, इदानीं युष्मद्वचनात्तु संशये इति ; तथा च तत्त्वावजिगमिषया प्रवृत्तत्वात् अनुसृत्य लोकप्रसिद्धिमुक्तवानेवमिति न कश्चिदत्र संशयावतार इत्येवं समाहितः संशयः प्रथमः।

( अथ द्वितीयं समादध्मः )

द्वितीये हि प्रश्ने, भार्याविहीनस्य कण्वस्य कथमग्निहोत्रहोमः प्रसज्यते इति पृच्छ्यते। प्रसज्यत एवेति वदामः, भार्याविहीनस्यापि अग्निहोत्रस्य विधानात्। अत एव भीष्मोऽपि अग्निहोत्रमाचरिष्टेति

श्रूयते। ऊर्द्धरेता: खलु पित्रर्थं गृहीतभीषणव्रतभूषण: अन्वर्थ-नामा भीष्म:।

'ऋते शान्तनवात् भीष्मात् न पश्याम्यूर्द्धरेतस:।'

इति हि प्रशस्यतेऽसौ भारते। भीष्मोऽग्निहोत्रमन्वतिष्ठत् इत्यत्र प्रमाणं किमिति चेत्,—

"महता राजयोगेन परिवारेण संवृत:।
स्तूयमानो महातेजा: भीष्मस्याग्नीननुव्रजन्।
प्राप्तोऽस्मि समये राजन् अग्नीनादाय ते विभो॥"

इत्यजातशत्रोर्वचनमेव प्रमाणत्वेन स्वीकुर्म:।

अत्र च बहुवचनेन त्रयोऽग्नय: अवश्यं स्वीकार्या:। क्वायं विधि: यो नाम पत्नीरहितस्याप्यग्निहोत्रं विधत्ते? बह्वृचब्राह्मणमत्र प्रमाणमुदाहराम:। तत्र हि "अपत्नीकोऽग्निहोत्रमाहरेत् नाहरेत्" इति विचार्य, आहरेदित्याहुरिति सिद्धान्तितम्। अनन्तरं च तदननुष्ठाने प्रत्यवायोऽपि श्रूयते 'यदि नाहरेदनद्धा पूरुष: स्या'दिति। अद्धा सत्यम् अनद्धा तद्विपरीतमसत्यम्, अग्निहोत्राननुष्ठाने असत्यो भवेदित्यर्थ:। असत्यत्वं स्वयमेव प्रतिपादयति श्रुति: प्रश्नोत्तराभ्याम् "कोऽनद्धा पुरुष:? न देवान् न पितॄन् न मनुष्यान्" इति। अत्र पूजयेदिति शेष:, यतोऽयमृणत्रयमपाकर्तुमुत्पन्न: अतोऽग्निहोत्राननुष्ठाने असत्यो भवतीति भाव:। मुच्यते हि देवर्णात् अग्निहोत्रेण, ततश्च आहरेदित्याहुरिति सिद्धान्तितमर्थम् उपसंहरति ब्राह्मणम्—'तस्मादपत्नीकोऽप्यग्निमाहरेत्' इति, नन्वितोऽपि स्पष्टमवगम्यते नैष्ठिकस्याप्यग्निहोत्रे वर्ततेऽधिकार इति।

ननु "पत्नीवदस्य अग्निहोत्रं भवति" इत्यादिवचनमवलम्बमानानाम् अस्माकं निरुक्ता श्रुतिर्विरुध्यते इति चेत्, अस्य वचनस्य सन्निहितपत्नीकविषयत्वमभ्युपगम्य वयं विरोधमिममुपरुन्ध्म:, तथा च रुद्रदत्त:—अग्निहोत्रं पत्नीवत् सन्निहितपत्नीकमिति अत एव

"या यजमानस्य पत्नी"—इत्यापस्तम्बसूत्रे अविद्यमानायाम् इति प्रतीकमुपादाय 'अनालंभुकत्वादिना निमित्तेन असन्निहितायाम्, अभावे च अविशेषात् इति व्याचक्षाणो विद्यारण्योऽप्यस्माकमनुकूलः। किञ्च "व्रीहियवपश्वाज्यकपालपत्नीसम्बन्धानि" इति प्रसिद्धाङ्ग-समभिव्याहारेण, पत्न्या अप्यङ्गत्वेन तदभावेऽप्यग्निहोत्रमनुष्ठातव्य-मेव, नह्येकमङ्गं नास्तीति प्रधानमुचितं प्रहातुं, यद्यपि दम्पत्योः सहाधिकार इति न्यायेन सत्याः पत्न्याः प्राधान्यं बोध्यते, अथापि न यजमानान्मुख्यत्वम्। "यदुक्तमाशी ब्रह्मचर्यं तन्न पत्न्याः अतुल्यत्वात्" इति किल जैमिनीयं सूत्रम्, अत एव—"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्" इति वचनस्याप्यैककण्ठ्यं प्रेक्षामहे, यतः कण्वादयः अग्निहोत्रानुष्ठानेन देवर्णं, तपोबलेन मानसपुत्रेण वा पितृर्णं चापाकुर्वत इति, मानसपुत्रस्य सद्भावादेव गर्गादिभ्यो गोत्रे, पाणि-नीये सूत्रे गणे कण्वशब्दपाठः सङ्गच्छते।

परन्तु इदानीन्तनानामस्माकं न तदनुष्ठानं समीचीनम्। तादृश-शिष्टाचाराभावात्। ये किल ऊर्द्ध्वरेतस्त्वादिगुणगणमण्डिताः तेषा-मेवापत्नीकानामत्र (अद्यापि) अधिकारम् अभिप्रयन्ति आगमरहस्य-वेदिनः। तथैव शिष्टतमानां पूर्वेषामनुष्ठानस्य दृष्टचरत्वात्। तदाहतु रुद्रदत्तविद्यारण्यौ "आचारोऽप्यत्र दृष्टः शिष्टतमानां पूर्वेषां" यथा कण्वविभाण्डकभीष्मादीनां, यथा च भगवतो दाशरथेः इति।

सन्ततनिष्यन्दमानसुधास्रोतःप्रस्रवणे, सुकृतिलभ्य-(विषय) मुक्ता-मणौ, सदाचार्यसमीरणसमुज्जृम्भितोपदेशवीचीध्वनिपरम्परामुखरिते, सहृदयसुधाकरसन्दर्शनसमुल्लासिते, सुधावर्षिसुधीमणिसलिलवाह-संसेविते, इतिहासादिदेशान्तरसमाहृतरसवदर्थमुक्ताफलसङ्कुलसुभा-षितमहापोत-(ship) समावृतसाहित्यग्रन्थावतारस्थले, कालिदास-समरनिर्मिते, शाकुन्तलरत्नाकरे गाहं गाहं मुक्तामणीनादातुम् अभिलषन्तो रसिकमतिनावमारुह्य शब्दार्थसम्बन्धौचितीमेव कञ्चुक-

मामुद्धरन्तः स्वप्रतिभाकौशलेन विमलेन महादर्पणेन, विवेकाख्य-चक्षुर्विषयीकृतशुक्तिका आसाद्य मुक्तामणीन् स्वकृतिष्वेवापणेषु प्रसार्य तान् श्रेष्ठिन इव परेषां तत्र रुचिं समधिकां समुत्पादयन्तः, सकृतज्ञताकं सशिरःकम्पञ्च संस्तावनमेव संगृह्य मूल्यमनर्घान् मणीन् विक्रीणन्तः परापरतत्त्वज्ञा विवेचनचुञ्चवः प्राचीनालङ्कारिकाः काव्य-प्रकाशकारादयः अयस्कान्तेनेव लोहधातुः शाकुन्तलेन समावर्जित-चेतसः शास्त्रविरुद्धाख्यं दोषं नात्र रूपकमणौ निरूपयामासुः, किमिता-दृशा महामहिमानो दोषमिमं न जानत इत्यपि पारयामो वक्तुम्।

तदस्य द्वापरद्वयस्य मञ्जूषाद्युक्तमेव समाधिमुपहारीकृत्य प्रेक्ष-काणामध्यक्षं निवृत्तहृदया वयं लेखन्यै विश्रामावकाशं दातुमभि-लषाम इति।

---

## शकुलकथकम्

[ निबन्धकः—श्रीकानाइलालपञ्चतीर्थः ]

( पूर्वाभासः )

कृष्णः[1] कश्चित् कृपणशकुलो लब्धकायः स्वरोका-
देकाकित्वाद्विकृतमतिकः कान्तकूपान्तरौकाः।
आकाशं स्वं हृदयमथवा वासभित्तिं प्रतीत्य
साक्षित्वेऽपि स्वचरितचयस्याख्यदात्मेतिवृत्तम्॥ १

किं त्वं बन्धो! मम कुचरितं प्रष्टुमिच्छुः कुजाते-
र्भूयः पश्यस्यशुभवदनं मां प्रभाते प्रभाते।

(१) कृष्णः शकुलः "उल्का" इति ख्यातो विड्भोजी मत्स्यः एकाकित्वा-दिति विकृतमतित्वे वास्तवो हेतुरवास्तवस्तु वक्ष्यमाणः।

मत्या हीनं मृतमिव सुखैर्वञ्चितं दुर्नियत्या
त्वं संवित्स्यामरमपि न मां निर्निमेषं प्रकृत्या ॥ २
जानीहि त्वं स्वजनरहितं मां न भेकं सगर्वं
जातो दीर्घे सरसि यदहं वेद्मि वासं न सर्वम् ।
गोत्रं यद्धि द्विजपदयुतं विप्रसाम्यादवध्यं
तज्जं विद्धि प्रकृतिनियताङ्गच्छदोषादमेध्यम् ॥ ३
आद्यं दोषं शमयितुमहं कूपनिःक्षेपयित्वा
नीरैकान्तस्थिरविरहितो येन मात्राथ पित्रा !
निन्द्यो वन्द्यः किमुत स इतीहास्य कार्यो विचारः
श्रोता वार्त्तां व्रतिन इव मे यो गलद्वाष्पधारः ॥ ४
मात्स्यः कल्पो नरगणनया पञ्चषाब्दावसानो
नेयद्दीर्घायुरपि गणयाम्यात्मनो यद्विहीनः ।
किं मे तौ तत्सरसि पितरावन्वितोऽद्यापि शोक-
शुष्के गेहे किमुत भजतो धीवराद्वान्यलोकम् ॥ ५
ईर्ष्यामर्षाविरहितमृषाभाषिणो नीचजाति-
र्विष्ठादुष्टास्य-गलितकथाकर्णनीया नवा ते ।
इत्यज्ञात्वापि लपितुमिमामाकुलं मेऽधुना हृत्
रिक्तः शोकाद् यदिह भविता निर्विलापो न कश्चित् ॥ ६
सुप्रातास्तेऽदधत दिवसाः सूर्य्यसोमोदयास्ते
ओतप्रोता जगति सुषमा काचिदासीत् समस्ते ।
राकाभिन्नाभुवि सितनिशा वेद्मरसिद्धास्तदानी-
मास्याम्याशा अनिशमवहन्नुत्सवोल्लासितानि ॥ ७

---

(२) यतो नाहं मृतामरयोरन्यतरस्तस्माज्जिज्ञासुतयैव मुहुर्वदननिरीक्षणं सङ्गतं, स्वाभाविकञ्च सद्यो निद्रोत्थितस्याकाशादिसन्दर्शनमित्यर्थः ।

तत्र प्रेष्ठे सरसि नभसोवाम्बरच्छन्द्रिकायां
हासज्योत्स्नां शशिनि वदनं चन्द्रमम्बूर्मिकायाम् ।
पर्य्यस्कुर्वन्नफलममलाङ्गानि वामास्तदानीं
सञ्जानोऽहं यदवधि निजां वच्मि चातीतवाणीम् ॥ ८

सद्यो दृष्ट्या सह मम यदा चेतना प्रादुरासीद्
यद्वन्निःसारितजवनिकाभ्यन्तराद् दृश्यराशिः ।
व्यक्तो युक्तः कृपणधनिभिद्रीक् तदा सत्त्वसङ्घै-
र्भूलोकोऽयं विविधचरिताकारवेशैः स्तिसङ्घैः ॥ ९

चित्रैर्वृन्दैर्विहग-ललितैः क्वापि फुल्लप्रसूनैः
प्रातर्वाताहत-फलभरैः क्वापि दोलायमानैः ।
मुग्धाकारैः स्थलजलचरैर्यूथवद्भिस्तदानीं
भूलोको मेऽचित्तवृत्तिमभिनद् यद्गुणो हिमानीम् ॥ १०

कीटैर्ग्रासार्थमपि रचितैर्माहशां रेणुमानै-
र्धातुः प्राणार्पणकृपणताहीनतां भाषमाणैः ।
हंसाम्भोजप्रभृतिभिरपूर्वेवर्णीयस्तदासौ
कासारोऽद्य क्षिपति हृदयं मे स्मृतौ दुःखराशौ ॥ ११

मातानेकान् किसलयमृदुःस्निग्धगोणान् शिशून्नः
कृत्वाङ्के यामलभत मुदं ताममीनाङ्गना न ।
त्रातुं मत्स्यासन-कवलनान्नर्मिणो नोऽन्वगात् सा
रक्ताम्भोजप्लविवनचरो पत्रगोवीग्रवेषा ॥ १२

काले काले जनकयुगलं कालमस्मानधस्तात्
पोतान् पाथःप्लवनपटुताभ्यासिनः पातुमस्थात् ।
पूर्वाकाशोद्यदरुणकराच्छिन्न-खड्ग-द्विखण्डं
लब्धं रन्ध्रं द्रुतमिव दिवः पातितं ध्वान्तपिण्डम् ॥ १

फुल्लं रक्ताम्बुरुहमथवा लूनमीनासराशौ
रक्तं चेलांशुकसुतसरः सिक्तमीषत् प्रकाशि ।

इत्थं कूले सपदि सरसो योषितः श्रेणिबद्धाः
खेलद्वालाङ्गुलिसमतयास्मासु सन्देहमुग्धाः ॥ १४
स्थाने स्थाने जलतलगतान् क्वापि वा भासमानान्
वृत्ताकार-क्रम-मिलदयोगोलवल्लम्बमानान् ।
स्कन्धारूढानिव जनकयोः सोदराम्नर्भवस्थान्
तास्ताः स्निग्धाः सचकितदृशो दुःखयन्त्यद्य हास्मान् ॥ १५
हारं वक्षस्युभयपदयोर्नूपुरे कुण्डले द्वे
श्रोत्रद्वन्द्वे विपुलजघने मेखलां देहमध्ये ।
पाणौ पाणौ वलयमरुणं पद्मरागेण तस्या
भ्रामं भ्रामं वयमरचयामाङ्गनायाः सरस्याः ॥ १६
मध्येऽस्माकं चपलवपुषां खेलितैः सोदराणां
मातापित्रोरवहितदृशोऽश्रान्तमप्याश्रितानाम् ।
केचिन्मत्स्यास्यप-कवलिता व्याधिभिः केचिदस्ता
ईदृश्येकोदरजनिजुषां भूयसां स्याद् व्यवस्था ॥ १७
प्राप्तः पापः कुलसमुचितः किं कदन्नाय कामः
किं वा सद्यः सहजविरहाग्न्युद्भवः शोकधूमः ।
शोणां सायं श्रियमिव तमोऽङ्केषु गर्भच्छविं न-
श्छित्त्वोद्युक्तो वितरितुमभून्नीलिमानं क्रमेण ॥ १८
एवं तस्मिन् वसति सरसि भ्रातरः स्नेहपुष्टा
मातापित्रोर्वयमनुदिनं भुक्तनष्टावशिष्टाः ।
गत्याहारप्रभृतिषु ततो द्वन्द्वतोऽभ्यस्तशिक्षा
स-व्याहारव्यवहृतिमिताः केवलं नाप्नुमाख्याः ॥ १९
घट्टे हट्टे भ्रमितुमसकृद्वीतपाथोन्नलोभा-
दल्पीयोऽङ्गेन्द्रियचयबलान्यात्मनां वीक्षितुं वा ।
त्यक्त्वा तातौ तदवधि पृथक् सोदरैरास्म हन्त
स्वार्थायत्ताः स्वजनविमुखाः शङ्कितः प्राणवन्तः ॥ २०

सन्ध्यायुग्मे सुखकरसरोवोचिसम्लावन्तो
मध्याह्ने च प्रतिदिनमसह्यातपैर्दग्धवन्तः ।
रोधोद्वृत्तच्युतसरसिजादिच्छदाधो निषसा
दूरे पित्रोर्वयमपि तदा नास्म किञ्चिद्विषसाः ॥
यावद्देहोपचितवयसा चापलं नो व्यकासीत्
दूराद्दूरान्तरविहरणल्लाततस्तावदासीत् ।
किं न प्रातः प्रभृति किरणास्ते मुहूर्तं मुहूर्तं
दूरीकृत्यात्मजनकदिवाह्नर्धधो भान्ति मर्त्यं ॥ २२
देहान् बालाङ्गुलिदलमितान् गोलमुण्डान् दधाना
व्यक्ताधो म्ह्युपतटसरो वारि बंभ्रम्यमाणाः ।
दृष्ट्वा द्वित्राङ्गुलिमितजलादर्शधौताच्छदृश्यं
भूयो भूयो वयममल-सामास्म तुष्याम विश्वम् ॥ २३
क्व स्वातन्त्र्यं स्वजनजनकालोकनानन्दयोग्यं
क्वेदं कारागृहपरिसरेऽस्मौ निवासाल्पभाग्यम् ।
दैवं नात्र प्रभवति नृणामोप्सया यत्र शक्यं
ज्ञातासोत्थं न यदि विफलन्तर्हि मे भाविवाक्यम् ॥ २४
सह्यं तन्मे दिनमशकुनं सापि सौख्यस्य सोमा
स्मर्तुं शक्यः क्षणमपि न मे स द्विजोऽकथ्यनामा ।
येनैकाको स्वसुखरचनान्यस्तधोल्लादकस्मात्
प्राप्तेनातोन्द्रियगतिमिवानेषिष्टल्वेत्य पश्चात् ॥ २५
स्राघ्यं यत्राकरणकरयोः पोड़नेनापघातं
वेद्मोदानीं प्रियमपि तदा नान्धकूपे निपातम् ।
तान्त्वां वच्येऽस्य तव सुहृदः कूपयोगान्त्यवार्त्तां
धत्ते जन्तुर्लघुरपि मतिं हेतुनाल्पेन नार्त्ताम् ॥ २६

---

(२६) यत्रेति यस्यां वार्त्तायां सत्याम् । कूपयोगात्परवर्त्तिवार्त्तां श्रुत्वा कूपयोगस्य विड्म्बनाद्यसदाचारनिवर्त्तकरूपोत्कर्ष एव भवतावगन्तव्य इति हृदयम् ।

इत्थं कूले सपदि सरसो योषितः श्रेणिबद्धाः
खेलद्बालाङ्गुलिसमतयास्मासु सन्देहमुग्धाः ॥ १४
स्थाने स्थाने जलतलगतान् क्वापि वा भासमानान्
वृत्ताकार-क्रम-मिलदयोगोलवल्लम्बमानान् ।
स्कन्धारूढ़ानिव जनकयोः सोदरानर्भवस्थान्
तास्ताः स्निग्धाः सचकितदृशो दुःखयन्त्यद्य ह्यस्मान् ॥ १५
हारं वक्षस्युभयपदयोर्नूपुरे कुण्डले द्वे
श्रोत्रद्वन्द्वे विपुलजघने मेखलां देहमध्ये ।
पाणौ पाणौ वलयमरुणं पद्मरागेण तस्या
भ्रामं भ्रामं वयमरचयामाङ्गनायाः सरस्याः ॥ १६
मध्येऽस्माकं चपलवपुषां खेलितैः सोदराणां
मातापित्रोरवहितदृशोऽश्रान्तमप्याश्रितानाम् ।
केचिन्मत्स्यास्यप-कवलिता व्याधिभिः केचिदस्ता
ईदृश्येकोदरजनिजुषां भूयसां स्याद् व्यवस्था ॥ १७
प्राप्तः पापः कुलसमुचितः किं कदन्नाय कामः
किं वा सद्यः सहजविरहाग्न्युद्भवः शोकधूमः ।
शोणां सायं श्रियमिव तमोऽङ्गेषु गर्भच्छविं न-
श्छित्त्वोद्युक्तो वितरितुमभून्नीलिमानं क्रमेण ॥ १८
एवं तस्मिन् वसति सरसि भ्रातरः स्नेहपुष्टा
मातापित्रोर्वयमनुदिनं भुक्तनष्टावशिष्टाः ।
गत्याहारप्रभृतिषु ततो द्वन्द्वतोऽभ्यस्तशिक्षा
स-व्याहारव्यवहृतिमिताः केवलं नाप्नुमाख्याः ॥ १९
घट्टे हट्टे भ्रमितुमसकृद्धौतपात्रान्नलोभा-
दल्पीयोऽङ्गेन्द्रियचयबलान्यात्मनां वीक्षितुं वा ।
त्यक्त्वा तातौ तदवधि पृथक् सोदरैरास्म हन्त
स्वार्थायत्ताः स्वजनविमुखाः शङ्कितः प्राणवन्तः ॥ २०

सन्ध्यायुग्मे सुखकरसरोवीचिसन्तारवन्तो
मध्याह्ने च प्रतिदिनमसह्यातपैर्दग्धवल्लः।
रोधोवृक्षच्युतसरसिजादिच्छदाधो निषण्णा
दूरे पित्रोर्वयमपि तदा नास्म किञ्चिद्विषण्णाः॥ २१

यावद्देहोपचितवयसा चापलं नो व्यकासीत्
दूराद्दूरान्तरविहरणन्तावदासीत्।
किं न प्रातः प्रभृति किरणास्ते मुहूर्त्ते मुहूर्त्ते
दूरोक्तत्यात्मजनकदिवाहर्षधी भान्ति मर्त्त्ये॥ २२

देहान् बालाङ्गुलिदलमितान् गोलमुण्डान् दधाना
व्यक्ताधो सद्युपतटसरो वारि बंभ्रम्यमाणाः।
दृष्ट्वा द्वित्र्यङ्गुलिमितजलादर्शधौताच्छदृश्यं
भूयो भूयो वयममल-सामास्म तुष्याम विश्वम्॥ २३

क्व स्वातन्त्र्यं स्वजनजनकालोकनानन्दयोग्यं
क्वेदं कारागृहपरिसरेऽन्धौ निवासाल्पभाग्यम्।
दैवं नात्र प्रभवति नृणामीर्ष्यया यत्र शक्यं
ज्ञातासीत्थं न यदि विफलन्तर्हि मे भाविवाक्यम्॥ २४

सह्यं तन्मे दिनमशकुनं सापि सौख्यस्य सीमा
स्मर्त्तुं शक्यः क्षणमपि न मे स द्विजोऽकथ्यनामा।
येनैकाकी स्वसुखरचनान्यस्तधोत्वादकस्मात्
प्राप्तेनातीन्द्रियगतिमिवानेषिष्ट्वत्वैत्य पश्चात्॥ २५

श्लाघ्यं यच्चाकरणकरयोः पीड़नेनापघातं
वेद्मीदानीं प्रियमपि तदा नान्धकूपे निपातम्।
तान्त्वां वच्म्येऽस्य तव सुहृदः कूपयोगान्यवार्त्तां
धत्ते जन्तुर्लघुरपि मतिं हेतुनाल्पेन नार्त्ताम्॥ २६

(२६) यत्रेति यस्यां वार्त्तायां सत्याम्। कूपयोगात्परवर्त्तिवार्त्तां श्रुत्वा कूपयोगस्य विड्म्बनयाद्यसदाचारनिवर्त्तकरूपोत्कर्षं एव भवतावगन्तव्य इति हृदयम्।

जाल्मेनाहं सपदि सरसो विप्रकृष्टो द्विजेन
छिन्नः सद्यः शिरसि विशिरस्काङ्गवत् कम्पमानः ।
वर्त्मानीतः कियदिति तदा मूर्च्छितो न स्मरामि
प्राणा व्योम्ना सह न मिलितास्तत्शुचा सन्तपामि ॥ २७
तावत् सद्यः स्वजनविरहाद् भाविसन्तापचित्तं
प्राप्तं नव्यज्वररुगुदयात् प्रागिवाङ्गं जड़त्वम् ।
यावन्नागात् पथि मम दृशोः सा शिशोर्देहयष्टि-
श्चित्रोत्फुल्लाम्बुजग्रभृतामेकदैवेव गोष्ठी ॥ २८
वक्त्रं पूर्णेन्दुरिव नयने नीलपद्मायमाने
रक्ताम्भोजे इव करतले लम्बिमालाभपाणेः ।
तस्य घ्राणं तिलकुसुमवत् पक्वबिम्बाधरोष्ठं
खेलल्लावण्यलहरिवपुस्तन्मयादौ न दृष्टम् ॥ २९
श्वासायैवान्यजनविधृता तस्य विद्यानिवासा-
-दासीद्विष्णोर्हृदयकुहराच्छ्रोऽश्रितोत्राहिनासा ।
पादद्वन्द्वं न कृपिजनवद्दीर्घलावण्यहीनं
नापि क्षीणं प्लवगविजितं शान्तसिंहप्रयाणम् ॥ ३०
क्रीड़ाक्रान्तोऽध्ययनसमयस्यातिवाहे स सायं
मात्रा प्रातः क्वचन मिलितः सञ्जिघृक्षाच तोयम् ।
उत्थायेत्थं मम नवनिशान्ताम्बुमूर्द्धर्भकेन्दु-
र्नीराचित्तप्रतिफलितवन्मूर्त्तिरापादि बन्धुः ॥ ३१
कृष्णं नान्तर्बहिरिव ममेत्थेवमालोच्य नूनं
चित्तन्तस्य स्वजनरहिते मय्यनुक्रोशदूनम् ।
प्रातर्भेदोन्मुखकमलवत्तच्छिशो सौहृदय्यं
येनासीन्मे कृतकरिपुणाऽस्याग्रजेनाप्यजय्यम् ॥ ३२

(३१) अग्रजस्य मद्ग्रहणरूपकविमग्नलुतायास्तदनुजेऽस्मिन् शिशौ सौहार्दस्य वस्त्वादिति भावः ।

काले काले मम नवगृहस्यागवान् सन्निकर्षं
शोकेनार्त्ते हृदि शिशुसुहृद्दातुमैषोऽतिहर्षम् ।
दुष्टे बाले धृतवति पितुः क्रोधिनो मुष्टिवर्षं
पृष्ठे मातार्पयति किमु न स्निग्धहस्तावमर्षम् ॥ ३३

तल्लावण्यं द्रुतकनकवत्तस्य सा मिष्टवाणी
तत् सौगन्ध्यं सहजजतकं मे हृगादीन्द्रियाणि ।
यावद्यावद् जगृहुरधिकं प्रार्थयन्तीह तावत्
सान्निध्यानां क्रमपरिणतिर्बन्धुता प्राणिनोर्यत् ॥ ३४

मूलादस्मान्मम परिचयो मुग्धवल्लीवितानः
पर्य्यास्निच्चत्तरुणतरुवद् यं गृहस्थं क्रमेण ।
माता तातोऽग्रजयुगमलघ्यूथतस्तोऽस्य शाखा
नात्यल्पास्ता जनकसहजा भ्रातृपत्न्यादिलोकाः ॥ ३५

सर्वैस्तेषां समपरिचयस्यावकाशो न तादृग्
निर्बाधं यद्विचरितुमलं रन्ध्रधाम्नो न मे दृक् ।
जिह्रेमि त्वां गदितुमिति यद् ग्राहकस्यापि तस्य
व्याहारा मेऽनिशमरचयन् दौत्यमौचात्यमस्य ॥ ३६

भोक्तुं माताध्ययननिरतं तं न्ययुङ्क्तेति दृष्टं
कर्त्तुं कर्म्माग्रजयुगममुं प्रैरिरद् यावदिष्टम् ।
तातोऽध्येतुं व्यसनविरतं प्रायशो नादिशत्तं
गुर्व्योऽपृच्छन्निति तमपराः किं गतं ते शिशुत्वम् ॥ ३७

---

(३३) शोकार्त्ते हृदि हर्षातिरेकदानमसङ्गतमिव भासमानमन्यथा समर्थयति दुष्ट इत्यादिना ।

(३७) शिशुधर्म्मक्रीडाद्यदर्शनादिति भावः ।

तत्रान्येषां विरलविरलं बालबन्धोर्निकामं
गेहस्थानां व्यवहिततयातीतदृक्शक्तिसीमम् ।
स्वप्नस्नानाशनविहरणादीनि शाहःसु वार्त्तां
विश्रम्भान्मां प्रियमकथयन्नुक्तिदूत्यो यथार्थाः ॥ ३८

भूयो दृष्टं वपुरिति मया तस्य दृष्टा न वृद्धिः
श्रोत्रायातैर्मुहुरपि गुणैः श्राविता नात्म-ऋद्धिः ।
यद्वान् शुष्को बहिरिव सुहृत्सङ्गमे स्नेहपात्रं
भग्नं सिञ्चत्यहह विरहे तैर्भुवं सोऽतिमात्रम् ॥ ३९

गाम्भीर्य्येणार्जवसहभुवा वर्द्धितो विद्यया च
प्रागल्भ्यालङ्कृतविनयया श्लाघ्यपाश्चात्त्यवाचः ।
सुब्राह्मण्योचितनियमवत्सात्त्विकाहारवेषो
भाग्यायत्तं प्रखरमधुरं प्राप कैशोरमेषः ॥ ४०

इति शकुल-कथके पूर्वाभासः समाप्तः ।

ग्रीवामूलाद्रजतगुणवद्यज्ञसूत्रेण युक्तो
दक्षोरोऽर्द्धं गलमपि गिरेः किं श्रियासौ विभक्तः ।
कालेऽतीते कियति स सुहृद् ब्रह्मचर्य्यैकसारः
पित्रोराशामुदमपि हृदोऽवर्द्धयन्मे किशोरः ॥ १

तुच्छं त्यक्त्वा नयनयुगलं पुस्तकेष्वेव लग्नं
चेतो ग्रन्थार्थजलधितटेऽस्याट भूत्वेव रुग्नम् ।
आत्मार्थेभ्यो भुवनविजयि ज्ञानमाप्तुं स्तदैच्छत्
प्रातः पद्मं क्रमविकसनं रश्मितोऽर्कस्य यद्वत् ॥ २

---

(३८)ः दृक्शक्तिसीममित्यन्तं मामित्यनेनान्वितम् ।

श्रोत्रे वंशीध्वनिरधिष्टश्च मेऽन्तिके कान्तकायो
घ्राणे वल्कादिकुसुमचयोद्भूतगन्धश्चिराय।
दूरे वाद्याद्यर्थदलवलिते सद्गुणाचारसङ्क्र-
श्चित्तेऽनृत्यत् स सुखकुसुमाशाकदम्बे त्रिभङ्गः॥ ३
बाल्येऽतीते वयसि सुहृदोऽङ्गेषु शोभान्दधानो
द्राघिष्ठत्वं कनककुसुमस्पर्द्धिकद्रुवितानः।
अस्मच्चित्तापचितसचिवो ह्येष कैशोरसंज्ञ-
स्तारुण्यस्यागमनमचिरात् सूचयामास राज्ञः॥ ४
आकौमारं जनकजननीभ्रातृतोऽप्राप्तरोषः
पाण्डुच्छाया तनुरनुगतस्तात् स दीर्घात्मभासः।
छायापातो निशि यदि विना लोकतो दुर्विलोको
भ्रान्तौ तेषान्तदनुगमनादर्शने दोषवान् कः॥ ५
कामोऽक्षेमोऽस्य तनुभवने प्राप्तवासो न रोषो
लोभो नाशोभत हतशुभस्नेह मोहो निराशः।
जातोन्मादो मतिमतिमदो नात्र मात्सर्यमार्य्ये
वास्तव्यन्तत् कुमतिकुहरेष्वन्धकारं क्व सूर्य्ये॥ ६
प्रातर्वाते वहति कमलं कम्पयित्वोत्तमाङ्गं
वर्द्धिष्णुश्रीर्ललितनलिनो याचते सूर्य्यसङ्गम्।

---

(३) वंश्या ध्वनिः वंश्या ध्वनिरिव ध्वनिर्यस्येत्येवं पक्षभेदे समासभेदः, परपक्षे विशेष्यबाधे विशेषणे क्रियान्वयः एवमन्यत्रा समीपवर्त्तित्वे ध्वन्यादीनां श्रोत्रादिग्राह्यत्वं दूरतया तु तेषामेव विषयाणां सद्गुणादीनाञ्च मानसप्रत्यक्षं दिग्वर्त्तिकदम्बवृक्षस्याष्टशाशाकदम्बवर्चित्तमेव। एवन्तुसर्वं त्रिभङ्गाख्यस्य बन्धोस्त्रिभङ्गमुरारिणा साम्यं गमयति। स इत्यनेन नित्यसम्बद्धस्य यस्येति पदस्याचारसङ्क्रान्तैः कर्त्तृपदैः पृथगन्वयात्तदर्शनाच्च भगवति प्रत्यक्षान्यलौकिकान्येव, प्रकृते तु ससुखकुसुमेत्यविच्छेदः। दोषा वाच्या गुरोरपीति नयेनास्य निर्दोषत्वादिति भावः।

ताहक् कालस्तनुमपि तथा यस्य कैशोरसंज्ञो
लीलालोलामलमरचयन्मे सखासौ त्रिभङ्गः ॥ ७
स्निग्धैरङ्गैः सममुपचितं यस्य संसारकृत्यं
तन्द्रा मन्द्रा कटितटगृहेणाल्पतामाप नित्यम् ।
तस्मिन् लोके यदुदितगुणोऽथाप्लवद्दोषजालः
ख्यातस्तन्माङ्कित इव नृपो जिष्णुरासीत् स कालः ॥ ८
कन्दूकैर्धौकुमलपृथुका कर्म्मभिर्नर्म्मचित्रं
तस्योन्नीतैर्व्यधित बहुधा मन्दहग् दुःखमात्रम् ।
तैर्विम्रस्तैर्भवतु परितोऽन्यत्र भूम्ना सदोषं
चिप्रोत्चिप्तैर्नियममिलितैः क्वापि तस्यावकाशम् ॥ ९
आसीत् सन्दानितमतिरहो यैः सहाध्यायिभिः स
प्रज्ञा विद्यादिविततगुणैस्तेषु नैकोऽपि निःस्वः ।
युक्तो व्यक्तं मधुरमधुरैः कोकिलाम्रालिचूतैः
सम्यक् संज्ञो मधुरमधुरैर्नैव वर्षोऽस्रशीतैः ॥ १०
प्रत्यक्तीराध्ययनभवने प्राक्तटाज्जह्नुजाया
ग्राम्यात् पाठाद् गतिरतिगतस्यास्य यन्नो सहाया ।
तस्माद्वाहुप्लवनतरणीचालने नाकनद्याम्
एषोऽभ्यास्यन्न बहिरसतो ग्रन्थमात्रस्य विद्याम् ॥ ११
यातायाते गुरुपरिसरे तस्य गाङ्गे विधातु-
र्वात्योल्लोलिन्यपि भयमभून्नोपटुत्वान्न जातु ।
सन्तीर्णोऽभूत् प्लवनविदुषानेन यद्वत् स सेतु-
र्योऽयं भोगी जगति जनतातारको भीष्ममातुः ॥ १२

( सावशेषम् )

# विद्याधरस्य दुःखम्

[ निबन्धकः—श्रीभवभूतिविद्यारत्नः ]

प्रतीच्यविद्यापारगो विद्याधरः स्वधर्मनिष्ठाद् द्विजकुलात् समुत्पन्नोऽप्या बाल्यात् प्रतीच्यदेशपुस्तकान्यधीयानस्तद्गताभिनवभावसम्पूरिते स्वमनसि कदाचिदलब्धप्राच्यभावावकाश इदानीं च नवभावोल्लासितचित्तानां प्रतीच्यानां निखिलभूमण्डलाधिपत्यं प्राच्यानाञ्च हीनताकरं परवशत्वमवलोकयन् न केवलं स्वमनसा प्रतीच्यभावानामुपादेयत्वमङ्गीचकार, अपि तु नियतादरितैर्धिक्कृत-प्राच्यभावैर्वाक्कायव्यापारैः सर्वसमक्षं तत् प्रदर्शयितुमारेभे। एवं संस्कारक्रमागौलम्बिना तेनात्मसमाजं कतिपयैः प्राचीनभावरूपैः कुसंस्कारकण्टकैः समाकीर्णमवलोक्य सर्वथा तानुन्मूलयितुकामेनादौ निपातिता कारुण्यपरीता दृष्टिस्तत्रत्येषु चिरावरोधप्रपीड़ितेष्ववलाजनेषु। सोऽचिन्तयत्—"यः परमकारुणिको हि विधिरिह जगति मानवजातिमसृजत्, तदन्तर्गतयोरन्योन्यसापेक्षयोः स्त्रीपुंसरूपयोराकृतिगतवैषम्यमन्तरेण नापरं किमपि तस्याभीप्सितं भवेद्, येन हि तयोरेकः पुरुषश्चिरं निग्रहीतृरूपेणात्मनः प्रभुत्वशक्तिं परिचालयेदन्या च नारी किङ्करीवाजीवनं नतवदना तां सहमानात्मानं सौभाग्यशालिनीं मन्येत। किमशनभ्रमणविद्योपार्जनादिषु नित्यनैमित्तिकव्यापारेषु, किं गृहस्थजनोचितेषु परिणयादिसंस्कारेषु, किं वा मानवत्वपुरस्कारेण सर्वैरेवानुष्ठेयेषु चतुर्वर्गसाधनेषु सर्वत्रैवात्मस्वातन्त्र्यं विनिर्दिशयन् क्षीणबलेष्ववलाजनेषु, आत्मभोगपरायणः पुरुषो यत् तत्र स्वातन्त्र्यमवलम्बते, तद्धि तस्य नारीनिर्य्यातनमूलं स्वार्थपरत्वमेव प्रकटयति। सम्यगसमीचीनमेतद् यदुत्कटपौरुषः पुरुषो नियतधृतयथेच्छविलासवेशो

जगति सर्वत्रैव निर्बाधं पर्य्यटन् विविधकृत्रिमचारुदृश्यपरिदर्शने-नात्मन इन्द्रियकौतूहलं परितर्पयति, बलविरहिता तु नारी विसर्जित-निखिलभोगाभिलाषा कूपमण्डूकीव, गृहकोणमात्राश्रया समाचरति केवलं स्वामिपदलाञ्छनस्य नियतसम्भोगसम्पादिकां किङ्करीवृत्तिम्। स्वार्थचिन्तैकव्रतैः पुरुषैः किं विस्मृतं यत् मनुजान्तर्गतानां नारीणा-मपि पुरुषवन्न केवलं पञ्चभूतात्मकं शरीरमपि तु बुद्ध्यहङ्कारैकादशे-न्द्रियाणि प्रकृतिजानि ममत्वज्ञानकारणानि सन्ति, यैः खलु पुरुष-वत्तासामपि सर्वसुखभोगेच्छाः प्रबला भवेयुरिति। कामनाश्च ता बलीनिव निघ्र्णपुरुषचरणेषु समुपहृत्य कथं वा तृप्तिमाप्नुयुस्ते रमणीजनाः? अतो नारीणां चित्तवेदनाकरमस्वातन्त्र्यं दूरीकृत्य यथा ता नित्यनैमित्तिकादिमानवव्यापारेषु पुरुषा इव स्वातन्त्र्यमधि-कुर्य्युरुदारचरितैर्नरैस्तथैव सर्वथा विधातव्य"मिति।

एवं विचिन्त्य विद्याधरेण 'स्वोदारमतं पूर्वं स्वगृह एव प्रवर्त्तनीयं ततोऽन्यत्रे'ति न्यायमवलम्बमानेनादौ स्वभार्य्याया मनोरमायाः संसार-व्यापारेष्वेकैकशः स्वातन्त्र्यं प्रदातुमारेभे। आ बाल्यात् शुद्धान्ता-वरोधाभ्यस्तचित्ताया मनोरमाया यद्यपि प्रागेव स्वाधीनभावोऽभि-नवतया किञ्चिद् दुष्करत्वेन प्रत्यभात्, तथापि पुनः पुनः पतिनिर्बन्ध-कृतेनाभ्यासवशेन क्रमेण तथा स सुकरत्वेन परिगृहीतो येन हि तरुणवयस्कैरपरिचितैरन्तःपुरप्रविष्टैः पतिबन्धुभिः सार्द्धं मुक्तवदन-माभाषणं, प्रातः सायञ्च सविलासवेशमुद्यानभ्रमणं, पत्या सह देश-संस्कारार्थं प्रतिष्ठापितासु नानासमितिषु निरवगुण्ठनं उपानदावृतपाद-पङ्कजं लीलागमनं, पुरुषबन्धुसमक्षं च मुक्तकण्ठं सङ्गीतालपनं—एतत् सर्वमेवाभिनवस्वातन्त्र्यालोकदर्शिन्यास्तस्या नित्यकार्य्यत्वेन पर्य्य-णमत्।

अविरामवह्नितापजनितकाठिन्या कोमलमृत्तिकेव पतिकृतैः पुनः पुनः स्वातन्त्र्योत्तेजनवचोभिरुत्पादितसाहसा मनोरमा कुलाङ्गनोचितं

शालीनत्वं विहायैतावद्धृष्टत्वमगाद् यत् पुरुषैरालापभ्रमणादिषु व्यापारेषु स्वामिदैवताभिमतग्रहणमपि बाहुल्यं मन्यमानावगणित-गार्हस्थ्य-चिन्ता भर्त्तृस्थैर्यसंकोचं सर्वसंसारभारं विन्यस्य बन्धुभावापन्नैर्यैः कैश्चित् पुरुषवरैः सार्द्धं नानाकर्म्मव्यपदेशेन यथेच्छं गृहाद् बहिर्गन्तुं प्रववृते। पूर्वं पुरन्ध्रीचरितमनुसरन्ती सा रन्धन-गृहमार्जन-शिशुपालन-पति-शुश्रूषादिगार्हस्थ्यकर्म्माणि हृष्टचित्तं स्वकरेण सम्पाद्यात्मानं धन्या ममंस्त, साम्प्रतं स्वाधीनभावोद्दीपितहृदया सा तानि खल्वधन्यानामेव हीनचरितानीति विविच्य नवनियुक्तकिङ्करजनैस्तेषां सम्पादनं व्यवास्थापयत्, तेन च स्वामिमहोदयस्यानधिकवित्तोपार्जकस्य संसारनिर्वाह-पथो व्ययबाहुल्याद् दुर्गमो भवेदिति चिन्ताया नासीत् कोऽप्यवसरो-नवज्ञानालोकालोकिते तस्याः सुविशालहृदये।

अथ निरञ्जननामधेयः कश्चित् कायस्थकुमारः सुकुमारतातिरस्कृतकुमारो वाक्चातुर्य्यादिविविधगुणैकाधारः कायमनोवाग्व्यापारेषु समुदारः सोत्साहगृहीत-स्वदेशोद्धारभार औदार्य्यख्यातस्य विद्याधरस्य चित्तं नारीजागरणविषयकैस्तन्मतपोषकैर्वचनविन्यासैर्झटित्येव समाकृष्य परममभूत् तस्य सौहार्दभाजनम्। तयोश्च सा प्रीतिः क्रमेणैव-मुपाचीयत, यन्निरञ्जनो विद्याधरस्य स्वजनान्तर्गत इवाबाधं तद्गृहं नियतमेवायासीत्। तस्मिन् खलु गतायातविधौ स स्वकीयैश्चित्ता-कर्षकमधुरालापैर्विद्याधरपत्नीं मनोरमामेतावत् स्वपक्षपातिनीं चकार, यत् सा चकोरीव सुधाकरं प्रतिदिनं सौत्सुक्यमवैक्षत तस्य शुभागमनम्। आगते च तस्मिन् सा विस्मृतस्वामिसन्तानविषया तेन सह निभृतमेकं गृहप्रकोष्ठमाश्रित्य विविधविश्रब्धालापेष्वात्मान-मासञ्जयत्। अतिशिशवः पुत्रा मातृदर्शनमनाप्नुवन्तः समुच्चक्रन्दन-रवैरापूरयन् समस्तभवनं, विद्याधरश्च गङ्गाधर इवाधारयदात्मशिरसा विपुलं संसारकर्म्मस्रोतोनिवहं; परिचालकजनाश्च स्वामिन्या अदर्शना-दलब्धभीतिकारणलेशावकाशा यथेच्छं कृतवन्तः संसारानिष्टकराणि

जगति सर्वत्रैव निर्बाधं पर्यटन् विविधकृत्रिमचारुदृश्यपरिदर्शने-नात्मन इन्द्रियकौतूहलं परितर्पयति, बलविरहिता तु नारी विसर्जित-निखिलभोगाभिलाषा कूपमण्डूकीव, गृहकोणमात्राश्रया समाचरति केवलं स्वामिपदलाञ्छनस्य नियतसम्भोगसम्पादिकां किङ्करीवृत्तिम्। स्वार्थचिन्तैकव्रतैः पुरुषैः किं विस्मृतं यत् मनुजान्तर्गतानां नारीणा-मपि पुरुषवन्न केवलं पञ्चभूतात्मकं शरीरमपि तु बुद्ध्यहङ्कारैकादशे-न्द्रियाणि प्रकृतिजानि ममत्वज्ञानकारणानि सन्ति, यैः खलु पुरुष-वत्तासामपि सर्वसुखभोगेच्छाः प्रबला भवेयुरिति। कामनाश्च ता बलीनिव निष्ठुरपुरुषचरणेषु समुपहृत्य कथं वा तृप्तिमाप्नुयुस्ते रमणीजनाः ? अतो नारीणां चित्तवेदनाकरमस्वातन्त्र्यं दूरीकृत्य यथा ता नित्यनैमित्तिकादिमानवव्यापारेषु पुरुषा इव स्वातन्त्र्यमधि-कुर्य्युरुदारचरितैर्नरैस्तथैव सर्वथा विधातव्य"मिति।

एवं विचिन्त्य विद्याधरेण 'स्वोदारमतं पूर्वं स्वगृह एव प्रवर्तनीयं ततोऽन्यत्रे'ति न्यायमवलम्बमानेनादौ स्वभार्य्याया मनोरमायाः संसार-व्यापारेष्वेकैकशः स्वातन्त्र्यं प्रदातुमारेभे। आ बाल्यात् शुद्धान्ता-वरोधाभ्यस्तचित्ताया मनोरमाया यद्यपि प्रागेव स्वाधीनभावोऽभि-नवतया किञ्चिद् दुष्करत्वेन प्रत्यभात्, तथापि पुनः पुनः पतिनिर्बन्ध-कृतेनाभ्यासवशेन क्रमेण तथा स सुकरत्वेन परिगृहीतो येन हि तरुणवयस्कैरपरिचितैरन्तःपुरप्रविष्टैः पतिबन्धुभिः सार्द्धं मुक्तवदन-माभाषणं, प्रातः सायञ्च सविलासवेशमुद्यानभ्रमणं, पत्या सह देश-संस्कारार्थं प्रतिष्ठापितासु नानासमितिषु निरवगुण्ठनं उपानदावृतपाद-पङ्कजं लीलागमनं, पुरुषबन्धुसमक्षं च मुक्तकण्ठं सङ्गीतालपनं—एतत् सर्वमेवाभिनवस्वातन्त्र्यालोकदर्शिन्यास्तस्या नित्यकार्य्यत्वेन पर्य्य-णमत्।

अविरामवह्नितापजनितकाठिन्या कोमलमृत्तिकेव पतिकृतैः पुनः पुनः स्वातन्त्र्योत्तेजनवचोभिरुत्पादितसाहसा मनोरमा कुलाङ्गनोचितं

शालीनत्वं विहायैतावद्धृष्टत्वमगाद् यत् पुरुषैरालापभ्रमणादिषु व्यापारेषु स्वामिदैवताभिमतग्रहणमपि बाहुल्यं मन्यमानावगणित-गार्हस्थ्य-चिन्ता भर्त्तर्य्यर्थसंकोचं सर्वसंसारभारं विन्यस्य बन्धुभावापन्नैर्यैः कैश्चित् पुरुषवरैः सार्द्धं नानाकर्म्मव्यपदेशेन यथेच्छं गृहाद् बहिर्गन्तुं प्रववृते। पूर्वं पुरन्ध्रीचरितमनुसरन्ती सा रन्धन-गृहमार्जन-शिशुपालन-पतिशुश्रूषादिगार्हस्थ्यकर्म्माणि हृष्टचित्तं स्वकरेण सम्पाद्यात्मानं धन्या मममंस्त, साम्प्रतं स्वाधीनभावोद्दीपितहृदया सा तानि खल्वधन्यानामेव हीनचरितानीति विविच्य नवनियुक्तकिङ्करजनैस्तेषां सम्पादनं व्यवास्थापयत्, तेन च स्वामिमहोदयस्यानधिकवित्तोपार्जकस्य संसारनिर्वाहपथो व्ययबाहुल्याद् दुर्गमो भवेदिति चिन्ताया नासीत् कोऽप्यवसरोनवज्ञानालोकालोकिते तस्याः सुविशालहृदये।

अथ निरञ्जननामधेयः कश्चित् कायस्थकुमारः सुकुमारतातिरस्कृतकुमारो वाक्चातुर्य्यादिविविधगुणैकाधारः कायमनोवाग्व्यापारेषु समुदारः सोत्साहगृहीत-स्वदेशोद्धारभार औदार्य्यख्यातस्य विद्याधरस्य चित्तं नारीजागरणविषयकैस्तन्मतपोषकैर्वचनविन्यासैर्झटित्येव समाकृष्य परममभूत् तस्य सौहार्दभाजनम्। तयोश्च सा प्रीतिः क्रमेणैवसुपाचीयत, यन्निरञ्जनो विद्याधरस्य स्वजनान्तर्गत इवाबाधं तद्गृहं नियतमेवायासीत्। तस्मिन् खलु गतायातविधौ स स्वकीयैश्चित्ताकर्षकमधुरालापैर्विद्याधरपत्नीं मनोरमामेतावत् स्वपक्षपातिनीं चकार, यत् सा चकोरीव सुधाकरं प्रतिदिनं सोत्सुकमवैक्षत तस्य शुभागमनम्। आगते च तस्मिन् सा विस्मृतस्वामिसन्तानविषया तेन सह निभृतमेकं गृहप्रकोष्ठमाश्रित्य विविधविश्रम्भालापेष्वात्मानमासञ्जयत्। अतिशिशवः पुत्रा मातृदर्शनमनाप्नुवन्तः समुच्चक्रन्दनरवैरापूरयन् समस्तभवनं, विद्याधरश्च गङ्गाधर इवाधारयदात्मशिरसा विपुलं संसारकर्म्मस्रोतोनिवहं; परिचालकजनाश्च स्वामिन्या अदर्शनादलब्धभीतिकारणलेशावकाशा यथेच्छं कृतवन्तः संसारानिष्टकराणि

वर्वरसमाचरणानि, निरञ्जन-मधुरसम्भाषणरता तु मनोरमा निश्चिन्तेव गृहकोणमधिष्ठितवती।

स्वदेशोद्धारव्रतिनो निरञ्जनस्य नित्यनूतन-देशात्मबोधक-वचनैः संक्रामित-तद्भावा मनोरमा क्रमेण नानाविधेषु जनहितकार्य्येष्वात्मानं नियोजयितुमारेभे। सर्वत्रैव निरञ्जनस्तस्य सहचर आसीत्। एतस्य परिणामोऽयमभूत, यद् विद्याधरवराकस्यैहिकसुखनिलयं प्रतिजन-महेप्सितं प्रियासमागमसुखं सम्यगेव विलुप्तम्। प्रियया सह क्षणं विश्रम्भालापं कुर्वतस्तस्य निरञ्जनो गृध्र इव सहसा समापत्य मध्याह्ने समितिगमनव्यपदेशेन निशायाञ्च छायाचित्र-(Bioscope)प्रदर्शनव्याजेन झटिति तामन्यत्रापासारयत्। येन हि दरिद्राणां मनोऽभीष्टमिव तस्य भार्य्याभोगसुखकल्पनमुत्थायैव हृदि विलीयमानं भृशमपीड़यत्तस्य शान्तिकरं गार्हस्थ्यजीवनम्।

अपि च गृहीत-स्वातन्त्र्यव्रतायाः मनोरमाया नवनवैः स्वाच्छन्दिक-सम्प्रदायैः सम्मिलन्त्याः कुलनारीजनोचिता निर्म्मलरुचयोऽपि विविध-वर्णसम्मिश्रिता आप इव महत् खलु वैचित्र्यमवापुः। तथाहि स्वपते-रवस्थानुरूपैः सामान्यप्रसाधनैस्तृप्तिं नोपगच्छन्ती सा तेषां स्वच्छन्द रुचिसम्प्रदायानामनुकृत्या नित्यं महार्घवेशपरिवर्त्तनं संघटयन्ती प्रभूतार्थव्ययभारप्रपीड़ितस्य स्वामिनो मनसि महतीम् ऋणचिन्ता-मुदपादयत्। पूर्वं सा भारतकुलललनेव नतमस्तका पत्युरादेश-मपालयत्, इदानीं त्वतिप्रगल्भप्रतीच्यनार्य्याचरणशीलतया पति वाक्यानि कर्कशवचनैर्लङ्घयितुमपि न विचचाल।

एवं नारीस्वातन्त्र्यशिक्षणवंशदण्डं सर्वथा स्वशिरसि निपात्यमान मवलोक्य सानुतापो विद्याधरो मनसा पर्य्यालोचयितुमारभतात्मनो भ्रान्तिमयमभिमतम्। तस्मिन् समये कैश्चिदुत्कटदेशसेवकैर्नारीणां शक्तिरूपत्वमङ्गीकुर्वाणैस्तत्सहायतया भारतोद्धारकामनां पोषयद्भिः "स्वदेशसेविका" इत्यं विपुलमेकं नारीसैन्यं संघटितम्। तेषामन्यतमो

निरञ्जनः प्रियसखीं मनोरमामितस्य महोद्देश्यमतिनिपुणं विज्ञाप्य तां तदन्तर्भूतं किमपि नैवोपदं ग्राहयितुमशक्नोत्।

अथ कदाचित् भारतोद्धारैकव्रता वाञ्छावपौरुषास्ते स्त्रीपुंसकृता-मतिविपुलां वाहिनीं योड्कमिव राजपथेषु परिचालयन्तो राजपुरुषाणां चेतःसु कमप्यव्यक्तविकटभावमजनयन्। तत्प्रातरेव पतिकरार्पित-शिशुसंसारसम्भारभारा मनोरमा निरञ्जनेन सह गृहान्निःसृत्य सेना-रूपेण तां वाहिनीं प्रविशन्त्यहर्निशं देशजनन्या मोचनचेष्टनमका-र्षीत्। विद्याधरस्य दुरदृष्टतया तद्दिने पाचकोऽपि रन्धनार्थं नागतः। प्रबलक्षुधावेगमसहमानानां वाष्पाकुलनेत्राणां मृतप्रायाणां शिशु-पुत्राणामुच्चरोदनरवैरुद्वेजितचित्तो विद्याधर उपायान्तरमनवेक्ष्य स्वय-मेवान्नपाकभारमग्रहीत्। पूर्वस्यां निशायां तु वृष्टिपातैरिन्धनकाष्ठा-न्यार्द्रीकृतानि। मुहुर्मुहुस्तैरग्निमुद्दीपयितुं यतमानोऽपि स विफल प्रयत्नः सञ्जातः। आर्द्रेन्धनसंयोगादतिप्रबलधाराभिर्धूमराशिना समुत्-पत्याच्छादितं रन्धनगृहं, भृशं तस्य नयनयुगलञ्चाभिभूतम्। येन ह्यविरलगलदश्रुभिः प्लावितकपोलः स दुःखदुःखेनाचिन्तयत्—"अहो नारीणामस्वातन्त्र्यकृतमश्रुपातं विमोचयता किं स्वनेत्रे नानीतं तत् क्लेशकरमश्रुवर्षणम्? लोकचरित्रभिज्ञकैस्त्रिकालदर्शिभिः महद्भिः सुष्ठु खल्विदमुक्तं—

"बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने।
पुत्राणां भर्त्तरि प्रेते न भजेत् स्त्री स्वतन्त्रताम्॥" इति।

मूढ़चित्तेन मया कथमादौ न गृहीतमेतद्धितवचनमिति।

# जनन्यष्टकम् *

[ निबन्धकः—वरदाचरणकाव्यसाङ्ख्यतीर्थः ]

भूमिष्ठमात्रं निजदेहपाते
निःशङ्कमङ्के निदधे सुतं या ।
नाजीगणत्तत्प्रसवोत्थदुःखं
हा हा धरण्यां जननीसमा का ॥ १

प्रायेण संज्ञारहितापि सूनुं
स्तन्यप्रदानाय हृदि क्षिपन्ती ।
आशालता मे फलितेति मेने
हा हा धरण्यां जननीसमा का ॥ २

त्वं वच्मि मातर्जननी-हृदीह
दुःखं न दद्याः समुपोष्य नम्रा ।
षष्ठेऽह्नि षष्ठीं समुपास्त यास्मिन्
हा हा धरण्यां जननीसमा का ॥ ३

पौष्यां रजन्यां शयने विमुक्तं
प्रस्रावविष्ठं निदधेऽन्यतो या ।
स्वयञ्च तत्रैव सुखेन शिश्ये
हा हा धरण्यां जननीसमा का ॥ ४

---

* अकालोपरतेन अप्राप्ताष्टाविंशतिना वत्सराधिककालं कठिन-रोगसमाक्रान्तेन शय्याशायिना जनन्याः परिचर्य्यादर्शनविस्मितेन वाशिष्ठ-वंशसम्भूतेन न्यायस्मृतिसांख्यकाव्यवेदान्तादिशास्त्राभिज्ञेन मुमूर्षुणा निबन्ध-कर्त्रा मनसा विचिन्त्य भाषितं तद्भ्रातुष्पुत्रेण श्रीहरिचरणशर्म्मणा श्रुत्वा लिखितमेतत् ।

अन्धेऽथ खञ्जे वधिरेऽपि पुत्रे
या स्यात् समाश्वासवती सदैव ।
भिक्षा वरं मेऽपि सपुत्रिकाया
हा हा धरण्यां जननीसमा का ॥ ५

कफादिरोगैर्विकले स्वपुत्रे
कष्टं कठोरं बहुधा सचिन्ता ।
स्नानेऽशने वा शयने दधे या
हा हा धरण्यां जननीसमा का ॥ ६

कान्तासुतौ वित्तसुखाभिलाषौ
पितापि सूनोः सुयशोऽभिवाञ्छेत् ।
माता परं पुत्रशरीरसौख्यं
हा हा धरण्यां जननीसमा का ॥ ७

या शेषशय्याशयिता मृतेव
स्थितापि सूनोः शुभमीप्सते स्म ।
सुताश्रु संमोच्य प्रबोधयन्ती
हा हा धरण्यां जननीसमा का ॥ ८

---

## को नु खलु 'रत्नप्रभा'कर्ता ?

[ निबन्धकः—के. ए. रामलिङ्गशास्त्री ]

प्रसन्नगम्भीरस्य ब्रह्मसूत्र-शाङ्करभाष्यस्य विविधा व्याख्या विलसन्ति किल। तासु 'रत्नप्रभा' नाम्न्या व्याख्यायाः कर्ता कः ? इति काचिद्विचिकित्सा साम्प्रतं चित्तम् अस्माकीनम् आस्कन्दति; कुतः संशयः ? सर्वत्रापि भारतवर्षे रत्नप्रभाया रामानन्दीयत्वेन प्रसिद्धेः; यथा

नाम श्रीमद् 'आनन्दज्ञान' विरचितस्य व्याख्यानस्य 'न्यायनिर्णय' नाम्नः आनन्दगिरीयत्वेन प्रथा बहुलम् समुपलभ्यते, नन्वेवमेव एतस्या रत्नप्रभायाः रामानन्दीयत्वेनैव प्रख्यातिरिति अविवादम् ; सैषा भाष्य-रत्नप्रभा-व्याख्या बहोः कालात् पूर्वं वाराणस्यां, कलिकातायां च श्रीजीवानन्दविद्यासागरप्रभृतिभिर्विद्वत्प्रकाण्डैः शोधिता मुद्रापिता प्रकाशितेति च जानन्त्येव नः प्रियपाठककण्ठीरवाः ; तत्र सर्वत्रास्या 'रामानन्दीयम्, रामानन्दीयम्' इति पठनपाठनादिष्वधिकृतैः व्यवह्रियमाणत्वमेव साक्षात् कर्णाकर्णिकया चावगतमस्माभिः ; 'बाङ्के, इत्युपाह्व-श्रीमहादेवशर्मणा (Bombay) मुम्बय्यां 'निर्णय-सागर'मुद्रणालये मुद्रापित-प्रकाशिते रत्नप्रभा-भामती-न्यायनिर्णयाख्य-व्याख्यात्रयोपेते ब्रह्मसूत्र-श्रीशाङ्करभाष्यग्रन्थे तु रत्नप्रभा श्रीगोविन्दा-नन्दविरचिता इति स्पष्टम् आदावन्ते च मध्ये च अङ्किता विराजते ; तदेतत् साधु वा असाधु वेति सकुतुकं किञ्चिद् विमृश्यते ; श्रीरामा-नन्द-सरस्वती-यतीश्वरः खलु श्रीमद्रामभद्रभक्त इति कर-बदरवद् अवगम्यते ; अयमेव सुधीः 'विवरण-प्रमेयसंग्रह'-नामधेयस्य महनीय-ग्रन्थरत्नस्य कर्तेति तादृशप्रबन्धपरिशीलनेन निश्चप्रचम् ; तत्र च रत्नप्रभायां श्रीराममेव सदा एष स्तौति, इति दिङ्मात्रमुदाह्रियते—

"यमिह कारुणिकं शरणं गतोऽप्यरिसहोदर आप महत् पदम् ।
तमहमाशु हरिं परमाश्रये जनकजाङ्कमनन्तसुखाकृतिम्" ॥ १ ॥ इति

उपोद्घातोपक्रमे, उपसंहारे च—

नानाविधग्रन्थजातं वीक्ष्य सम्यग् यथामति ।
शारीरकस्य भाष्यस्य कृता व्याख्या सतां मुदे ॥
अन्तर्यामी जगत्साक्षी सर्वकर्ता रघूद्वहः ।
अतोऽत्र दोषोऽशङ्क्यः स्याद् एष ह्येवेति शासनात् ।

वक्षस्यक्षोभ्य पार्श्वे करतल-युगले कौस्तुभाभां दयाञ्च
सीतां कोदण्डदीक्षामभयवरयुतां वीक्ष्य रामाङ्गसङ्गः ।

स्वस्याः क्व स्यादितीयं हृदि कृतमनना भाष्यरत्नप्रभाख्या
स्वात्मानन्दैकलुब्धा रघुवरचरणाम्भोजयुग्मं प्रपन्ना ॥

इति पद्येन स्वकीयं प्रबन्धप्रसूनं श्रीमद्रघुवरपादारविन्दद्वन्द्वे समर्पयति स्म ; किञ्च. ब्रह्मसूत्राणाम् अध्यायचतुष्टयस्य एकैकपादस्य अधिकरणारम्भे वा अवसाने वा प्रायशः तत्तदधिकरणविषयानुगुणं श्रीमद्राघवमेव स्वेष्टदैवतं ववन्दे इति, एतदपि उदाह्रियते ; प्रथमाध्याय-द्वितीयपादारम्भे तावत्—

श्रीरामं सिद्धमत्तारं गुहाशयिनमन्तरम् ।
अन्तर्यामिणमज्ञेयं वैश्वानरमहं भजे ॥ इति,

तत्रैव तृतीयपादे—

द्युभ्वोतभूमपदमक्षरमोक्षणीयं
श्रीराममल्पहृदि भान्तमधीशितारम् ।
इन्द्रादिवेद्यमखिलस्य च शासितारं
ज्योतिर्नभःपदमनिन्द्रमजं भजेऽहम् ॥

द्वितीयाध्यायारम्भे तावत् प्रथमे पादे—

सांख्यादि-स्मृतियुक्तिभिर्न चलितो वेदान्तसिद्धान्तगो
निर्मूलैर्विविधागमैरविदितो व्योमादिजन्माप्ययः ।
उत्पत्त्यन्तविवर्जितस्थितिवपुर्व्यापो च कर्ताऽंशको
लिङ्गेन प्रथितोऽपि नामतनुकृत् तं जानकीशं भजे ॥

तत्रैव द्वितीये पादे—

सांख्य-तार्किक-बौद्धाश्च जैनाः पाशुपतादयः ।
यस्य तत्त्वं न जानन्ति तं वन्दे रघुपुङ्गवम् ॥

तत्रैव तृतीये पादे—

वियदादिविधातारं सीतास्याब्ज-मधुव्रतम् ।
नित्यचिद्विश्वकर्त्तात्माभिन्नं सर्वेश्वरं भजे ॥

तृतीयाध्यायारम्भेऽपि प्रथमे पादे—

यं हि वैराग्यसम्पन्नास्तत्त्वमर्थविवेकिनः।
लभन्ते साधनैर्दान्तास्तं सीतानायकं भजे॥

तुरीयाध्यायारम्भेऽपि प्रथमे पादे—

यज्ज्ञानाज्जीवतो मुक्तिरुत्क्रान्ति-गति-वर्जिता।
लभ्यते तत्परं ब्रह्म रामनामाऽस्मि निर्भयम्॥ इति।

'श्रीगौर्य्यां सकलार्थदं निजपदाम्भोजेन मुक्तिप्रदम्
प्रौढं विघ्नवनं हरन्तमनघं श्रीढुण्ढि-तुण्डासिना।
वन्दे चर्म-कपालिकोपकरणैर्वैराग्यसौख्यात्परं
नास्तीति प्रदिशन्तमन्तविधुरं श्रीकाशिकेशं शिवम्॥'

इति रत्नप्रभाप्रारम्भे दैतीयीकश्लोक-परिशीलनेन ज्ञायते व्याख्येयं किल वाराणसीम् अधिवसद्भिः श्रीरामानन्दसरस्वतीभिः सङ्कलिता इति; किञ्च,

कामाक्षीदत्तदुग्धप्रचुरसुरनुत-प्राज्यभोज्याधिपूज्य-
श्रीगौरीनायकाऽभिन्नप्रकटनशिवरामार्य-लब्धात्मबोधैः।
श्रीमद्गोपालगीर्भिः प्रकटितपरमाद्वैतभासा स्मितास्य-
श्रीमद्गोविन्दवाणीचरणकमलगो निर्वृतोऽहं यथाऽलिः॥

पद्यमिदं सूक्ष्मेक्षिकया अनुसन्धीयमानं सत् श्रीमद्रामानन्द-सरस्वतीपादानां गुरुपरम्परां याथातथ्येन सुविशदं विख्यापयति; तथाहि—श्रीरामानन्दसरस्वतीचरणानां गुरवः श्रीगोविन्दसरस्वती-चरणाः; अमीषां गुरवः खलु, श्रीगोपालसरस्वतीचरणाः; एतेषां तु गुरवः श्रीशिवरामार्यनामधेयाः; एषां मनीषिणां हि—श्रीकामाक्ष्या नाम देव्या पायित-पयःप्रभावेण—

'शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः।
यथा शिवमयो विष्णुरेवं विष्णुमयः शिवः॥
यथाऽन्तरं न पश्यामि तथा मे स्वस्तिरायुषि।

... ... ... ... ॥'

इति श्रीस्कन्दोपनिषदादिषु प्रबोधितरीत्यनुसारम्, श्रीगौरीनायकस्य पार्वतीपतेः शिवस्य, ई-नायकस्य च लक्ष्मीपतेः विष्णोः रामस्य च ऐक्यबुद्धिरुदियाय इति, नन्वत एव एते शिवरामार्याः अन्वर्थनामधेय-भागधेयभाजनम् इति च अवश्यमङ्गीकर्तव्यम्। अपि च, केचित् खलु व्याख्यातृवरेण्याः, स्वयं यस्य कस्यापि प्रबन्धस्य व्याख्यां विरचय्य, गुरोराख्यया प्रकटयन्ति; गुरवे च समर्पयन्ति इति दृष्टचरम्; श्रीरामानन्दसरस्वतीपादास्तु न तथा कृतवन्तः; 'श्रीमद्गोविन्दवाणी-चरणकमलगो निर्वृतोऽहं यथाऽलिः।' इतीदृशान्तिम-पादपर्या-लोचनेन,

श्रीशङ्करं भाष्यकृतं प्रणम्य व्यासं हरिं सूत्रकृतं च वच्मि।
श्रीभाष्यतीर्थे परहंसतुष्ट्यै वाग्जालबन्धच्छिदमभ्युपायम्॥
विस्तृतग्रन्थवीचायामलसं यस्य मानसम्।
व्याख्या तदर्थमारब्धा भाष्यरत्नप्रभाभिधा॥

इत्याद्युपोद्घातपद्यविवेचनेन च श्रीरामानन्दसरस्वतीचरणानां गुरुवर्या एव श्रीगोविन्दसरस्वतीचरणा इति अकामैरपि अभ्युपेयमित्यभिप्रैमः। 'विवरणप्रमेयसंग्रह'-प्रबन्धपरिशीलनेनापि, रत्नप्रभाप्रबन्धॄणां श्रीराम-भक्तिधौरेयत्वम्, रत्नप्रभा व्याख्यातृत्वं च अनन्तरवाङ्मये निरूपयि-ष्यामः। इति शिवम्।

---

## संस्कृतपत्रिकाविमर्शः

**सुप्रभातम्**—षष्ठवर्षे सौरश्रावणभाद्रयोः। प्रदत्तपरिचय-मिदं संस्कृतसाहित्यसमाजस्य मासिकं मुखपत्रम्। 'अद्वितीयमिदं संस्कृतमासिकपत्रम्' इति स्वयमेवोद्घोष्यतेऽनेन। तथापि 'सुप्रभात'-मिदं विगतेषु दिवसेषु विगतजीवनमिवासीत्, आसीदित्यस्य नायमर्थो-

तृतीयाध्यायारम्भेऽपि प्रथमे पादे—

यं हि वैराग्यसम्पन्नास्तत्त्वमर्थं विवेकिनः ।
लभन्ते साधनैर्दान्तास्तं सीतानायकं भजे ॥

तुरीयाध्यायारम्भेऽपि प्रथमे पादे—

यज्ज्ञानाज्जीवतो मुक्तिरुत्क्रान्ति-गति-वर्जिता ।
लभ्यते तत्परं ब्रह्म रामनामाऽस्मि निर्भयम् ॥ इति ।
'श्रीगौर्य्या सकलार्थदं निजपदाम्भोजेन मुक्तिप्रदम्
प्रौढ़ं विघ्नवनं हरन्तमनघं श्रीढ़ुण्ढि-तुण्डासिना ।
वन्दे चर्म-कपालिकोपकरणैर्वैराग्यसौख्यात्परं
नास्तीति प्रदिशन्तमन्तविधुरं श्रीकाशिकेशं शिवम् ॥'

इति रत्नप्रभाप्रारम्भे द्वैतीयीकश्लोक-परिशीलनेन ज्ञायते व्याख्येयं किल वाराणसीम् अधिवसद्भिः श्रीरामानन्दसरस्वतीभिः सङ्कलिता इति ; किञ्च,

कामाक्षीदत्तदुग्धप्रचुरसुरनुत-प्राज्यभोज्याधिपूज्य-
श्रीगौरीनायकाऽभिप्रकटनशिवरामार्य-लब्धात्मबोधैः ।
श्रीमद्गोपालगीर्भिः प्रकटितपरमाद्वैतभासा स्थिताख्य-
श्रीमद्गोविन्दवाणीचरणकमलगो निर्वृतोऽहं यथाऽलिः ॥

पद्यमिदं सूक्ष्मेक्षिकया अनुसन्धीयमानं सत् श्रीमद्रामानन्दसरस्वतीपादानां गुरुपरम्परां याथातथ्येन सुविशदं विख्यापयति ; तथाहि—श्रीरामानन्दसरस्वतीचरणानां गुरवः श्रीगोविन्दसरस्वतीचरणाः ; अमीषां गुरवः खलु, श्रीगोपालसरस्वतीचरणाः ; एतेषां तु गुरवः श्रीशिवरामार्यनामधेयाः ; एषां मनीषिणां हि—श्रीकामाक्षा नाम देव्या पायित-पयःप्रभावेण—

'शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ।
यथा शिवमयो विष्णुरेवं विष्णुमयः शिवः ॥
यथाऽन्तरं न पश्यामि तथा मे स्वस्तिरायुषि ।

...　　...　　...　　...

इति श्रीस्कन्दोपनिषदादिषु प्रबोधितरीत्यनुसारम्, श्रीगौरीनायकस्य पार्वतीपतेः शिवस्य, ई-नायकस्य च लक्ष्मीपतेः विष्णोः रामस्य च ऐक्यबुद्धिरुदियाय इति, नन्वत एव एते शिवरामार्याः अन्वर्थनामधेय-भागधेयभाजनम् इति च अवश्यमङ्गीकर्तव्यम्। अपि च, केचित् खलु व्याख्यातृवरेण्याः, स्वयं यस्य कस्यापि प्रबन्धस्य व्याख्यां विरचय्य, गुरोराख्यया प्रकटयन्ति; गुरवे च समर्पयन्ति इति दृष्टचरम्; श्रीरामानन्दसरस्वतीपादास्तु न तथा कृतवन्तः; 'श्रीमद्गोविन्दवाणी-चरणकमलगो निर्वृतोऽहं यथाऽलिः।' इतीदृशान्तिम-पादपर्या-लोचनेन,

> श्रीशङ्करं भाष्यकृतं प्रणम्य व्यासं हरिं सूत्रकृतं च वच्मि।
> श्रीभाष्यतीर्थे परहंसतुष्ट्यै वाग्जालबन्धच्छिदमभ्युपायम्॥
>
> विस्तृतग्रन्थवीक्षायामलसं यस्य मानसम्।
> व्याख्या तदर्थमारब्धा भाष्यरत्नप्रभाभिधा॥

इत्याद्युपोद्घातपद्यविवेचनेन च श्रीरामानन्दसरस्वतीचरणानां गुरुवर्या एव श्रीगोविन्दसरस्वतीचरणा इति अकामैरपि अभ्युपेयमित्यभिप्रेमः। 'विवरणप्रमेयसंग्रह'-प्रबन्धपरिशीलनेनापि, रत्नप्रभाप्रबन्धॄणां श्रीराम-भक्तिधौरेयत्वम्, रत्नप्रभा व्याख्यातृत्वं च अनन्तरवाङ्मये निरूपयि-ष्यामः। इति शिवम्।

---

## संस्कृतपत्रिकाविमर्शः

**सुप्रभातम्**—षष्ठवर्षे सौरश्रावणभाद्रयोः। प्रदत्तपरिचय-मिदं संस्कृतसाहित्यसमाजस्य मासिकं मुखपत्रम्। 'अद्वितीयमिदं संस्कृतमासिकपत्रम्' इति स्वयमेवोद्घोष्यतेऽनेन। तथापि 'सुप्रभात'-मिदं विगतेषु दिवसेषु विगतजीवनमिवासीत्, आसीदित्यस्य नायमर्थो-

यदिदानीं नास्ति ; अस्त्येव कष्टमयमेवास्य जीवनम्। 'पत्रस्य यथा-समयप्रकाशनाभावेन बहवो ग्राहका अस्य ग्राहकत्वं त्यक्तवन्तः,—यन्त्रालय उपेक्षां करोति—सहायकस्य भृत्यस्य चाभावः' इत्यादिकमात्मविनिवेदनातो विज्ञायैव वयमस्याद्वितीयत्वं प्रतिपद्यापि स्वयं सम्पादकमहत्तमेनैव कृतमद्वितीयत्वभङ्गमङ्गीकुर्म्मह इति विदितमास्तां सौप्राभातिकानाम्।

**उद्यानपत्रिका**—पुस्तकम् ; सञ्चिके १,२। इयमपि दत्त-परिचया। अस्यामेकं पारितोषिकमुद्घोषितम्। 'सम्राट्पञ्चमजार्ज-धर्म्मतरणिविद्योततां भूतले' 'जीयात् पञ्चमजार्ज-लोकविजयी श्रीचित्र सन्नाव(?)धिः' अनयोरन्यतरां समस्यामादाय यावच्छक्ति श्लोका विलिख्य मार्गशीर्षदर्शात् प्राक् प्रेषणीयाः। ययोः श्लोका उत्तम-तया निर्धार्यन्ते तयोरेकस्य स्वर्णपदकम् अन्यस्य रजतपदकं च दास्यते। S. K. P. Moman Ram Shastri V. B. Asthana Pandita, Shri Rama Vaikuntha, Puskar, Ajmir. अस्यां सम्पादकीये चोक्तं—'नवीनानपेक्ष्य प्राचीनरीत्याऽधिगतविद्यानामयं विशेषः यदिमे मुखस्थविद्या भवन्ति न पुस्तकस्थविद्याः। तादृशा इदानीं क्रमेण अपचीयमानसंख्या भवन्ति।' विचारयन्तु अस्य वचनस्य समीचीनता-मसमीचीनतां वा साध्वसाधुविचारनिपुणाः प्रियपाठकाः।

---

## परिषत्सन्देशः

**शोकप्रकाशः**—प्रियवाचक-महाभागाः! अहन्यहनि श्रावं श्रावं देवस्य वैवस्वतस्य संहारलीलायामत्यादरं को वा विवेकी नेच्छति वधिरीभूतामात्मकर्णद्वयीम्। पुरुषायुषजीवित्वमिदानीं शास्त्रकुक्षौ लीनमलीकतामिव व्यगाहत प्राणिनां वास्तवदशायाम्। कियद्दिनान्तर एव केचन तथाभूताः प्रख्यातकीर्त्तयो जनाः परलोक-

सुपागमन् ये सर्वथा जनप्रिया विद्वांसो दानवीरत्वादिगुणोपस्थिता-श्चासन्। तत्र—

**महाराज-मणीन्द्रचन्द्रनन्दी**—प्राथम्येन निर्देशमर्हति। अयं हि महात्मा दानवीर इति ख्यातः शीलेन सर्वेषामेव जनानां हृदयमावर्जयत्। को वा वङ्गीयस्तत्रभवतः सहृदयता-गोचरीभूत-मात्मानं नाभ्युपैति। न जानीमो वयं दानशौण्डात्तत्रभवतः प्रत्याख्यातानर्थिनः। यत् सत्यमव्यभिचारीव वचनमिदं वक्ष्यमाणं मानवेषु केवलं तत्रभवत्येव प्रयुज्यमानमभिलषत्यभिरूपसम्प्रदायः—'अर्थितस्तु न महान् समीहते जीवनं किमु धनं धनायितुम्।' इति। द्वितीयश्च तत्रभवान् विक्रमपुरान्तर्गत 'टोलवासाइल' निवासी—

**म. म. कृष्णचरणतर्कालङ्कारः**—स्मार्तप्रकाण्डोऽयं स्मृतिशास्त्रेषु प्रगाढ़व्युत्पत्तिं लभमानो नव्यप्राचीनन्यायेष्वपि ज्ञान-विशेषमुदकर्षयत्। जीविकाव्यपदेशेन प्राचीनप्रथामुल्लङ्घ्य भृति-मूल्येन विद्यायाः शिष्यसंक्रमकर्मण्यात्मानं नियोजयतोऽपि प्रावर्त्तताऽस्य विशेषेणैव ब्राह्मणानामाचारपद्धतिरक्षुण्णेति को वा नाङ्गीकुर्य्यात्। अन्तर्द्धानेन चास्य केव स्याद् दशाविपर्य्यासपरम्परा स्मृतिशास्त्रस्येति व्याकुला वयमनुक्षणमनुदध्मः। तृतीयस्तत्रभवान् मद्रप्रान्तीयः—

**एस्, भि, आप्पलाचार्य्यः**—विद्वत्प्रकाण्डोऽयम् आङ्गला-दिशास्त्रे कृतविपुलश्रम. 'राजामुन्द्रि'स्थ गभर्णमेण्ट् आर्टस् विद्यालये अध्यापकपदे नियुक्त आसीत्, पश्चात् भारतगभर्णमेण्टसकाशाद् वृत्तिं लब्ध्वा न्यायशास्त्राध्ययनार्थं जन्मभूमिं परित्यज्य सुदूर-वङ्गप्रान्तीय-कलि-कातामहानगर्य्यां वासमकल्पयत्। अप्रमेयाद् दौर्भाग्यधेयादधीतिकामो-ऽयं न केवलं स्वाभिलषितादध्ययनाद् नवा केवलमनुवेलप्रियात् स्वदे-शात् परं जीवनादेव चिराय व्यच्छिद्यतेति खिद्यते नश्चेतः। अनया चातृप्तया वासनया प्रेत्यापि शान्तिमनाप्नुवतस्तत्रभवतामात्मनश्चिर-

शान्तिं कामयमाना वयं तदीयपरिजनेभ्यः समदुःखतामुपक्षिपामः। चतुर्थः—

**सुरेन्द्रनाथरायः** —धीरधुरीणोऽयं पराधीनताविधूनितेऽस्मिन् भारतवर्षे स्वाधीनया जीविकया निकायस्थोऽपि प्रभूतं धनमुपार्जयत्। स्वप्रतिष्ठश्च भारतीयव्यवस्थापरिषदि पदं कृत्वा देशस्य दशकस्य चोपकारमकरोत्। पञ्चमः—

**पञ्चाननदास-मुखोपाध्यायः**—कलिकातायां प्रेसिडेन्सि-नामधेय-महाविद्यालयाध्यापकोऽयम् अध्यापनायामन्वर्थमकरोन्नामधेयमिति तच्छात्रा एव सर्वदा प्रस्तुवन्ति। षष्ठः—

**चारुचन्द्रसिंहः** —विवादपरे गभर्णमेण्टपक्षतः समुपक्षिप्तोऽयं व्यवहाराजीवो जीववदेतत्स्थूलशरीरे प्रभूतानि धनानि प्रभूतं यशः प्रभूतञ्च मानसन्दोहमविन्ददिति के वा परनिन्दोपजीविनोऽपि नोपजीवेयुः।

तैस्तैर्धीरधुरन्धरैर्विधुरीकृता वङ्गराजधानी निधानव्ययदीना नास्मान् यथापूर्वं धिनोतीति नातिरिच्यते वचः। सर्व एवैते महात्मानः परिषत्सभ्या आसन्निति सविशेष-शोकक्षुब्धा वयं तत्परिजनेभ्यः शोकविकलेभ्यो विभ्यद्भ्यश्च संसारमार्गादीश्वराशीर्वादमभिनिर्हराम इति।

**आङ्गलप्रतिष्ठाने संस्कृतनिष्ठा**—महदिदं महीयमानायाः सुरभारत्याः प्राभातिकमिव कोकिलकलकूजितमाशास्थानं, यदद्यतन-कालकलायामाङ्गलादिभारतीरसिकेष्वपि तस्याः प्रतिभात्यादरभूमा। श्रोत्रियेभ्योऽपि साधुसंसद्यास्वाद्यमानमिव वानरनृत्यमत्यादरोयमस्तु वा सोपहासमस्तु वाप्रस्तुतनिन्दाभिनन्दितं, तथापि यथा तथा वा कृतसंसर्गाः प्राणिवर्गा गैर्वाणगिरा काले नूनमस्या गुणवश्या भविष्यन्तीति नास्माभिरल्पमप्यन्यमनायितव्यम्।

इतः पूर्वं कलिकाता-विश्वविद्यालाध्यापकानां आर्ट्‌स्‌फ्याकाल्‌टि क्लव (Arts Faculty Club, Calcutta university) नामधेये प्रतिष्ठाने वार्षिकोत्सवमुपलक्ष्याभूत् संस्कृतरूपकाणामभिनयः। परिषन्नाट्यसमितिरेव तत्र सादरमाहूता "मध्यमव्यायोग-मत्तविलास-भगवदज्जुकीय" रूपकाणामभिनयेन समन्वतोषयद्दोषैकदृशामपि मानसमिति।

"स्काटिशचार्च"महाविद्यालये चाब्दिकं "संस्कृत-संस"म्महोत्सवमुपलक्ष्य "संस्कृतसाहित्यपरिषच्छात्रसमित्या" सबहुमानमभ्यर्थितया कृतः "कर्णभार"व्यायोगाभिनयः प्रभिन्नप्रतिभानामाङ्गलभाषाध्यायिनामपि च्छात्राणां मानसमतोषयत्। आसीच्च तत्र समागतानां चित्तरञ्जकः प्रभूतानां विषयाणां समभिहारः कृतस्तत्समायोक्तृभिरिति शम्।

---

# रसमञ्जरी

[ निबन्धकः—श्रीदक्षिणारञ्जन-शास्त्री एम्. ए ]

**छात्रप्रतिभा**—अथैकदा शिरोमणिर्माधवमाह—माधव, प्रत्नतत्त्वे ते कीदृशी कुशलतेति ज्ञातुं समुत्सुकोऽहं पृच्छामि कालिदासः कदा प्रादुरभूदिति। प्रत्युत्पन्नमतिना माधवेनोक्तं ;—प्रत्नतत्त्वशास्त्रे अन्तरङ्गबहिरङ्ग प्रमाणयोरन्तरङ्गप्रमाणमेव बलीयः। अतो मयान्तरङ्गप्रमाणमाश्रित्योच्यते कालिदासः समुद्रगुप्ताख्यनरपतेः समय एव प्रादुरभूत्। अन्यथा कथमनेन—"आ समुद्रक्षितीशानां" "गोप्त्रे गुप्ततमेन्द्रियाः" इत्यादौ 'समुद्र'शब्दस्य 'गुप्त'शब्दस्य च प्रयोगः कृतः ? अनयोर्मेलनेन च 'समुद्रगुप्त' इत्येव भवति।

* * * * * * *

शिरोमणिः पुनरप्याह—माधव, उच्यतामिदानीं कालिदासो जन्मना कतमं देशं समलङ्कृतवानिति। प्रत्नतत्त्वविशारदो माधवो विहस्याह ;—अत्रापि अन्तरङ्गप्रमाणबलमाश्रित्य मयोच्यते ;—वङ्गान्तर्गत-तालीवनाख्य-पत्तनमेवास्य जन्मना समलङ्कृतमिति। कथमन्यथानेन प्रयुक्तं 'तमालतालीवनराजिनीला' इत्यादिकम् ?

* * * * * * *

शिरोमणिः प्राह—माधव, 'मोक्षमूलर' प्रमुखाणां कथं वेदप्रकाशे वेदव्याख्याने वाधिकारः सङ्गच्छते म्लेच्छानाम् ? माधवेनोक्तं—यतस्ते मोक्षमूलरादयो जर्म्मणीयाः। जर्म्मन् इति शब्दस्तु शर्म्मन्-शब्दादेवोत्पन्नस्तस्मादभिन्नश्चातो ब्राह्मणास्ते, यतः शर्म्मन्निति ब्राह्मणानामेवोपनाम। वेदप्रकाशविधौ वेदव्याख्याने च ब्राह्मणानामेवाधिकारः। अन्यच्च ते ख्रीष्टोपासकाः कृष्णोपासका एव। अतो नास्ति दोषलेशोऽप्यत्र। जापानानां तु न वेदे अधिकारो यतस्ते यवनाः। न वा 'अशासीरिया' निवासिनां यतस्ते असुराः।

* * * * * * *

श्वशुरालयं प्रति गच्छन् माधवः पित्रा समादिष्टः ;—'पुत्र, श्वशुरालयं गत्वा श्वशुरादिभिः सह सदालापादिकं विधीयता'मिति। माधवोऽपि तथेति गृहीताज्ञः श्वशुरालयं संप्राप्य पितुरादेशं शिरसि निधाय श्वशुरमाह—'श्वशुर, किं विवाहितो भवान्' इति। श्वशुरस्तु जामातुरालापेन विस्मयपयोधिजले दुःखपारावारे च निममज्ज।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

| January 1930. | १८५१ शकीये पौषे<br>१२श-वर्षस्य ९म-संख्या | Vol. XII. No 9. |
|---|---|---|

## जनन्यष्टकम्

[ निबन्धकः—श्रीसीतानाथकान्तिरत्नः ]

मातस्त्वं परमेश्वरीव महिमा ते केन विज्ञायते
त्वं दुःखक्षयकारिणी मम सदा स्वर्गापवर्गप्रदा।
त्वच्चक्षुः शिशुकालतस्त्वमधमस्यानन्दनं चेतसः
संज्ञाहीनतया तवेदमधमो नाज्ञासिषं किञ्चन॥ १

आजन्मैवमसह्यदुःखनिचयं सासह्यमाना सती
रक्षित्वा बहुरोगतः कृतवती त्वं देवि ! मां मानुषम्।
तस्मादद्य शुभाशुभस्य विषयं जानन् स्वकार्य्ये क्षमो
मातस्ते विषयं विचिन्त्य विमनाः क्रन्दामि हा मन्दधीः॥ २

जननि ! जठरे परिगृह्य जनुं
क्रमशोऽवयवान् कुशलानगमम्।

अशनीयरसे रसनादिरसौ
तव मेऽवयवः परिपुष्टिमितः ॥ ३
तव पालनतस्तव पोषणत-
स्तव धारणतस्तव लाड़नतः।
तव शासनतस्तव भाषणतो
जननीह सुतस्तव वृद्धिमितः ॥ ४
जगदीश-सकाश इमं हि सुतं
कुशलं सकलं कतिशोऽचतथाः।
जननीमिव नो जगतीह जनं
परिलोकयते सुत एष हितम् ॥ ५
अजयेऽप्यजयं विजये विजयं
असुखेऽप्यसुखं सुसुखे स्वसुखम्।
अशुभेऽप्यशुभं सुशुभे स्वशुभं
स्वसुतस्य कृते सततं लभसे ॥ ६
बहुकालपरं मम दर्शनतो
बहुकालपरं घनदर्शनतः।
सुखदे! शुभदे! शमदे! बहु मां
सदयेव हि पश्यसि लोकवधूः ॥ ७
अकृतज्ञसुतेन हि शैशवतो
नहि मोहवशान्महिमा महिते!
तव बुध्यत एव मया क्षमतां
महतीं भवतीं प्रणमामि मुदा ॥ ८

---

# तन्त्रालोचनम् *

[ निबन्धकः—श्रीचिन्ताहरणकाव्यतीर्थः एम्. ए. ]

सम्यगालोचनाभावात् शास्त्रान्तराणीव तन्त्रशास्त्रमपीदानीन्तने काले दुर्बोधतां भजत् क्रमेण विलोपमिव समासीददुपलक्ष्यते। तन्त्रतत्त्वञ्च सम्यक्तयाऽनवबुध्य शास्त्रस्यास्य धर्मोत्कर्षापादनाशक्तत्वादिदोषप्रचुरत्वमनल्पसमुद्घोषयन्ति केचन सुतरामालोचितविविधतत्त्वाः प्रज्ञावन्तोऽपीति विशेषेणानादरोपहृतमिदं शास्त्रमधुना पण्डितसमाजेषु। यत् सत्यं गुरूपदेशमन्तरा शास्त्रस्यास्य रहस्यं न किमप्यधिगन्तुं शक्यम्,—न वा कथमपि समधिगतरहस्या अपि सुमनसः 'गोपयेन्मातृजारवत्' 'गोप्या कुलवधूरिव' इत्यादिशास्त्रनिर्देशमुररीकुर्वन्तः अधिकारिणं शिष्यमन्तरेण यत्र तत्र रहस्यं प्रकाशयितुं कामयन्ते। न च विना साधनं केवलं शास्त्रालोचनेनैव तन्त्ररहस्यं केऽपि प्रभवेयुरवबोद्धुम्।

तथापि यथाशक्ति आधीयमाने प्रयत्ने शास्त्रालोचनमात्रेणाऽपि शास्त्ररहस्यं स्फुटीभवतु मा वा, शास्त्रविषयम् अवज्ञादिकं क्रमशः परिहीयेत, श्रद्धाविशेषश्चात्र समुदियात्। समुत्पन्ने च श्रद्धाविशेषे समालोचयतामेव केषाञ्चिदनुष्ठानविषयिण्यपि बुद्धिरुत्पद्येत इति शास्त्रस्यास्य आलोचनानौचित्यं न कयापि युक्त्या प्रतिपादयितुं शक्यम्।

तत्र च प्रवर्त्तमाने आलोचने प्रथमत एव किं नाम तन्त्रमिति प्रश्नः पदं करोति जिज्ञासूनां हृदयेषु। तत्र—

> 'आगतं शिववक्त्रेभ्यो गतञ्च गिरिजामुखे।
> मतञ्च वासुदेवस्य तस्मादागम उच्यते॥'

इत्येवं निर्दिष्टस्यागमशास्त्रस्य भेदविशेषे एव तन्त्रशब्दस्य रूढत्वेऽपि तन्त्रागमयोर्न कोऽपि क्रियते विभेदो भाषायाम्। वस्तुतस्तु आगमार्थं

---

* परिषदो मासिकाधिवेशने वाचितोऽयं निबन्धः।

एव तन्त्रशब्दस्य बहुलप्रयोगः समुपलभ्यते प्राक्तनेऽपि काले, आगम-शब्दस्त्वाधुना प्रायेण विरलप्रचार एव।

तन्त्रशब्दस्य बह्वः कल्पन्ते व्युत्पत्तयः। 'तनु विस्तारे' इत्यस्मात् 'तन्त्रि अवबोधने' इति वा धातोरस्य शब्दस्य निष्पत्तिं कल्पयन्ति सुधियः। परं मूलमन्त्र-बीजमन्त्र-मुद्रा-न्यासादय एव प्राधान्येन तन्त्रानुष्ठानस्य वैशिष्ट्यमापादयन्तीति तद्‌विधानपरा ग्रन्था एव तान्त्रिका इति सामान्येन व्यपदेशो भवितुमर्हति।

**तन्त्रस्य प्राचीनत्वम्**—केचन केचन साकल्येनैव तन्त्र-शास्त्रस्यार्वाचीनत्वं प्रतिपादयितुमनसः, केचन चास्य अंशविशेषस्यैव तथात्वं प्रतिपादयितुं प्रयत्नपरम्परामातिष्ठन्ति। परं तन्त्रोक्तानु-ष्ठानसदृशम् अनुष्ठानजातं प्रायेण सर्वत्रैव देशेषु प्राचीनजनसमाजेषु प्रचरदासीदिति नायं नवीनः सन्देशः प्राचीनेतिवृत्तमालोचयतां सुधियाम्। मारणवशीकरणादीनि कर्म्माणि देशान्तरेष्विव भारते अपि सुप्राचीनाद् एव कालात् यत् प्रचरन्ति तत् वैदिकग्रन्थेभ्यः अने-केभ्यः सुस्पष्टमेव प्रतिभाति। भास्कराचार्य्यप्रभृतयस्तान्त्रिकाचार्य्य-चूडामणयस्तन्त्राणां न केवलं वेदाविरुद्धत्वं किन्तु वैदिकत्वमपि संस्था-पयितुमीशते स्म। तथा चोक्तं सेतुबन्धे—'वेदे च पूर्वकाण्डस्य शेषभूत-तया आश्वलायनादिकल्पसूत्राणां मन्वादिस्मृतीनाञ्च प्रवृत्तिवत् उपनिषत्काण्डशेषत्वेन परशुरामकल्पसूत्राणां यामलादितन्त्राणाञ्च प्रवृत्ति'रिति। तन्त्रोपनिषद्‌ग्रन्थाश्च तन्त्राणां वदिकत्वमेव प्रकटय-न्तीति तेषां सम्मतम्। तथा च सर्वाण्येव तान्त्रिकानुष्ठानानि वेदानुकूलान्येव इति समामनन्ति ते सुधियः। तान्त्रिकमन्त्रादयो-ऽपि वेदादेव समुद्ध्रियन्ते। अथर्ववेदाङ्गत्वेन तन्त्रशास्त्रस्य निर्देशश्च बहुत्रैवोपलभ्यते। नेपालराजकीयग्रन्थागारस्थितस्य कालीकुलार्णव-तन्त्रग्रन्थस्यादावेव 'अथात आथर्वणशाखायां श्रीदेव्युवाच' इति पंक्तिः, रुद्रयामले सप्तदशपटले महादेव्या अथर्ववेदशाखिनीति विशेषणं,

दामोदरकृत-यन्त्रचिन्तामणिग्रन्थस्य "आथर्वणस्य वेदस्य सारात् सारतरं परम्" इति प्रशस्तिख्यापनं, कुलार्णवे च द्वितीयपटले—

"तस्माद् वेदात्मकं शास्त्रं विद्धि कौलात्मकं प्रिये।
मथित्वा ज्ञानदण्डेन वेदागममहार्णवम्।
सारज्ञेन मया देवि कुलधर्मः समुद्धृतः॥"
"देवताभ्यः पितृभ्यश्च मधु वाता ऋतायते।
स्वादिष्टयामदिष्टया चीरं सर्पिर्मधूदकम्॥
हिरण्यपात्राः स्वादिश्च अवघ्नन् पुरुषं पशुम्।
दीक्षामुपेयादित्याद्याः प्रमाणं श्रुतयः प्रिये॥"

इत्याद्युक्तयश्च तन्त्राणां वैदिकत्वमेव सूचयन्ति।

यत् सत्यं तन्त्रविदूषकैस्तन्त्राणां वैदिकत्वं नैवाङ्गीकृतं वेदविरुद्धत्वञ्च तान्त्रिकाचाराणाम् अनेकशः समुद्घोषितम्। परं नैतावता वेदेषूपलब्धानां तान्त्रिकाचाराणां केषाञ्चन न कयापि दिशाऽनङ्गीकरणं सम्भवेत्। यद्यपि तन्त्रोक्तं मकारपञ्चकं न तथैव नामतो निर्दिष्टं वेदेषु, तथापि मद्यमैथुनादीनामुपयोगो वैदिकाचारेष्वपि तान्त्रिकानुष्ठानेष्विव भूयसा परिदृश्यत इति नाविदितं कस्यापि। 'न काञ्चन परिहरेत् तद् व्रतम्। एतद् वामदेव्यं मिथुने प्रोतम्' इति वामदेव्योपासनाङ्गभूतो योषिदुपभोगो नैषधचरितकारेण श्रीहर्षेणाप्युल्लिखितः। सौत्रामण्यादिषु च यागेषु सुराया उपयोगस्तथैव सुविदितः। मांसमपि बाहुल्येनैव पशुयज्ञेषु सुतरामुपायुज्यत। शूलगवे च गोमांसोपयोगस्यापि विधिरुपलभ्यते। अभिचारादीनि च कर्माणि न नाम वेदेषु न निर्दिष्टानि। यत्सत्यमेतेषां कर्मणां पापजनकत्वमपि निरूपितम्। परमेतान्यपि यत् कैश्चिदालम्बितान्येव न तत्र संशयो लेशतोऽपि वरीवर्त्ति। तैत्तिरीयब्राह्मणे च सांग्रहण्येष्ट्या यन्नामोपलभ्यते विवरणं तेनास्याः तान्त्रिकवशीकरणान्न भेदः प्रतीयते मनागपि। एवञ्चात्र सायणभाष्यात् अंशविशेषः समुद्ध्रियते।

"मनसा परस्परमैकमत्येन सम्यक् स्वीकारः संग्रहणम्। तद् यस्यामिच्यामस्ति सा सांग्रहणी॥......ज्ञातिमनसः स्वाधीनत्वेन ग्रहणं मनोग्रहणं, तदेव सम्यग्ग्रहणम् इत्युच्यते। ततः सांग्रहण्येष्या सजातानां मनः स्वाधीनं करोति।......स्वकुले स्वजातिषु मध्ये स्वग्रामे च ये महान्तः पुरुषाः प्रौढाः ये च क्षुल्लका बाला याश्च पत्नी-भगिनीमात्रादयः स्त्रियः एतावन्त एवापेक्षिताः सजातास्तानन्येष्या स्वाधीनान् करोति। ते च जनाः स्वाधीना एव सन्त एनं सेवन्ते।"

विस्तरभिया अथर्ववेदोक्तानामेतादृशानां कर्मणां विशिष्य विवरणं नात्रोपादीयते। केवलं पिष्टपेषणन्यायेनैतदेवोल्लिख्यते सुविदितमेव वस्तु यत् एतान्येव कर्माणि बाहुल्येन तत्र प्रतिपादितानीति। बौद्धानां जैनानाञ्च शास्त्रग्रन्थेषु खण्डनमुखेन निन्दापरत्वेन च तन्त्रोक्ताचाराणा-मुल्लेखः कृतः।

एवञ्चैतावता एतद् वक्तुं पार्य्यते यत् तन्त्रानुष्ठानानि नार्वाचीनानि, न वा सङ्कीर्णस्थानमात्रेष्वेव प्रचरद्रूपाणि। एवंविधान्येवानुष्ठानानि बहोः कालात् प्रागेव बहुष्वेव देशेषु प्रचरन्ति दरीदृश्यन्ते,—न चेदानीन्तने-ऽपि काले तन्त्रानुष्ठानं भारतस्य प्रदेशविशेषेष्वेव निबद्धम्। यत् सत्यं भारतस्य सर्वत्र सर्वेष्वेव ब्राह्मण्यधर्मानुष्ठानेषु तान्त्रिकत्वमुत्-पश्यामो वयम्। उपनयनादिषु वैदिकाचारेष्वपि गौर्य्यादिषोडश-मातृकापूजनादिरूपस्तान्त्रिकानुष्ठानमन्तर्भवति वङ्गेषु, देवतापूजना-दिकन्तु सर्वं तान्त्रिकेणैवानुष्ठानेन निर्वाह्यते सर्वत्र। न च विना मूलमन्त्रं विना न्यासादिकञ्च अर्चनादिकं दृष्टचरम्। मूलमन्त्रा-दिकञ्च यत्तान्त्रिकमेव वस्तु न तत्र विलसति विप्रतिपत्तिः कापि।

न चैतावता मदीयप्रयत्नेन कस्यापि चेतस्येवंरूपा धारणा पदं करोतु, यत् वयं तन्त्रग्रन्थानामपि तन्त्रानुष्ठानानामिव सुप्राचीनत्वं प्रतिष्ठापयितुकामा इति। यत् सत्यं केचन तन्त्रग्रन्थाः सुतरामेव प्राचीनाः। तथा च महामहोपाध्यायैः श्रीमद्धरप्रसादशास्त्रिभि-

नेपालराजकीयग्रन्थागारे गुप्तवंशराजसमकालीनाक्षरनिबद्धाः प्रत्यक्षी-कृता वर्णिताश्च केचन तन्त्रग्रन्थाः। केचन केचन बौद्धतन्त्रग्रन्थाश्च यत् अतितरामेव प्राचीनास्तत् चैनिकपरिव्राजकभ्रमणविवरणग्रन्थेभ्यः भोटचैनिकानुवादग्रन्थेभ्यश्च स्पष्टमेव प्रतीयते। परं केऽपि ग्रन्थाः सुव्यक्तमेवार्वाक्तनत्वलिङ्गं दधतो विराजन्ते। दाक्षिणात्य-शैवाना-मुत्तरकारणागमे तिरुज्ञानसम्बन्धस्योल्लेखः, वैष्णवानां वैखानसागमे द्रविडवेदपाठविधानम्, ईश्वरसंहितायां बृहद्ब्रह्मसंहितायाञ्च आचार्य्यश्रीरामानुजपादानां नामनिर्देशः सुतरामेव तत्तद्ग्रन्थाना-मर्वाक्तनत्वमाविष्कुर्वन्ति (१)। योगिनीतन्त्रे कोचवंशादिपुरुषस्य विष्णुसिंहस्य, विश्वसारतन्त्रे श्रीचैतन्यपार्षदस्य नित्यानन्दस्य च वृत्तान्त स्तथा मेरुतन्त्रे इंलण्डीयानामुल्लेखोऽपि तथैवैतेषाम् अर्वाक्तनत्वमतिं सर्वथा द्रढयतीव (२)। केवलम् अर्वाक्तनपुरुषाद्युल्लेखवता केनचि-दंशमात्रेणैव सकलस्यापि ग्रन्थस्य अर्वाचीनत्वप्रतिपादनप्रयासस्या-युक्तिकत्वेऽपि अर्वाक्तनेऽपि काले केचनांशा योजिता एवेति निर्वि-वादम्।

**तन्त्रप्रामाण्यम्**—न चैतदाधुनिकानां मतमितिकल्पोपेक्ष-णीयम्। तन्त्राप्रामाण्यं प्रतिपादयतां प्राचीनानामपि एवमेव सिद्धान्तः। तन्त्रप्रामाण्यविचारस्य नायमवसरः। केवलमेतदेव वाच्यं यत् तन्त्रस्य वैदिकत्वे प्रामाण्ये च प्रतिपिपादयिषुतायामपि केषाञ्चन तन्त्राचार्य्याणां सुप्राचीनादेव कालात् तन्त्राप्रामाण्यं प्रथयन्तः तन्त्रदुष्टत्वञ्चोद्घोषयन्त आसन् बहव एव जनाः। पुराण-धर्मशास्त्रादि

---

(१) अत्र विषये गोपीनाथरावो कृत *Elements of Hindu Iconography* नाम ग्रन्थो द्रष्टव्यः।

(२) विषयेऽत्र मन्मथनाथदत्तकृत-महानिर्वाणतन्त्रे तन्त्राङ्ग्लानुवादग्रन्थभूमिका-लोचनीया।

ग्रन्थेष्वपि सूचनमेतस्य वरीवर्त्ति। तन्त्रविदूषकैश्च तेषु तेषु ग्रन्थेषु तन्त्राप्रामाण्यं सुव्यक्तमेव प्रतिपादितमित्यनुमीयते।

"कापालं पाञ्चरात्रं च यामलं वाममार्हतम्।
एवंविधानि चान्यानि मोहनार्थानि तानि तु॥
कापालिकाः पाशुपताः शैवाश्च सह कारुकैः।
दृष्टाश्चेद् रविमीक्षेत स्पृष्टाश्चेत् स्नानमाचरेत्॥
पाषण्डिनो विकर्मस्थान् धर्माचार्य्यांस्तथैव च।
पाञ्चरात्रान् पाशुपतान् वाङ्मात्रेणापि नार्चयेत्॥"

इत्यादीनि परःशतानि वचनान्युपस्थापयितुं शक्येरन्। केषुचित्तन्त्रग्रन्थेष्वपि साधारण्येन तन्त्रनिन्दा प्रकटीकृता। तथा च भैरवडामरे—

'दुष्टानां मोहनार्थाय सुगमं तन्त्रमीरितम्।' इति।

विभिन्नप्रस्थानीयग्रन्थेषु च तदितरप्रस्थाननिन्दा प्रचुरतयैवोपलभ्यते। तथा पशुमतसमयमतावलम्बिभिः पाञ्चरात्रैश्च कौलमतस्य कौलादिभिश्च पशुमतादीनां भूयसी एवानुष्ठिता निन्दा। तत्र च निन्दायां तत्तन्मतस्यावैदिकत्वं पौरुषेयत्वमर्वाक्तनत्वं च प्रतिपाद्यते।

उक्तञ्च वेदोक्तमेव पाञ्चरात्रप्रामाण्ये पाशुपतमतासारतां प्रतिपिपादयिषुणा—'केनचिदर्वाक्तनेन चैत्रेन महेश्वरसमाननाम्ना त्रयीमार्गबहिष्कृतेयं प्रक्रिया विरचिता। तन्नामसामान्येन केचिद् भ्रान्त्या महेश्वरोपदिष्टमार्गमवलम्बितवन्तः' इति।

पाञ्चरात्रमतमपि एवंन्यायेनैव दूषितम् इति

"वासुदेवाभिधानेन केनचिद् विप्रलिप्सुना।
प्रणीतं प्रस्तुतं तन्त्रमिति निश्चिनुमो वयम्॥"

यामुनाचार्य्योद्धृतवचनात् तथा—

अथांशः सात्वतो नाम विष्णुभक्तः प्रतापवान्।
महात्मा दाननिरतो धनुर्वेदविदां वरः॥

स नारदस्य वचनाद् वासुदेवार्चने रतः।
शास्त्रं प्रवर्त्तयामास कुण्डगोलादिभिः श्रितम् ॥
तस्य नाम्ना तु विख्यातं सात्वतं नाम शोभनम्।
प्रवर्त्तते महाशास्त्रं कुण्डगोलादीनां हितम् ॥

इति कूर्म्मपुराणवचनाच्च प्रतीयते।

नैते दोषाः साकल्येन खण्डयितुं शक्याः। तथा च एवं तन्त्र-विषये दोषश्रुतिनिन्दावादादिके दत्तदृष्टिकैः तन्त्राचार्य्यैः तन्त्राणां सदसद्भेदेन वैदिकावैदिकभेदेन च द्वैविध्यमुररीकृतम्। तथा विषय-मिममधिकृत्य सेतुबन्धे भास्कराचार्य्येण यदुक्तं वाचकानां सुखबोधाय तदेवोद्धृत्य प्रबन्धोपसंहारः क्रियते।

"पाञ्चरात्रं भागवतं तथा वैखानसाभिधम्।
वेदभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवान् ॥

इत्यादिना कतिपयानामेव परिगणनमुपपद्यते। तेन—

श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः।
क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत् ॥

इत्यत्र तन्त्रसामान्यपदं तादृशविशेषपरम्। 'पत्युरसामञ्जस्यात्' इत्यधिकरणमपि तादृशतन्त्रपरम् एव।"

"यच्च कापालं भैरवं चैवे"ति कौर्म्मे गणितं तन्त्रं तत् देव्या विमुख-जनव्यामोहाय उक्तत्वात् अवैदिकाधिकारिकम् इति तत्रैव प्रतिपादनात् नोत्तमतन्त्रेषु तस्यावसरः।

यत्तु कौलधर्म्मनिन्दादिकं तन्त्रान्तरे स्मर्य्यते, तत्र हि निन्दा-न्यायेन तत्तत्तन्त्रस्तुतिमात्रपरम्। कथमन्यथा—

पशुशास्त्राणि सर्वाणि मयैव कथितानि हि।
मूर्त्यन्तरं तु सम्प्राप्य मोहनाय दुरात्मनाम् ॥

महापापवशान्नृणां तेषु वाञ्छाऽभिजायते ।
तेषां हि सद्गतिर्नास्ति कल्पकोटिशतैरपि ॥

इत्यादीनि कौलप्रकरणस्थानि परःशतानि शिववचनानि सङ्गच्छेरन् । वस्तुतस्तु कौलोपास्तेश्चरमभूमिकारूपतया तदधिकारि-दौर्लभ्याद् अधिकारमज्ञात्वा तत्र प्रवर्त्तने च तद्विरुद्धाचारावश्यम्भावात् तेषां निन्दा, अधिकारसद्भावेऽपि वाऽतिरहस्ये प्रवृत्तिर्माभूदित्येतदर्थमपि निन्दावाक्यमित्युपपद्यते ।"

तन्त्रविषये वक्तव्यबहुत्वेऽपि किञ्चिदेवात्रोक्तम् । विस्तरस्तु प्रकाश्यमाने एतद्विषयके मदीयाङ्गलनिबन्धेऽनुसन्धेय इति शम् ।

---

## श्यामाभिसारः

[ निबन्धकः—श्रीयामिनीकान्तसाहित्याचार्य्यः ]

वसति विषमशरभाजः
कुञ्ज-भवनमधि सीदति निरवधि
सखि ! नवनागर-राजः ॥

घोर-कुहूनिशि वल्गति दिशि दिशि
तामसततिरतिपीना
वञ्चित-गृहपति चल सखि ! सम्प्रति
नीलवसन-युग-लीना ॥

नील-नभसि नव- शारद-विधुरिव
तमसि सुतनु ! तनुरेषा
भवतु बहुल-घन- मृगमद-लेपन-
निविड़-तिमिरपरिशेषा ॥

गजमणिहारं　　　　नय परिहारं
　　तमसि वितत-सितभासं
नीलनलिनमय-　　　　दाम समुपनय
　　तत्पदमनु सखि ! वासम् ॥

भवदवलम्बित-　　　　गमनविलम्बित-
　　मनुचितमतिचिरमत्र
कलय क्वते तव　　　　ताम्यति माधव-
　　तनुरनुसर सति ! तत्र ॥

कोकिल-कलकल-　　　　मनसिजमङ्गल-
　　विश्वविजयजयगीतिं
यदि सखि ! कलयति　　गणयति यदुपति-
　　रशनिपतनभवभीतिम् ॥

निशमय खरतर-　　　　विषम-कुसुमशर-
　　शीर्णकलेवर एष
लघु लघु विलपति　　　　मुहुरपि मुह्यति
　　विलुठति जीवितशेष: ॥

मेरुमहीधर-　　　　पीनपयोधर-
　　गौरवमन्थरयानं
रङ्गिणि ! विरमय　　　　सङ्गिनमुपनय
　　मधुरमधररसपानम् ॥

---

# कलिकातानिवासतत्त्वम्

[ निबन्धकः—श्रीपुलिनविहारी दासगुप्तः वि. एल् ]

श्रीमत्कुमुदिनीनायकभूषणस्त्रैलोक्याधिदेवः पिनाकधृक् श्रीमच्छङ्करोऽवतु किल्बिषादस्मान्, साधयन्तु च शान्तिं विघ्नान् दूरीकृत्य हेरम्बचरणाम्बुजरेणवः। अथादौ भारतीययवनाधिकारशेषे वङ्गराजनिकेतनं मुर्शिदावादाख्यनगरे सुप्रतिष्ठितमासीत्। प्रागेव युरोपागता वणिजः पञ्चदेशवासिनः पञ्चजातितः पञ्चधा विभक्ता "इष्टइण्डियाकोम्पानि" संज्ञका वाणिज्यार्थमत्रागत्य विभिन्नप्रदेशेष्वापणागाराणि निर्माय यथासुखं वाणिज्यादिकं कृत्वा तत्र तत्र न्यूषुः। तेषां त्रयोऽपि वाणिज्येषु समुन्नतिं ख्यातिं समृद्धिञ्च लेभिरे। इंलण्डदेशीयाः फरासीदेशीयाः पर्त्तुगीजाश्चैते त्रय आसन्। तेषां प्रथमपक्षः सौभाग्यस्फुरितोन्नतिरधिगतकमलाकृपो द्वावेवापरावुल्लङ्घ्य विपुलां प्रसिद्धिमवाप। ततस्ते इङ्गराजवणिजः कलिकाताद्यमधिष्ठानत्रयं स्वल्पशुल्केनापि क्रीत्वा कलिकातेत्यभिधानं प्रदाय तत्र स्वकीयवाणिज्यनिकेतनानि संस्थापयामासुः। तदेतत्कलिकातामधिकृत्यास्ते किञ्चित् पुरावृत्तमत्र यद्वर्णनीयम्। अथाभूद् यवनभूपालवंशधरेषु भारतं सुशासत्सु तेषामेवाधिकारस्य शेषभागे सुतानटि-गोविन्दपुर-कलिकातेति-ग्रामत्रयसमवायेन कलिकातानगर्य्याः प्रतिष्ठा। कालीघट्टस्य नामतः तदपभ्रंशेन च कलिकाताया नामसम्भव इत्येव केचिदनुमीयते। एतत्त्रयाणां जनपदानामेकैकं प्रागेव कतिपयसामान्योटजराजिपरिवृतमारण्यविटपिवेष्टितं श्वापदकुलसङ्कुलममेध्यपल्वलादिपरिपूर्णञ्चासीत् खृष्टीय-सप्तदश-शताब्द्या उत्तरभागे इंलण्डदेशीया 'इष्टइण्डियाकोम्पानि' संज्ञकाः सार्थवाहा दिल्लीश्वरानुगृहीतानामपरेषामपि सामन्तयवनभूपानामशेषादत्याहितादात्मनां

परित्राणाय वङ्गप्रदेशस्य कानिचित् स्वाधिकारगतानि स्थानानि सुरक्षितानि सम्पादयितुं सदैव मन्त्रयामासुः। अस्मिन्नेवावसरे 'हुगली'नगरस्थितैरिङ्गराजवणिग्भिः सह वङ्गीय यवनशासनकर्तृणां भीषणः कलहः समजायत। अत्र सङ्घर्षे इङ्गराजवणिक्षु लब्धजयेष्वपि 'हुगली'पत्तनमतः परं निरापदं नाभिमन्यमानास्तेषां दलपते-'जबचार्णक'स्योपदेशात्तस्यैव प्रभुत्वाधीना वणिजस्ते अधुनातनकाली-घट्टपत्तनस्य उदीच्यां 'सूतानटि'ग्रामे स्वोपनिवासादिकं स्थापयामासुः। अचिरात्तु नानाविपर्ययात्तदेवोपनिवेशस्थानं परित्यज्य महामति-'जबचार्णकः' गङ्गासागरसङ्गममभितः 'हिजली'नाम्नि कस्मिंश्चिद्द्वीपैक-देशे पुनरुपनिवेशं निरमात्। अतः परं वङ्गाधिपेन सह तेषां सन्धिरेकः समजनि। तेन भूयोऽपि ते 'सूतानटि'पत्तने प्रत्यावव्रतिरे। वङ्गीय-यवनाधिपतिना पुनरत्याचारितास्ते वङ्गप्रदेशं कियतो दिवसान् परि-त्यक्तवन्तः। ततः १६९० खृष्टाब्दे यवनाधिपेन पुनः सन्धौ स्थापिते वङ्गभूमिं भूयः प्रविश्य 'हुगली'नगरमनुपयुक्तञ्च विवेच्य 'सूतानटि'-पत्तने हर्म्यादिभूषितमुपनिवेशं पुनः स्थापयामासुः। यतः स्थानमेतत् समरोपयोगित्वाद् वाणिज्यव्यवसायानुकूलत्वाच्च 'जबचार्णके'न प्रागेवा-भिमतमासीत्। तस्यैव मन्त्रणयाऽत्रापि तेषां प्रधानोपनिवेशः संस्था-पितोऽभवत्। १६९६ खृष्टाब्दे काचिदनुकूला घटना सञ्जाता यया इङ्ग-राजवणिजः 'सूतानटी'नगरे दुर्गादिनिर्म्माणस्य सुयोगं प्रापुः। वर्द्धमा-नाख्यस्याधिष्ठानस्य भूस्वामी शोभासिंहस्तदा मोगलशासनस्य विपक्ष-तया विद्रोहमाचरितवान्। कलिङ्गस्य पाठानभूस्वामिनः साहचर्य्येण स भूयसि भूमिभागे स्वाधीनताध्वजमुत्थाप्य सर्व्वासां प्रजानां महाभीति-मुत्पादयामास। अस्मिन्नेवावकाशे इङ्गराजवणिजो मोगलशासन-कर्त्तुः दिल्लीसम्राजः सकाशादात्मत्राणार्थं दुर्गादिनिर्माणानुमतिं यथा-भिलषितं प्राप्तवन्तः। ततस्तैरत्र कलिकातायां 'फोर्ट उइलियम'ाख्यं महादुर्गं सुनिर्मितम्। १६९८ खृष्टाब्दे अमी इङ्गराजवणिजः षोड़श-

सहस्रमुद्रा वङ्गाधिपाय शुल्करूपेण प्रदाय 'सूतानटि' 'गोविन्दपुर, 'कलिकाते'ति ग्रामत्रयस्य स्वामित्वं क्रीतवन्तः। ततः प्रभृत्येतद् भूस्वामित्वं ह्युत्तरकालाधिष्ठितस्येङ्गराजराजत्वस्य भित्तिरजायत।

अथ कालेषु गच्छत्सु यदा यवनावतंस 'आलिवर्द्दीखाँ'संज्ञकः वङ्गाधिपः सिंहासनाधिरूढ़ो राज्यमशासीत्तदा महाराष्ट्रीयाः सेनान्यो हिन्दुकुलसूर्य्येण भास्करपण्डिताख्येन महारणकुशलेनाधिनायकेन परिचालिता वङ्गदेशमाक्रान्तवन्तः। तदानीन्तना इङ्गराजनायका महाराष्ट्रीयाक्रमणाद्भीताः कलिकातानगरीं परितो नातिप्रशस्तं खातमेकं खनित्वाऽत्मोपनिवेशं सुरक्षितं चक्रुः। ततस्तेषु स्वदेशं प्रस्थितेषु महाराष्ट्रीयेषु वृद्धो यवनराजालिवर्द्दीः प्राप्तयौवनं सुकुमारं दौहित्रं "सिराजं" सिंहासने स्थापयित्वा मानवलीलां समापितवान्। सिराजस्तु संप्राप्तनवाधिकारो वयसाऽल्पत्वाद् विविधान् उत्पातादिकान् समुत्पादयामास। काले तेन सह इङ्गराजवणिजां वैरमजायत। प्रख्यातपलाशोक्षेत्रे यवनकुलरविश्चिरायास्तमगात्। तत आरभ्य भारते इङ्गराजराजाधिकारस्य सूत्रपातोऽभवत्, कलिकातायाः प्रसिद्धिमार्गश्च विस्तारोन्मुखत्वमासादितवान्।

अथ कालेनासौ नगरी प्राक् वङ्गप्रदेशस्य ततो निखिलभारतसाम्राज्यस्य राजधानीत्वमवाप। अद्या नानादिग्देशादागत्य विविधाः सार्थवाहा आपणादिकं संस्थाप्य वाणिज्यकुशलाः प्रभूतं वित्तमुपार्जयन्ति। अभ्रंलिह-सुधासित-सौधमालाविराजित-विस्तृत-राजपथाः शोभनोत्तुङ्गशीर्षद्रुम-दल-खचिता निर्म्मलोत्कम्पहीन-सलिल-बहुल-काय-सरोभिः कान्तिभाजः परां सुषमां वितन्वन्ति। साम्प्रतमेषा नगरी राजानुग्रहात् नानारथ्यासमन्विता चपलाचालित-स्यन्दनादिपरिवृता विविधयानवाहनादिबहुला स्निग्धोज्ज्वलप्रकोष्ठ-भूषित-प्रासाद-मण्डिता मघोनः पुरीमुपहसन्तीव राजते।

अधुनास्याः विस्तारो लोकसंख्या च चतुर्गुणं वर्द्धते। यद्यप्येषा

भारतराजधानीत्ववञ्चिता, तथाप्यस्याः सुषमावली कृत्रिमशोभाराजयः समृद्धिबाहुल्यञ्चेति एतानि सर्वाण्यतीव विचित्राणि सञ्जातानि। स्निग्धोज्ज्वलमसृणप्रशस्तराजवर्त्मानि सर्वर्त्तुषु समानवेशमभिनयन्ति अध्वगचित्तानि विश्रामयन्ति। किं बहुनानया सह भारतस्य काचिदन्या नगरी न तुल्यते। किन्त्वेतादृगैश्वर्य्यशालिन्यप्येषा कलिकाता सम्यगानन्दरहितेव प्रतीयते। अस्या अधिवासिनो बहवः पल्लीभ्यः समागतास्तेषां मनांसि पल्लीभावानुप्राणितानि नगर्य्याः कृत्रिमभावादिभिरनभिभूतानि जायन्ते। नानासुयोगसमलङ्कृताप्येषा पुरी जानपदसुखं सर्वथा नावहति। यतः पल्लीवासिन आ जन्मनः कैतवशून्याः स्वभावसारल्यभाजो नित्यं निसर्गसेविनो विमलानन्दमनुभवन्ति। नूनमेतत् सर्ववादिसम्मतं यत् पल्लीष्वद्यापि दुर्दशाबाहुल्यं विराजते। कुत्रचित् जानपदानां दुर्विषहं पानीयकष्टं, कुत्रचिद् भिषजामभावाद्रुग्णानां चिकित्सादुर्गतिः, कुत्रचिद् वर्षासु प्लावनपीडनादावासादिविच्युतिः, कुत्रचिद् दुर्दैवादनावृष्टितो दुर्भिक्ष-राक्षसपीडनं, कुत्रचिद् वात्यादिवशाद् भीषणोपद्रव इत्येवं विविधाः औत्पातिका व्यापाराः सदैव सम्भवन्ति। किन्तु पश्चान्तरे आहार्य्यशोभारहिताः समुर्वरोर्वीभागाः नानाशस्यशाकशस्यौषधिपरिपूर्णाः पल्लीकेदारा नागरिकाणां चेतांसि भृशं नन्दयन्ति। फुल्लप्रसूनप्रभाप्रलुब्धप्रलीनभृङ्गराजयः प्रमदवनविटपिनो विकचकमलहासाः सरोवरा वंशतृणादिनिर्मिता उटजनिचया धेनुवत्सादियुक्ता गोष्ठभूमयश्च पल्लीषु मनोरमाः प्रतिभान्ति। किं बाहुल्येन नाद्यापि कलिकातायाः स्वभावसौन्दर्य्यं वङ्गजनपदानां शोभामाधुर्य्यादुत्कृष्टतरं स्थानमलभत। खाद्यादिविषयेषु कलिकातानागरिकमहासमितेः कर्म्मचारिणां विशेषपर्य्यवेक्षणेनापि भोज्यादयः सर्वथा दोषराहित्यं नायान्ति। जनपदेषु भोज्यद्रव्याणि नवीनरसयुतानि निर्दोषाणि च सम्यगभिज्ञायन्ते। उक्तञ्च तावत्—

तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि ।
स्वल्पव्ययेन सुन्दरि ग्राम्य-जनो मिष्टमश्नाति ॥

अधुना वाष्पीययानादिप्रभावेण सुदूर-पल्लीनिचयेभ्य आहार्य्यादीनि कलिकातायां प्रेर्य्यन्ते। ततः सर्वाण्येव द्रव्याणि पल्लीषु साम्प्रतं दुष्प्रापाणि महार्घाणि च भवन्ति। परन्तु कलिकातायां द्रव्याल्पता न विद्यते। प्रयोजनानुरूपं द्रव्यजातमिहैवार्थेन सर्वदा प्राप्यते, नास्ति किञ्चित् दुरासदमत्र केवलमकृत्रिमतां विना। क्षीरसर्पिः-शर्करागोधूमचूर्णतण्डुलादीनि सर्वाण्येव वस्तूनि कृत्रिमदोषबहुलानि। हेतुनानेन नागरिकाणां स्वास्थ्यहानिर्वित्तविनाशश्च भवति। यदि तेषां खाद्यानि पल्लीवत् विशुद्धानि सम्भवेयुः, तर्हि सर्वथा नागरिकाणा-मायुरारोग्यं यशश्च सम्वर्द्धेरन्। इदानीं खाद्यादिविपर्य्ययादत्र नगर्य्यामभिनवरोगादयः अधिवासिनो भृशं पीडयन्ति, भूयिष्ठं प्राण-हानिश्च तेषां सञ्जायते। पानीयादीनाञ्चाधुना महान् व्यतिक्रमो दृश्यते। पानीयं सुशीतलं विशुद्धं निर्मलं निर्गन्धं स्वादरहितञ्चेत् तर्हि प्राणिनां हितं संसाधयति। पूतिगन्धि वारि सदैवाकुशलं विदधाति। साम्प्रतं कलिकातावासो निरुपद्रवो नाभिमन्यते। तथापि पल्लीभ्यो बहुजानपदाः पैतृकवासभवनानि परित्यज्यात्र निवा-सार्थमागताः। फलमस्यानायासेनैवानुमीयते। वङ्गजनपदा दूषित-जलवायुसंयोगाद्रोगादीनां महासंक्रामकाणामाकरा जायन्ते। तेषामेव प्रकटप्रभावविस्ताराद् वासयोग्या न सम्भवन्ति चिकित्सा-दुर्गतिश्च सुभिषजामभावात् यत्र तत्र घटते। तत् कलिकातायां समागतवन्तो जानपदाः प्राक् सुखमनुसन्धित्सवो गृहशुल्कादिभार-बाहुल्यात् परं क्लेशमनुभवन्ति। खाद्यादितस्तत्क्लेशो द्विगुणतरं विवर्द्धते। इतो नष्टास्ततो भ्रष्टास्ते शोचनीयां दशामुपभुञ्जानाः परितापस्य परां काष्ठां प्राप्नुवन्ति। शोकेन दुःखेन च जर्ज्जरिता मानवा विलाससामग्रीमपि हेलया परित्यजन्ति। तदत्र विलास-

भवनादिष्वपि पूर्वोपभुक्तपल्लीसुखाः समागता नागरिकीभूता मानव-सङ्घा यथासुखं न विचरन्ति। देशस्यैतादृशी दुर्दशा यत् सेवोप-जीवनपरो नागरिकचयः स्वदेशञ्च स्वजातिञ्च स्वधर्मञ्च सेवार्थे सर्व-मुदसृजत्। अहो कष्टं खलु परसेवनम्—

धृत्वा हि जीवनधुरं सततं विषण्णः
सेवापरो नयति नूनमतन्द्रिताक्षः।
कालं विनम्रवदनः श्रितदुःखभारः
कष्टं सदा वितनुते परकीय-सेवा॥

अधुना कलिकातावासो विलासमावहति। नलवाहिनी शोधित-जलधारा समुज्ज्वलसौदामिनी-प्रदीपश्चपलाचालित-व्यजनं सुमोहन-मर्म्मरमलप्रणाली ताडितयानादिभोग्यवस्तूनि सर्वाणि प्रायो मनो हरन्ति। युक्तमुक्तं गुप्त-कविना यत्, "शतशोऽपि विभङ्गा वङ्गभूमिः रङ्गैः परिपूर्णा"। तदत्र कलिकातायां रङ्गालयाश्चलच्चित्रागाराणि च समुत्सुक-दर्शकानां चित्तानि प्रमोदयन्ति। किन्तु प्रमोदपूर्णेष्वपि जनपदेषु शान्तिर्विमला कुतोऽपि न दृश्यते। विश्वविद्यालय-शिक्षाशिक्षिताभिमानिनोऽधुना विशदां प्रतीतिमुपगच्छन्ति यदेषा शिक्षा देशग्लानिहेतुरेव। दुर्दशाकवलिता विगतश्रियोऽपि जात-ज्ञानोदयाः पल्लीवासिनः सम्यगुपालभ्येरन् यत् पुरवासेच्छा हि तेषां पतनस्य मूलम्। स्वीक्रियते कलिकातावासस्योपकारिता महती। अस्त्यत्र सुयोगबाहुल्यमर्थार्जनस्य शिक्षालाभस्य वाणिज्यादिकस्य चेति। किन्त्वत्र कुसङ्गाच्चरित्रदोषः सुराद्यभिसेवनं वाराङ्गनादिविलास आचार-निष्ठादिविच्युतिः समाजबन्धनशिथिलता स्वेच्छाचारित्वम् इत्येवं बहवोऽनर्था आपतन्ति। कलिकातावासिनां सामाजिकता न पल्लीवत् कठोरनियमानुवर्त्तनीया। यदत्र समाजविधिः शिथिलतां वृणोति वर्णाश्रमधर्म्मिणाम् आचाराश्च न सम्यक् परिपाल्यन्ते। देवा-राधनादिकार्य्ये परिणयाद्युत्सव-व्यापारे श्राद्धादिकौलविषये जात-

कर्मान्नप्राशनादिसंस्कारकार्य्येषु आमन्त्रित-स्वजन-बान्धव-प्रतिवेशिनो जातिवर्णनिर्विशेषेण प्रायशोऽप्येकत्र फलाहारकर्म्मणि स्पर्शदोषा-नवमत्य संवर्द्धन्ते। पल्लोष्वद्याप्येतादृग् व्यवहारो न कुत्रापि परिदृश्यते। अस्ति नागरिक-सभ्यताया एतादृक् परिणामो यद् भोजनादिषु उच्छिष्टस्नानं विलुप्तं, कनीयांस आशीर्वादार्हा जनाः पूजनीयान् गरीयसो न भूमिष्ठाः प्रणमन्ति। केवलं तर्जन्युत्तोलनेन ललाटस्पर्शनेन च प्रणाम-नमस्कारादिकार्य्यं सुसम्पादयन्ति।

आसीत् पुरा‍ैषा नीतिर्यत् वर्णाश्रमधर्म्माचारिण आर्य्यजातीया ब्राह्मणक्षत्रियादयश्चतुर्वर्णा मन्वादिधर्म्मशास्त्रानुमोदितपथावलम्बिन आसन्। श्रुति-स्मृति-प्रदर्शितनियमान् बाहुल्येनावलम्बमाना जन-मण्डली परां मुदमनुबभूव। तेषां वंशधरा वयमधुना तत्प्रति-पालितनीतीः शतांशेनापि न संश्रयामः। दुःखप्राबल्यमस्माकं तत्-फलतया स्वत एव सम्भवति। तथाप्यस्माकं विद्याबुद्धिप्रखरता पूर्वेभ्यो-ऽभ्यधिकतरेति दृढ़धारणा नः प्रजायते। किमयं कालप्रभावः, किंवा पाश्चात्यसभ्यतामण्डितशिक्षागौरवभूषितनगरवासस्य फलम्। हा धिगस्मान् शिक्षागर्वितान्, कष्टं खल्वेषा स्मृतिर्यत् येषां पूर्वपुरुषाः पल्लीसुखानुभाविनो निरायासाहारविहारशान्तिप्लावितमानसाः काल-प्रसूत-सुपक्वशस्यजातपरिपूर्णचित्तस्लासिनः संवत्सरानुष्ठितपूजापार्व-णादिकृत्यानुसारिणः सदैव स्वास्थ्योल्लासितसुन्दर-विशालोन्नतवपुषः सुदीर्घायुर्भाजो बहुवायसाश्रितवटपादपा इव स्वकीयनिकेतनेषु आत्मीयपरिजनादिपरिवृता यथासुखं कालं निन्युस्तेषां वंशधरा निष्ठाप्रवृत्तिरहिताः सदाचारविवर्जिता दुःसहक्लेशभारावनताः कृत्रिमसुखलेशानुसन्धित्सवो वयं पैत्रिकपल्लीभवनादिकं परित्यज्य नागरिकाडम्बरशोभामोहिताः पतङ्गवत् वह्निमुखं विविक्षवोऽकाल-कालकवलिता ज्वालामयजीवनव्रतमुद्यापयितुं यतामहे। येषामुत्सङ्गे सदैव प्रतिपालिता येषां सौन्दर्य्यगरिमाणो मञ्जग्रन्थिष्वपि विज-

डितास्तान् ग्रामान् विहाय नगरशोभयात्मविनोदनं कीदृग् विपरीतं फलं प्रसूते तत् सुधीभिर्विचार्य्यम्। किं बहुनास्माकमवहेलया-सामर्थ्येन च निसर्गलोलैकसम्पत् पल्लीमङ्गलं साम्प्रतं मरुकल्पं सञ्जातम्। कोऽधुनास्मान् त्रातुं समर्थो नारायणं विना। तदेष भूतभावनः कमलापतिर्नारायणोऽस्माकं शरण्यो ग्रामादिसंस्कार-कार्य्ये शक्तिं विदधात्वित्यलमतिविस्तरेण।

---

## शकुल-कथकम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—श्रीकानाइलाल पञ्चतीर्थः ]

नौसंवाहप्लवनिपुणतासम्भवं साहसिक्यं
व्यायामं स व्यसनमकरोद्यौवने तस्य लक्ष्यम्।
ज्ञातास्वादः क्रमसमधिकं ज्ञानमात्मा शरीरं
पुष्टं यादृग्बलमपि तथा वोढुमासीदधीरम्॥ १३

अब्दे यद्वन्नदति शिखिनां कोकिलानां वसन्ते
काकानामप्युषसि मिलिते योषितां प्राणकान्ते।
वात्याकेतू रज इव पुरो लक्षणं यौवनस्य
प्रादुर्भूतं हृतभुवि कुतोऽप्याकुलं गीतमस्य॥ १४

---

(१३) अत्र कर्त्तृद्वन्द्वे क्लीवप्राधान्यादेकवाचित्वमपिकारस्यान्तिमकर्त्तव्य-न्वयेन वा प्रत्येकवाचित्वं क्रियायाः सम्पादनीयम्।

यस्मिन् जाते प्रतिमधु नवा वल्लरी चूतजाते
कूजन्त्युच्चैः पिकमुखखगा दक्षिणे वाति वाते ।
तत्तारुण्यं त्वमसि किमये ! स्वागतं स्वागतं ते
गीतायत्ता वयमिह वयोऽभ्यर्थयामातिकान्ते ॥ १५

तुल्यापेक्षं पटु रमयितुं कीटतो लोककूटं
कर्त्तुं यच्चाचलमपि पुरारामवच्चित्रकूटम् ।
मित्राणीवेन्द्रियवनरतिं शत्रवः षड् भजन्ते
यस्यायत्ता मम सुहृदि किं तादृशः स्वागतन्ते ॥ १६

मग्नोन्मग्नैर्मितमपि जगन्नूतनः कोऽपि बोध-
स्त्वत्तो जातो महयति यथा चित्रितं काचभेदः ।
त्वं न स्वप्नोऽहनि निशि च सन्नैनदृष्णातपोत्था
तारुण्यस्यागतिरिह शुभा तेऽस्तु विश्वावहित्था ॥ १७

अङ्गं क्षीणं स्थवयितुमलं स्थूलतां तस्य हर्त्तुं
शीघ्रं यानं स्थगयितुमपि स्वच्छभासञ्च कर्त्तुम् ।
त्वं वैषम्यं शमयसि भवेऽव्यर्थदुर्वारशक्ते !
मित्रावस्मिन् भवतु सुमतावागतिः क्षेमयुक् ते ॥ १८

सद्योजातं मम सुहृदि तद्यौवनं स्वं प्रतीत्य
प्रश्नाह्वानैरिव तरलितं प्रापदेकाङ्घ्रिसत्त्वम् ।
न्यस्तं विद्यादिकगुणमयं दक्षिणान्तेन बन्धौ
वामं कामादिमयमभवत् तत्पदं चिह्नमिन्दौ ॥ १९

दृष्ट्वा विष्वग् युवजनदशामात्मनोऽग्रे समान-
स्तारुण्येनाविनयमयतां नैव सुहृत् सावधानः ।
लक्ष्मीं पुष्ट्या हरिहृदयतः किं भुवो मङ्गलाय
ब्राह्मीं ब्रह्माननवनचरीं मेधया चानिनाय ॥ २०

श्रीमद्वाख्या बहुविधगुणा दत्तहस्तावलम्बा
मित्रेऽविक्षन् क्रतुगृह इवामन्त्रिता भ्रातृडिम्भाः ।

नाचाश्चर्यं किमपि हि खले यान्ति सन्तः सयूथा-
स्तच्छस्बैराकुलितरसनाः सन्निपातं कपोताः ॥ २१

सान्द्रानन्दः स युवसुलभः सा च सौम्योज्ज्वला भा
सा कारुण्यार्जवमयमहःकारणज्ञानसेवा ।
एकं कार्यं किमु गृहजनान् प्लावयन्ति स्म बन्धोः
कल्लोलास्ते हिमगुसहजा उच्छ्वच्चीरसिन्धोः ॥ २२

तत्रासन्ने वयसि सखितास्कन्दिता दुष्प्रवेशा
सूच्यादीनामपि किमुत मे तावकी सन्निवेशा ।
यत्रासक्तः सह वसतया याम्यहं स्वस्ति ते स्ता-
दित्युक्तिर्मे निजजनरतिर्मानवत्ता निरस्ता ॥ २३

सम्पन्नायां शरदि युवतालक्षणायां स बन्धुः
स्वच्छे चित्ते वियति नियतं मे व्यराजद् यथेन्दुः ।
अत्याकर्षत् सरसि नलिनीवारविन्दैर्द्विरेफं
मामप्याक्षन्त्यसमसखितोत्फुल्लभावैः प्रियापम् ॥ २४

जात्येकत्वे प्रणयमधिकं जातिभेदे तु मध्यं
प्रावोचद् यो विधिरपि न तेनावयोः प्रेम वेद्यम् ।
दृष्टेरर्काच्छिशिरकिरणाद् योऽवदन्मोदमानं
भेकं पद्मं कुमुदमपि नो प्रेम्णि सोऽभूत् प्रमाणम् ॥ २५

उच्चं स्थानं घनमहरहः पौरुषैरस्य साकं
लोहैः कीलैरुपलदलवन्निर्ममे दुर्गमेकम् ।
बाह्याभ्यन्तश्चररिपुकरिध्वंसि-हर्य्यक्षवीर्य्यैः
स्थास्नौ तस्मिन् व्यचरदकुतोभीतिभाक्चित्तवर्य्यः ॥ २६

शिक्षावल्ली प्रतिसमसधाद् यावदूर्द्ध्वैशाखा-
स्तावत्तस्याबिभरुरधिकां प्रीतिमात्मीयलोकाः ।
घट्टे हट्टेऽध्वनि जनतया ख्यापितः संस्तवोऽस्य
च्छात्रेन्द्रस्याध्ययनतपसारोढुमैच्छद्ध्रुवः स्वः ॥ २७

पाश्चात्याख्ये यदजनि कुले वैदिकानां सुहृन्मे
पाश्चात्योक्तौ किमु पटुरभून्निष्ठितोऽपि स्वधर्मे ।
चित्रीडास्याचकितपृथुकैवाङ्गशास्त्राङ्गने धी-
र्भक्त्या प्राचामभिमतयुता दैववाणीरबोधि ॥ २८

तस्याश्रान्ताध्ययनपरता भोजनादौ विरक्ति-
र्व्यायामाम्बुप्लवनबहुता श्वासकासप्रसक्तिः ।
अप्यभ्यस्ता झटिति विक्षता जनविंशाब्द एता
बन्धोर्व्याधिच्छलधृतगला दुद्रुवुर्वैद्यभीताः ॥ २९

पारे गङ्गाध्ययनगृहतो दत्तनानापरीक्ष-
स्तुङ्गोपाधिं पठितुमगमद्वङ्गपुर्यां स दक्षः ।
चेतोत्कर्षं नवमिव त्वषं किंचुलूकीव विद्या
धावन्त्येवैत्यत इह न सा दुर्धियामप्यवद्या ॥ ३०

हा धिग्बुद्धिं गृहजनदृशामङ्गिरापाद्य गङ्गां
तेनाप्राप्ते वयसि जनकोऽस्याजहाज्जीवसंज्ञाम् ।
शोकः पुत्रं पितुरनुगतं विद्ययाविच्य मातु-
र्लुप्तोऽप्यासीदिह पुरगते वर्षमात्रं सहेतुः ॥ ३१

तस्मिन् वर्षे यदि गतमहन्ने त्त्रपा गन्तुकामा
तेन स्वप्ने न च विरहितेऽहर्निशा मय्यसौमाः ।
हित्वा भोज्यं जलमपि शुचा प्राणिमि स्म त्रिरात्रं
भद्रार्थेऽपि प्रथमविरहे स्पृष्टवान् वायुमात्रम् ॥ ३२

तेनाक्रान्तं किथदिति मया सुष्ठु तावन्न बुद्धं
यावन्मर्मास्य नवविरहैषेषुवन्मे न विद्धम् ।
कीदृङ्नारीविरह इति को निःस्त्रियो मे विचारो
बन्धुच्छेदो ध्रुवममरणक्लेशदायी विकारः ॥ ३३

स्थातुं शेकुर्न भवनजना ये विना प्रोषितन्तं
गत्वा प्रायः पुरमवययुस्तेऽस्य बन्धोरुदन्तम् ।

मातारञ्चचिरपरिहृतैर्मध्यमज्येष्ठजुष्टं
सद्मासाद्याश्रमयदगतैर्मेऽवकाशे स कष्टम् ॥ ३४

दोर्भिश्छेदैः स लघुमिलनानन्दथुर्दुर्वगाह-
स्तेनावर्षं पुलिनविरलात्मेव शोणप्रवाहः ।
अब्दस्निग्धद्युतिसुहृदविच्छेदयोगेन भूयो
हर्त्तुं तृष्णामिव मम हृशोर्व्यस्थितोऽभूच्चिराय ॥ ३५

बाल्याज्जन्मक्षितिसुखचरः क्लेशवासादिदोषात्
किञ्चिन्म्लानो हिमहतशशीवागतोऽपि प्रवासात् ।
पूर्वापेक्षाधिक इति कुसीदैरिवार्थेस्य भारं
नानेतुं स प्रियजनकृते व्यस्मरज्ज्ञानसारम् ॥ ३६

यातायाते तदवधि पुरीरम्यविद्यालयेऽयं
यस्माच्चक्रे तदिह स मयादर्शि कल्येऽथ सायम् ।
मित्रेणेत्थं रहितमिलिता रौद्रहद्योरिवान्तः
सन्ध्याख्यास्मान् प्रति सुसहतां वासरास्तेऽलभन्त ॥ ३७

तेऽहःपञ्चकमपरिचिता पञ्चषाभाद्रमासा
निःसृता नः स्मृतिषु बहुलाशाभिरामर्थ्यवेशाः ।
हा दुर्वारं नयनसलिलैः शोकमद्य प्रदाची
यान् व्यस्निञ्चत् कुक्षतिकठिना कापि कल्पान्तरात्रिः ॥ ३८

स्रोतःपोताकुलसुरसरिन्मज्जनावाप्तलीनो
यस्यां रात्रौ कथमपि सखाजीवदायुर्बलेन ।

---

(३८)　आभाद्रमासा इति छेदः, अलाक्षोऽभिविध्यर्थे एव वक्ष्यमाणचातुर्मास्यं कथञ्चित् सङ्गच्छते ।

नीरक्रीडाकुतुकिसवयश्छद्मदुर्दैवनीतो
वाह्नौ नावो व्यसनमभवद्बालनो मानभीतः ॥ ३९

वृत्ते संविद्यवितरि यशोरश्मिभिर्व्याप्य विश्वं
पातुं लोकालिभिरनुसृतं वाङ्मधूत्फुल्लमास्यम् ।
किन्ते दैन्यं कथमिति गिराश्वास्य तं केऽपि शिष्या-
श्छात्राश्वासन् कतिचिदपरे दासवत्तस्य वश्याः ॥ ४०

आदानाध्यापनवितरणाधीतिसन्ध्यार्चनाभि-
र्नित्यासक्तोऽप्यरमत गुणैरेष लूतासनाभिः ।
सत्यस्थानां विधिरिव कलिस्रग्महोनो विरेजे
जिज्ञासूनां भुवनसुमनःशावकानां समाजे ॥ ४१

छात्रानध्यापयितुमपि चोद्युज्य दातुं परीक्षां
चक्रे देहं प्रतिसचतुरो व्याप्य मासानुपेक्षाम् ।
चातुर्मास्यं व्रतमिव युवोपास्य माघस्य पश्चात्
प्रापत् पीड़ामशनशयनादीनतिक्रम्य कृच्छ्रात् ॥ ४२

सम्बोध्याम्बां स शयनगृहद्वारमाहत्य रुद्धां
वक्तुं वार्त्तामकुरुत यदा तामकाले प्रबुद्धाम् ।
पुण्यः सोऽयं सकलशुभदो ब्राह्मसंज्ञो मुहूर्त्त-
श्चेतोऽद्यापि व्यथयति मम व्याधिदूतोऽस्य स्मूर्त्तः ॥ ४३

आपद्वार्त्तां विहृतिसमये कण्ठकौण्ठेऽन मुक्ता-
माकर्ण्याहं किमिदमविदं यद् य आर्त्तः स वक्ता ।
पातात् पश्चाद्व्यसनमशनिर्ज्ञापयामास नूनं
चित्तं धैर्य्यादगणितवपुर्विप्रबन्धोरदूनम् ॥ ४४

---

(४१) गुणैर्धर्मैरन्यत्र तन्तुभिरित्यर्थः ।

यावत्पञ्चाधिकदशदिनं बन्धुरत्यन्ततल्पो
दुर्दर्शो मे शिशिरदिवसम्लानभूपद्मकल्पः ।
सञ्जातोपस्थितदिनगणं भावि-तीव्रार्त्तिभीत्या
स्मृत्यातीतस्य च भविदिनं पीड़ितोत्वैदगत्या ॥ ४५

पाण्डुक्षामः स इतरभिषग्भीषितोऽल्पावशेषे
जाते रोगे सजननिरगाद्वैद्यनाथस्य देशे ।
यस्मान्नीरानिलमयतनुः शम्भुरद्यापि सृष्टे-
र्जन्तोर्जीर्णं वपुरविकृतोऽस्मिन्नवीकर्त्तुमीष्टे ॥ ४६

तस्मिन्मानैकधनकुलजं प्रोषिवन्मासमात्रं
प्राप्यागारं गतहृतगदं मे परीक्षार्थिमित्रम् ।
यान्तु प्राणा व्रजतु न पुनर्मानमित्युच्चशिक्षां
लब्ध्वारब्धे कतिपयदिनैर्माधवेऽदात्परीक्षाम् ॥ ४७

शून्यप्रायं चिरधृतलता वासनावाल्यपुष्टा
सृष्टाकस्मात् प्रकृतिकुटिलव्याधिकीटेन दष्टा ।
चित्तोद्यानं पुनरविकलं सा परीक्षावसाने
साङ्गा पुष्पप्रसृमररुचिः प्रावृषीवास्य तेने ॥ ४८

यत् पूजार्थं कुसुमलतिकारोपणं यच्च गीतम् ।
यो वीणायाः स्वरपरिचयो यत् प्रियञ्चाविगीतम् ।
भूयो व्याधिव्यवधिनववद् बन्धुरादत्त सर्व्वं
प्रावृट्शेषे मृग इव मुदोत्पाटितोत्पन्नदर्भम् ॥ ४९

देशप्रेमा सहृदयवियदग्रात्सु मस्याभ्युपेत-
स्तूर्णं कालाम्बुदलव इव ज्ञानवातोपनीतः ।
आशोत्फुल्लां भवनधरणीसङ्गतानां जनानां
शङ्काकम्प्रां रचयति मतिं यश्च वैदेशिकानाम् ॥ ५०

---

(४६) इतरपदं वैद्यनाथव्यावर्त्तकं तस्य भिषजामीश्वरत्वेनाद्वैतशरणत्वा-
दिति सुगमम् ।

नीरक्रीडाकुतुकिसवयश्छद्मदुर्दैवनीतो
वाप्तौ नावो व्यसनमभवद्यात्मनो मानभीतः ॥ ३९

वृत्ते संवित्सवितरि यशोरश्मिभिर्व्याप्य विश्वं
पातुं लोकालिभिरनुसृतं वाङ्मधूत्फुल्लमास्यम् ।
किन्ते दैन्यं कथमिति गिराश्वास्य तं केऽपि शिष्या-
श्छात्राश्चासन् कतिचिदपरे दासवत्तस्य वश्याः ॥ ४०

आदानाध्यापनवितरणाधीतिसन्ध्यार्चनाभि-
र्नित्यासक्तोऽप्यरमत गुणैरेष लूतासनाभिः ।
सत्यख्यानां विधिरिव कलिस्पर्शहीनो विरेजे
जिज्ञासूनां भुवनसुमनःशावकानां समाजे ॥ ४१

छात्रानध्यापयितुमपि चोद्युज्य दातुं परीक्षां
चक्रे देहं प्रतिसचतुरो व्याप्य मासानुपेक्षाम् ।
चातुर्मास्यं व्रतमिव शुचोपास्य माघस्य पश्चात्
प्रापत् पीड़ामशनशयनादीनतिक्रम्य कृच्छ्रात् ॥ ४२

सम्बोध्याम्बां स शयनगृहद्वारमाहृत्य रुद्धां
वक्तुं वार्त्तामकुरुत यदा तामकाले प्रबुद्धाम् ।
पुण्यः सोऽयं सकलशुभदो ब्राह्मसंज्ञो मुहूर्त्त-
श्चेतोऽद्यापि व्यथयति मम व्याधिदूतोऽस्य मूर्त्तः ॥ ४३

आपद्वार्त्तां विहृतिसमये कण्ठकौण्ठेऽन मुक्ता-
माकर्ण्याहं किमिदमविदं यद् य आर्त्तः स वक्ता ।
पातात् पश्चाद्व्यसनमशनिर्ज्ञापयामास नूनं
चित्तं धैर्य्यादगणितवपुर्विप्रबन्धोरदूनम् ॥ ४४

(४१) गुणैर्धर्मैरन्यत्र तन्तुभिरित्यर्थः ।

यावत्पञ्चाधिकदशदिनं बन्धुरत्यन्ततल्पो
दुर्दर्शो मे शिशिरदिवसम्लानभूपद्मकल्पः ।
सञ्जातोपस्थितदिनगणं भावि-तीव्रार्त्तिभीत्या
स्मृत्यातीतस्य च भविदिनं पीड़ितोत्थैदगत्या ॥ ४५
पाण्डुच्छामः स इतरभिषग्भोषितोऽल्पावशेषे
जाते रोगी सजननिरगादैद्यनाथस्य देशे ।
यस्मान्नीरानिलमयतनुः शम्भुरद्यापि सृष्टे-
र्जन्तोर्जीर्णं वपुरविकृतोऽस्मिन्नवीकर्त्तुमीष्टे ॥ ४६
तस्मिन्मानैकधनकुलजं प्रोषिवन्मासमात्रं
प्राप्यागारं गतहृतगदं मे परीक्षार्थिमित्रम् ।
यान्तु प्राणा व्रजतु न पुनर्मानमित्युच्चशिक्षां
लब्ध्वारब्धे कतिपयदिनैर्माधवेऽदात्परीक्षाम् ॥ ४७
शून्यप्रायं चिरहृतलता वासनाबाल्यपुष्टा
सृष्टाकस्मात् प्रकृतिकुटिलव्याधिकीटेन दष्टा ।
चित्तोद्यानं पुनरविकलं सा परीक्षावसाने
साङ्गा पुष्पप्रसृमररुचिः प्रावृषीवास्य तेने ॥ ४८
यत् पूजार्थं कुसुमलतिकारोपणं यच्च गीतम् ।
यो वीणायाः स्वरपरिचयो यत् प्रियच्चाविगीतम् ।
भूयो व्याधिव्यवधिनववद् बन्धुरादत्त सर्व्वं
प्रावृट्शेषे मृग इव मुदोत्पाटितोत्पन्नदर्भम् ॥ ४९
देशप्रेमा सहृदयवियद्ग्रासमस्याभ्युपेत-
स्तूर्णं कालाम्बुदलव इव ज्ञानवातोपनीतः ।
आशीत्फुल्लां भवनधरणीसङ्गतानां जनानां
शङ्काकम्प्रां रचयति मतिं यश्च वैदेशिकानाम् ॥ ५०

---

(४६) इतरपदं वैद्यनाथव्यावर्त्तकं तस्य भिषजामीश्वरत्वेनाद्वैतशरणत्वा-
दिति सुगमम् ।

लुब्धं तस्येन्द्रियसमुदयं व्यकृतातीतरोगं
चक्रे प्रेमोद्भवभुवि यथा मोदको बालकौघम् ।
येन स्निग्धावनतजगतो वङ्गपूर्वाङ्गसङ्गा-
दस्मै नारोचत हितकरी कापि दिक् शुष्कतुङ्गा ॥ ५१
वैशाखान्ते त्वयकृदरुजत्तं पुनः सोऽस्नरोगो
नापेक्ष्यास्याद्भुतगणगणान् पूर्वतस्तीव्रवेगः ।
वाञ्छस्यस्मात् परमपि किमु श्रोतुमस्येतिवृत्तं
किन्तद्वाच्यं यदि न तदृते दुर्गमं नो सखित्वम् ॥ ५२
निर्विच्छेदं ज्वरमलमसृक्छर्दनं रोद्धमङ्गा
नानर्हुर्हा कथमपि पटुप्राच्यपाश्चात्यवैद्याः ।
मातुर्यत्नोऽग्रजजनमतिर्मादृशां दुःखमात्रं
पथ्यं मन्त्रौषधिसमुदयोऽस्वस्त्ययन्मे न मित्रम् ॥ ५३
बाढ़ं बुद्धा कुगदगिलितेऽस्मिन् कनिष्ठे सुतेऽम्बा
वन्ध्यां सेवां ग्रहणमुदरे रक्षणं शिक्षणं वा ।
ज्येष्ठस्यान्तेऽम्रियत मरणं किं शुचो वीक्ष्य तुच्छं
पत्युर्न्यासं किमवितुमसौ वा गता लोकमुच्चम् ॥ ५४
मृत्युं श्रुत्वाग्रजजनमुखान्मातुरेकादशाहे
माता याता किमिति बहुधा प्रष्टुमेवैस सेहे ।
मृत्युर्मेऽस्माद् ध्रुव इति शुचोऽव्याहतेर्मातुरित्थं
किं वौचित्यान्निहतजननिः प्रार्थयत् सोऽमरत्वम् ॥ ५५
मन्दाकिन्यम्बुतरणगता स्वःस्त्रियोऽद्यापि साक्षात्
मातोत्तीर्णं कथयति सुतं तत्परीक्षाख्यसंख्यात् ।
अम्बानां तत्परिचयपदं ज्ञानराज्यार्थयुक्तं
याति स्वर्गं युवसुतकुलं प्रत्यहर्यन्न लुब्धम् ॥ ५६

---

(५३) एतानीति पदमध्याहृत्य क्रियाया बहुत्वं सङ्गमनीयम् ।

मातुर्मृत्युं श्रुतमनु तनूच्छिन्नतन्त्रीव वीणा
मित्रेणासीदहरहरध:पातिता दीनदीना।
माता प्राणांस्तृणवदजहात्त्यागभीत्यैव यस्य
ध्यातुं किन्तत्समुचितविधिन्तत्पलीन: सुधी: स:॥ ५७

दृष्ट्वात्मानं पुरुषमभिकं वेद्मि विद्यान्यनार्था-
मिवं नारी तनुरपि निजापीड़यत्तं कदर्थ्या।
गाढं शुण्डातिकुटिलरुजा पद्मिनीं पद्मबन्धात्
कर्त्तुं भ्रष्टामियमसमये मत्तहस्तिन्यबध्नात्॥ ५८

सम्भूयेदं रचयति तनूं प्राणिनस्तत्त्वजालं
यस्यैतां तत्त्यजति युगपत् प्राह तं प्राप्तकालम्।
भूत्वैकैकं क्रमगलितमा मातृसंवादलाभात्
तस्मै मित्रं व्यसृजदसुखाब्धावकालप्रभावात्॥ ५९

सद्यो विष्टो नवशशधरो राहुदन्तान्तराले
यद्वा मध्ये दिनदिनकर: श्याम-जीमूतजाले।
नेदं सह्यं पुनरनुदयात्ताद्दृगामोदिपूत:
कीटोच्छिष्टस्फुटकुसुमवद् यत् प्रियो मे पपात॥ ६०

किञ्चिद्दृष्टान्तिकचरमुखात् किञ्चिदाकर्ण्य कृत्यं
बन्धो: स्मृत्याङ्कितमिति मयाख्यातमात्मेतिवृत्तम्।
एतस्यान्तं यदि कथयितुं केनचिज्जातु शक्तं
मत्तं चित्तं मम परमतस्तत्त्वतोऽभूद्विमुक्तम्॥ ६१

इति शकुलकथकं नाम खण्डकाव्यं समाप्तम्।

---

(६१) यदस्य परलोकगत्यादिकं पारत्रिककृत्यादिकं वा केनचित् परोक्ष-दर्शिना कठोरहृदयेनामित्रेण वा कथयितुमपि शक्यते न मया मित्रेणैता-वतैव मत्तचित्तेनेति हृदयम्।

लुब्धं तस्येन्द्रियसमुदयं व्यक्तृतातीतरोगं
चक्रे प्रेमोद्भवभुवि यथा मोदको बालकौघम् ।
येन स्निग्धावनतजगतो वङ्गपूर्वाङ्गसङ्गा-
दस्मै नारोचत हितकरो क्वापि दिक् शुष्कतुङ्गा ॥ ५१

वैशाखान्ते चयकृदरुजस्तं पुनः सोऽस्त्ररोगो
नापेक्ष्यास्याङ्कुतगणगणान् पूर्वतस्तीव्रवेगः ।
वाञ्छस्यस्मात् परमपि किमु श्रोतुमस्येतिवृत्तं
किन्तद्वाच्यं यदि न तद्दते दुर्गमं नौ सखित्वम् ॥ ५२

निर्विच्छेदं ज्वरमलमसृक्छर्दनं रोद्दमद्दा
नानर्हुर्हा कथमपि पटुप्राच्यपाश्चात्यवैद्याः ।
मातुर्यत्नोऽग्रजजनमतिर्माद्दशां दुःखमात्रं
पथ्यं मन्त्रौषधिसमुदयोऽस्यस्यन्मे न मित्रम् ॥ ५३

वाढ़ं बुद्धा कुगदगिलितेऽस्मिन् कनिष्ठे सुतेऽम्बा
वन्ध्यां सेवां ग्रहणमुदरे रक्षणं शिक्षणं वा ।
ज्यैष्ठस्यान्तेऽम्रियत मरणं किं शुचो वीक्ष्य तुच्छं
पत्युन्यासं किमवितुमसौ वा गता लोकमुच्चम् ॥ ५४

मृत्युं श्रुत्वाग्रजजनमुखान्मातुरेकादशाहे
माता याता किमिति बहुधा प्रष्टुमैवैस सेहे ।
मृत्युर्मेऽस्माद् ध्रुव इति शुचोऽव्याहतेर्मातुरित्थं
किं वौचित्यान्निहतजननैः प्रार्थयत् सोऽमरत्वम् ॥ ५५

मन्दाकिन्यम्बुतरणगता स्वःस्त्रियोऽद्यापि साक्षात्
मातोत्तीर्णं कथयति सुतं तत्परीक्षाख्यसंख्यात् ।
अम्बानां तत्परिचयपदं ज्ञानराज्यार्थयुक्तं
याति स्वर्गं युवसुतकुलं प्रत्यहर्यत्र लुब्धम् ॥ ५६

---

(५३) एतानीति पदमध्याहृत्य क्रियाया बहुत्वं सङ्गमनीयम् ।

मातुर्मृत्युं श्रुतमनु तनूच्छिन्नतन्त्रीव वीणा
मित्रेणासीदहरहरधःपातिता दीनदीना।
माता प्राणांस्तृणवदजहात्त्यागभीत्येव यस्य
ध्यातुं किन्तत्समुचितविधिन्तल्लयलीनः सुधीः सः ॥ ५७

दृष्ट्वात्मानं पुरुषमभिकं वेद्मि वियान्यनार्थ्या-
मेवं नारी तनुरपि निजापीड़यत्तं कदर्थ्या।
गाढं शुण्डातिकुटिलरुजा पद्मिनीं पद्मबन्धात्
कर्त्तुं भ्रष्टामियमसमये मत्तहस्तिन्यबध्नात् ॥ ५८

सम्भूयेदं रचयति तनूं प्राणिनस्तत्त्वजालं
यस्यैतां तत्त्यजति युगपत् प्राहु तं प्राप्तकालम्।
भूत्वैकैकं क्रमगलितमा मातृसंवादलाभात्
तस्मै मित्रं व्यसृजदसुखाब्धावकालप्रभावात् ॥ ५९

सद्यो विष्टो नवशशधरो राहुदन्तान्तराले
यद्वा मध्ये दिनदिनकरः श्याम-जीमूतजाले।
नेदं सह्यं पुनरनुदयात्तादृगामोदिपूतः
कीटोच्छिष्टस्फुटकुसुमवद् यत् प्रियो मे पपात ॥ ६०

किञ्चिद्दृष्टान्तिकचरमुखात् किञ्चिदाकर्ण्य कृत्यं
बन्धोः स्मृत्याङ्कितमिति मयाख्यातमात्मेतिवृत्तम्।
एतस्यान्तं यदि कथयितुं केनचिज्जातु शक्तं
मत्तं चित्तं मम परमतस्तत्त्वतोऽभूद्विमुक्तम् ॥ ६१

इति भ्रकुलकथकं नाम खण्डकाव्यं समाप्तम्।

---

(६१) यदस्य परलोकगत्यादिकं पारत्रिकक्रत्यादिकं वा केनचित् परोक्षदर्शिना कठोरहृदयेनामित्रेण वा कथयितुमपि शक्यते न मया मित्रेणैतावतैव मत्तचित्तेनेति हृदयम्।

# करतोया-स्नानम्

[ निबन्धकः—पञ्चतीर्थ-श्रीसुरेन्द्रमोहनवेदान्तशास्त्री ]

पर्व्वसु गङ्गास्नानं यथा जन्मजन्मान्तरीयपातकक्षयकरं, मधुमासे शुक्लाष्टम्यां लौहित्यस्नानं यथाऽशेषदुरितनाशकरं तथा नारायणी योगे करतोयास्नानमपि। गङ्गा खलु त्रिपथगा त्रिस्रोता इति प्रसिद्धा, स्वर्गे मन्दाकिनी, मर्त्ते भागीरथी, पातालपुरे भोगवतीति विज्ञायते। हरिद्वाराद् वङ्गदेशं यावत् गङ्गासलिले स्नान-दानादिकमाचरन्ति आचारपूताः सज्जनाः।

ब्रह्मपुत्रो नाम लौहित्यनदो भारतभूमेरुत्तरतः प्राचीं दिशमभि-व्याप्य कामरूपगौड़ादिदेशान् परिपूतान् विदधत् प्रवहति। करतोया किल गौड़देशे ( उत्तरवङ्गेषु ) स्कन्द-गोविन्दयोर्मध्ये पौण्ड्रवर्द्धने वर्द्धितकलेवरा वर्द्धयति नराणां पुण्यम्। सर्व्वत्र प्रमाणं कृत्य-चिन्तामणौ—

> चापार्के मूलसंयुक्ता यदि सोमदिने कुहूः।
> नारायणीति विख्याता त्रिकोटिकुलमुद्धरेत्॥

चापार्के इत्यनेन धनूराशौ रवेरवस्थानसमये पौषमासे इत्यर्थः, सोम-वासरे यदि कुहूरमावस्यातिथिः स्यात्, तत्र च मूलानक्षत्रयोगो भवेत्तदैव नारायणीति योगः, तदा सा सरित् तत्र कृतस्नानानां त्रिकोटिकुलमुद्धरेत्।

मतान्तरे तु "चापार्के मूलसंयुक्ते" इति पाठः परिदृश्यते। एतन्मते हि मूलानक्षत्रसहित-धनूराशौ रवेरवस्थानकाले, पौषस्याद्य ४/९ भागे ( विंशतिदण्डाधिकत्रयोदशदिनाभ्यन्तरे ) यदि सोमवारे कुहूः स्यात् तदैव नारायणीयोगः। एषां मते मूलानक्षत्रस्य संयोगं विनापि नारायणीयोगो भवितुमर्हतीत्यर्थात् प्रतीयते। अयन्तु पाठः सद्भिर्न स्वीक्रियते ; यतः—

१। मूलानक्षत्रे रवेरवस्थितिश्चापार्कं विना राश्यन्तरेऽसम्भवाद् मूलसंयुक्ते इत्यत्र 'चापार्के' इति विशेषणं व्यर्थं स्यात् 'मूलार्के' इति पाठेनैवाभीष्टसिद्धेः। २। महावारुणी-महामहावारुणीबुधाष्टम्यर्द्धोदयादियोगेषु वार-तिथि-नक्षत्राणां संघटनादत्रापि नक्षत्रग्रहणपक्षे प्रामाण्यादर्थान्तरग्रहणमसङ्गतम्। ३। मूलानक्षत्रयोगं विनाऽपि यदि नारायणीयोगस्तदा वक्ष्यमाणदिवसेष्वपि स्नानार्थिनः करतोयामागमिष्यन्, वस्तुतस्तु न कोऽपि तदानीं करतोयां समागतः। तेषां मते तु

वङ्गीयाब्दे—

| | | | |
|---|---|---|---|
| १२८५ | पौषस्य नवमदिवसे ज्येष्ठानक्षत्रे | | |
| १३०२ | „ द्वितीय „ | „ | |
| १३१९ | „ तृतीय „ | „ | |

सोमवासरे नारायणी-योगो भवितुमर्हति स्म। प्रकृते तु कैरपि-जनैर्दिनत्रयं नारायणीयोगयोग्यमिति न स्वीकृतम्।

मूलानक्षत्रे रवेरवस्थितौ मूलानक्षत्रयोगे वक्ष्यमाणा योगाः—

| | | |
|---|---|---|
| १२५५, | पौषस्य | द्वादशदिवसे |
| १२५८ | „ | अष्टम- „ |
| १२७२ | „ | चतुर्थ- „ |
| १२७५ | „ | प्रथम- „ |
| १२८२ | „ | त्रयोदश- „ |
| १३२६ | „ | षष्ठ- „ |

नक्षत्रान्तरेषु रवेरवस्थाने मूलानक्षत्रयोगे वक्ष्यमाणाः

| | | |
|---|---|---|
| १३०६ | पौषस्य | अष्टादशदिवसे |
| १३०९ | „ | चतुर्दश- „ |
| १३१२ | „ | त्रिंश- „ |

१२३३ „ ऊनविंश- „

१२३६ „ पञ्चदश- „

लिखितपूर्व्वेषु दिवसेषु सर्व्वेष्वेव नारायणीयोगसत्तया बहवः स्नानार्थिनस्तत्र समागताः। न केवलं स्वदेशवासिनोऽपि तु विदेशिनो राजानो भूम्यधिकारिणः पण्डिता अपण्डिताः ब्राह्मणा अब्राह्मणाः साधवः सन्न्यासिनो गृहाश्रमिणः परिव्राजका बाला युवानो वृद्धा वनिताश्च संख्यारहिताः समागताः। अतः सुष्ठु प्रतीयते सौरपौषे सोमवासरे मूलानक्षत्रयुक्ताऽमावस्यायामेव नारायणीयोगः।

वर्त्तमाने वर्षेऽपि ( १२३६ वङ्गाब्दे ) तथैव शुभयोगः समागतः। तथाच कृत्यचिन्तामणौ—

करतोयाजलं प्राप्य योगी नारायणीशुभे।
प्रातर्मौनेन यः स्नायात्त्रिकोटिकुलमुद्धरेत्॥

अन्यच्च—करतोयाजलं प्राप्य यदि सोमयुता कुहूः।
अरुणोदयवेलायां सूर्य्यग्रहशतैः समा॥
शिलाद्वीपं समासाद्य तच्च कोटिगुणं भवेत्।
तदेव कोटिगुणितं पौषार्के च यदैव सा॥

महाभारते—वनपर्व्वणि तीर्थयात्रायां २६६ तम-श्लोकः—

करतोयां समासाद्य त्रिरात्रोपोषितो नरः।
अश्वमेधमवाप्नोति प्रजापतिकृतो विधिः॥

पौण्ड्रखण्डे—करतोयां समासाद्य ये त्यजन्ति कलेवरम्।
तेषां मुक्तिर्न सन्देहो यावदिन्द्राश्चतुर्द्दश॥

वङ्गवासिनः सर्व्व एव देवीभक्ता जानन्ति देवीपुराणोक्तेन, कालिकापुराणोक्तेन वृहन्नन्दिकेश्वरपुराणोक्तेन वा विधिना देवीपूजनविधौ छागपशुवलिदानकाले पाठ्यं मन्त्रं—

वाराही यमुना गङ्गा करतोया सरस्वती।
कावेरी चन्द्रभागा च सिन्धुभैरवशोणगाः॥ इत्यादिकम्।

सा च करतोया गौड़देशे, पौण्ड्रवर्द्धने (उत्तरवङ्गप्रदेशे वगुड़ानगर-सन्निधाने ) शिलाद्वीप इति च कथ्यते, महास्थानमित्याधुनिकं नाम।

स्कन्द-गोविन्दयोर्मध्ये सोमवारे कुहूतिथौ।
प्रातर्मौनेन यः स्नायात् कुलकोटीः समुद्धरेत्॥

अपिच—स्कन्दगोविन्दयोर्म्मध्ये गुप्ता वाराणसी पुरी।
तत्रारोहणमात्रेण नरो नारायणो भवेत्।

स्कन्दगोविन्दाविति कौ ? केचित् करतोयानदीतीरस्थौ द्वावश्वत्थ-वृक्षाविति वदन्ति। पौण्ड्रक्षेत्रमाहात्म्ये तु द्वौ देवौ कार्त्तिकेय-नारायणौ शिलाद्वीपस्थितौ क्रोशमात्रव्यवधाने वर्त्तमानौ। तत्रैव क्रोशपरिमित-स्थाने स्नानदानादिकं कार्य्यं, न तु साम्प्रतं परिदृश्यमानयोरश्वत्थ-वृक्षयोरन्तरा स्नानसीमा।

वाराणस्यां कुरुक्षेत्रे यत् पुण्यं राहुदर्शने।
शिलाद्वीपं समासाद्य तच्च कोटिगुणं भवेत्॥
पौषे वा माघमासे वा यदि सोमयुता कुहूः।
व्यतीपातेन योगेन कोटिकोटिगुणं भवेत्॥

किञ्च—करतोयानदीतीरे वासो वा क्रियते यदि।
वाराणसीसमो वासः पातकान्मुच्यते नरः॥
करजायास्तीरे देवपूजा सर्व्वार्थसाधिका।
अन्यत्र पूजनाद्देवि ! सन्देहो नात्र सुन्दरि !

सन्ति हि बहवः श्लोका मन्त्रादयश्च करतोयामवलम्ब्य तज्जल-स्नानमाश्रित्य च विरचिताः। तत्र तावत् कतिचिदुद्धृत्य सन्दर्भमिम-मुपसंहरामः। स्नानमन्त्रः—

करतोये सदानीरे सरिच्छ्रेष्ठे सुविश्रुते !
पौण्ड्रान् प्लावयसे यस्मात्तस्मान्मे पातकं हर॥

प्रणाममन्त्रस्तु—

तत्तुल्यरूपास्ति नदी न काचिद्रजोविहीना तरुणी यतोऽसि।
धन्यासि पुण्यासि सरिद्वरासि श्रीकण्ठपाणिप्रभवे नमस्ते॥

अस्ति तावदृषिभिः कृतं शास्त्रं, सन्ति च बहूनि स्मृतिपुराण-वाक्यानि वेदानुगतानि, प्रवहति चाद्यापि क्षीणा धारा वह्नीनामिव निम्नगानां, किन्तु क्षीणतरा खलु परिलक्ष्यते वङ्गीयानान्तथा भारत-वर्षीयाणां भक्तिस्रोतस्वती। केचन वयं भारतीया भारतीयवैशिष्ट्यं सर्व्वथा परित्यज्य भारतस्यास्य स्वाधीनतामभिलषामः। नास्ति स्नानं, नच दानं, न च भारतीयं भोजनं, न चापि सदाचारः, शास्त्रनिष्ठा, तथापि वयं भारतीया इति कीर्त्तनपरा न लज्जामहे।

---

# जातिर्नित्या

[ निबन्धकः—श्रीबटुकनाथकाव्यतीर्थः एम्. ए ]

जातिर्नित्या नैव जानाति यस्तं
धिग् धिङ्मूढं पण्डितम्मन्यमानम्।
आन्वीक्षिक्यामीक्षितायां क्षणेन
स्पष्टं मूलं जातितत्त्वस्य भाति॥ १

नित्यो धर्मोऽनेकनिष्ठः स एव
जातिः प्रोक्तो नित्यसम्बन्धयुक्तः।
विप्रः क्षत्रो वैश्यशूद्रौ पृथिव्यां
नित्यास्तस्मात् कुत्र तर्कावकाशः॥ २

कौलग्रन्थाश्चैव सह्याद्रिखण्डोऽ-
खण्ड्ं भेदेऽवान्तराणां प्रमाणम्।

तस्माद् गौडा द्राविडा मैथिलाश्च
विप्रा नित्याः कान्यकुब्जप्रसूताः ॥ ३
वारेन्द्राणां राढजानाञ्च मध्ये
कालाख्येयाः श्रोत्रिया वा कुलीनाः ।
पाश्चात्त्या वै दाक्षिणात्याः प्रसिद्धाः
नित्याः सर्व्वे वैदिकेषु प्रभेदाः ॥ ४
विश्वामित्रः क्षत्रवंशप्रसूतो
ब्राह्मण्यञ्चेदाप दीर्घं तपस्यन् ।
स्वीये वर्णे स्थापनीयः पुनः स
मिथ्या स्यान्नो विश्वनाथस्य लेखः ॥ ५
आपस्तम्बेनोदितं यज्जघन्यो
वर्णः प्राप्नोत्युच्चतां धर्म्यकृत्यैः ।
मन्वादीनां स्वीकृतं संहितासु
त्वर्व्वाचीनैः खण्डितं पण्डितैस्तत् ॥ ६
कायस्थानां क्षत्रियत्वं न युक्तं
सद्गोपानां वैश्यता न प्रकल्प्या ।
न स्वप्नेऽपि म्लेच्छका हिन्दवः स्युः
जातिर्नित्या संयता तर्कजालैः ॥ ७
वङ्गे स्मार्त्ताचारनिष्ठे तथापि
विद्वद्वर्य्या सुप्रतिष्ठा अनेके ।
चित्रं ह्येषां रक्तमांसानुलिप्तां
नित्यां जातिञ्चक्रिरेऽनित्यरूपाम् ॥ ८
हीना जातिर्नोन्नतिं जातु याति
यस्मादश्मस्थास्तुरेषा प्रकृत्या ।
उच्चा सा चेन्निम्नगा स्यान्न बाधा
नीचैः पाताद्भङ्गुरत्वं हि युक्तम् ॥ ९

वर्णश्रेष्ठो ब्राह्मणश्चेद् बुभूषु-
म्लेच्छः सोऽस्तु स्वेच्छया निर्विवादम्।
किं वा हिन्दुः क्रिश्चियानो यदृच्छं
जातेर्नाशोऽवश्यमेवोभयोः स्यात्॥ १०

ग्राम्ये वादे युज्यते दुर्बलानां
विद्विष्टानां हेतुना केन केन।
जातेः पातः सूचिका रच्यते चेत्
तत्सर्व्वेषां भारतं स्याद्धितीयम्॥ ११

जातिद्वैधं भाषितं स्मार्त्तवर्य्यै-
र्नष्टौ गौडे चत्रवैश्यौ युगेऽस्मिन्।
तौ वर्त्तेतेऽन्यत्र वङ्गात् प्रदेशे
नित्यानित्यौ द्वौ समं तौ निरूप्यौ॥ १२

कल्पान्ते चेदार्य्यजातिर्विनश्येत्
यद्वत् प्रत्नाः पह्लवाः पारदा वा।
व्यक्तौ जातेराश्रयेऽन्तर्हितायां
कूटस्था सा नैव नाशं प्रयाति॥ १३

अन्ते त्यक्ता मानवान् जातयस्ता
नानावर्णान् पादपान् संश्रयेरन्।
आर्य्यावर्त्ते विप्रजातिर्विनष्टा
जीवेल्लग्ना ब्राह्मणे नारिकेले॥ १४

नष्टे पृथ्वीस्थाश्रये नाकसत्सु
चातुर्वर्ण्यं रक्षितं स्याच्चिरत्नम्।
वेदव्यासेनोक्तमेतत् पुराणे
सर्वे वर्णाः स्वर्गलोकेऽपि सन्ति॥ १५

आदित्या वै चत्रिया मारुताश्च
वैश्याः शूद्रावश्विनौ कीर्तिताश्च।

विप्राः ज्ञेया अङ्गिरःसम्भवास्ते
वर्णे वर्णे निर्जराः संविभक्ताः ॥ १६ *

---

## छन्दस्साङ्कर्य्यम्

[ निबन्धकः—श्रीकालीपद-मजुमदारः ]

( निषण्णा अध्यापकाङ्गणे सुधीरानिलरामशर्माणः )

अध्या—(अधीत्य) मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितन्तु ।
किमत्र छन्दः श्रीमन् सुधीर !

सुधीरः—औपच्छन्दसकं छन्दोऽत्र देवपादाः ।

अध्या—अपि सुष्ठूक्तं सुधीरेण श्रीमन्ननिल ।

अनिलः—नहि नहि देवपादा, मालभारिण्येव छन्दोऽत्र श्लोके ।

अध्या—कथयाधुना श्रीमन् राम क एतयोर्निर्भ्रमः ।

---

* एतद्वर्षीय-तृतीयसंख्यायां प्रकाशितस्य 'जातिपरिवर्त्तन'मितिशीर्षकस्य निबन्धस्य प्रतिवादात्मकोऽयं निबन्धः । कालवशाद् दुर्भाग्यपरिपाकाच्च सनातनधर्म्मिणां धर्म्मनिदानानि शास्त्रञ्च सदाचाराश्च चिराचरिताध्वानश्च विवादाध्यासितानीति न नाम न दूयन्ते सहृदयहृदयानि । एतच्च नैकशः प्रकाशीभूतं वस्तु अस्मत्पत्रिकापाठकानां हृदयमालोड़यति । एवंविध-साम्प्रदायिकनिबन्धानां प्रतिवादः सकृदेव सादरमस्माभिः पत्रिकायां स्थानं लम्भयिष्यते । तस्मादेतद्विषयकं निबन्धान्तरं नैवेच्छामः, शक्तितश्च साम्प्रदायिकनिबन्धान् परिजिहीर्षाम इति । सं० सा० प० स०

राम—उभावेव निभ्रमौ देवपादाः, परं न कोऽप्यस्य साङ्कर्य्यवेदी छन्दसः ।

( आलोचयतः परस्परं सुधीरानिलौ )

अध्या—किमत्र साङ्कर्य्यम् ।

राम—युगपदेतदौपच्छन्दसकं मालभारिणी च, अतो वृत्तं जातिश्च ।*

अध्या—साधु प्रोक्तवान् भवान् ।

---

## राजर्षि-प्रयाणम्

[ निबन्धकः—श्रीयोगीन्द्रमोहनविद्यारत्नः ]

पित्रोर्दैन्यवतोर्गृहे धृतजनुः पुण्येन दैन्यात्ययाद्
राज्यं प्राज्यतमं प्रपद्य सुमते ! सत्कार्य्यसक्तान्तरः ।
नित्यं दानपरो विलासरहितो राजर्षितुल्योऽसि भो
धन्यं तस्य जनुर्धनं न गणयेदात्मीयसौख्याय यः ॥ १

नानारोगसमाकुलं नरकुलं संलोक्य दैन्यार्दितं
नैसर्ग्या परदुःखकातरतया संपीड्यमानात्मना ।
आयुर्वेदनिकेतनं स्वजननीनाम्ना त्वयालङ्कृतं
संस्थाप्यार्थचयोऽपि सार्थकतयानर्थास्पदं मण्डितः ॥ २

वैदेशिकप्रमुषितार्थमिमं स्वदेशं
शोभासमृद्धिरहितं विनिवृत्तकीर्त्तिम् ।
वाणिज्यशिल्पनिवहैः पुनरर्थभाजं
कर्त्तुं त्वयार्थनिचयः प्रचुरो विसृष्टः ॥ ३

काम्यं जनैर्जगति यत् किल तत्प्रकामं
सौभाग्यतो नरपते ! गतवान् समग्रम् ।

---

* अत्रेदमवधेयं—मालभारिण्यामेवौपच्छन्दसकं सङ्क्रामति, न तु सर्वत्रौपच्छन्दसके मालभारिणीति । सं० सा० प० स०

विद्यां प्रसूतविनयां हृदयं दयार्द्रं
राज्यं प्रदानचतुर ! प्रचुरञ्च धर्म्यम् ॥ ४
धर्मात्मजेन सदृशस्त्वमजातशत्रुः
कृष्णप्रदत्तहृदयः परवैष्णवाग्र्यः ।
दानैर्दिनेशतनयं नमयन् नरेश !
कीर्त्तिं रघोश्च मलिनामकृथाः सुकीर्त्ते ॥ ५
स्वर्गं निसर्गसुलभं सुकृतैः स्वकीयैः
प्राप्तस्य ते किमु भवेद् वत तत्र वासः ।
दुःखात्मवेदनपटोः सुखदो निशस्य
मर्त्यस्य निःस्वनिचयान् रुदतस्तदर्थम् ॥ ६
कृष्णे निविष्टहृदयो निजकृत्यजातं
लोकद्वयाननुगुणं निपुणं विधाय ।
कामादिशत्रुनिवहं दमयन् यमेन
गोलोककल्पितपुरः पुरतोऽसि पुण्यैः ॥७
हा धिग् धराद्य सहसाशनिपातजातां
तीव्रां व्यथां कथमसौ प्रसहेत दीना ।
दैन्याकुलान् निजसुतान् विधवेव निःस्वा
पुष्णाति वा कथमियं नु मणीन्द्रहीना ॥ ८
अर्थः संयमिसेवितो नरपतिः स्वार्थैतरासक्तधीः
शक्तिर्धैर्य्यमयी क्षमा विनयितासम्भूषिता धर्म्मभाक् ।
सारल्यं शिशुवज्जनार्दनरतिः प्रह्लादवच्छाश्वती-
त्येतत्सर्वविवर्जिता वसुमती शोच्याद्य ते नाशतः ॥ ९
कालः कठोरतमतां शतधा प्रकाश्य
क्षौणीसजोऽमलरुचं नृमणिं मणीन्द्रम् ।
मुष्णन् सहष्टहृदयो ननु निःश्वसद्भिः
शापानलैरिह नृभिः कतिधास्ति दग्धः ॥ १०

न यत्र हिंसा न च लालसा वा
न रोगशोकौ न जरा न चिन्ता।
तद्धाम यातस्य न ते कदापि
जन्मास्तु मर्त्ये पुनराधिसारे॥

---

## परिषत्सन्देशः

**कविसम्मेलनम्**—पञ्जावविभागायत्त "लुधियाना"मण्डलाधीन "गुरुकुल-रायकोटे" अधिविशतः कविसम्मेलनस्य निमन्त्रणपत्रमस्माभिरधिगतम्। एतच्चाधिवेशनं फेब्रुयारीमासस्य २१।२२।२३।२४ दिनेषु भविष्यति। तत्रान्तरे पुनश्चतुर्थवार्षिक-कविसम्मेलनाधिवेशनं २१ फेब्रुयारीदिवसे भविष्यति। तत्रायनिर्देशानुसारतस्तस्यां तस्यां भाषायां समस्यापूर्त्तिं विधाय फेब्रुयारीमासस्य १५श दिनाभ्यन्तरे सा कविसम्मेलनमन्त्रिसकाशे प्रेषणीयेति। अध्यक्षाणां विज्ञापनम्।

समस्याः—

| संस्कृतभाषायां | हिन्दीभाषायां | पञ्जाबीभाषायां |
|---|---|---|
| १। पराभवोऽप्युत्सव एव मानिनाम्। | १। पीछे न हटेंगे | १। चार दिहाड़े |
| | २। दीन बीते | २। दर उत्ते |
| २। उपास्महे | ३। स्वराज्य होगा. | ३। आस |
| ३। यतीन्द्रः | ४। बैठे हैं | |

विषयः—क्रान्ति, देशभक्ति, ईश्वर, गुरुकुल।

धरमानन्दः
मन्त्री कविसम्मेलनस्य

**सारस्वतसमाजाधीन-परीक्षा**—आगामिनि सौर-वैशाखस्य ५।६।७ दिवसेषु (शुक्र-शनि-रविवासरेषु) ढाका, वरिशाल, कुमिल्ला, (नोयाखाली) चट्टग्राम, मयमनसिंह,

( काछाड़ ) मौलवीबाजार, खलिशाकोटा, हविगञ्ज, ( श्रीहट्ट ) ब्राह्मणवाड़िया ( त्रिपुरा ) इदिलपुर ( फरिदपुर ) बालियाभाङ्गा ( फरिदपुर ) पावना, नवद्वीप, किशोरगञ्ज, ( मयमनसिंह ) पाटग्राम ( ढाका ) कलिकाता ( संस्कृतसाहित्यपरिषत् ) केन्द्रेषु पूर्व्ववङ्ग-सारस्वतसमाजाधीनाः-प्रथम-मध्यमोपाधिपरीक्षाः ग्रहीष्यन्ते। सौर-फाल्गुनस्य २०श दिवसाभ्यन्तरे आवेदनपत्रं परीक्षार्थिभिः "वाङ्गला-वाजार सारस्वतकार्य्यालय ढाका" इत्यनेन स्थानसङ्केतेन सम्पादक-सविधे प्रेषणीयम्।

---

प्रकाशार्थमियं विवृतिः सम्मेलनकार्य्यालयादस्माभिरधिगता—

## अखिल-भारतवर्षीय-संस्कृत-साहित्य-सम्मेलनस्य द्वादश-महाधिवेशनम्

काश्यां फाल्गुनशुक्लाष्टमीमारभ्य दिनचतुष्टयं यावन्महता समा-रम्भेण सम्पत्स्यते।

अस्मिन्नधिवेशने भारतवर्षस्य सुप्रसिद्धा धुरन्धराः संस्कृतप्रणयिनो विद्वांसो मान्याश्च सम्मिलिता भविष्यन्ति।

एतस्मिन्नवसरे कविसम्मेलनम्, संगीतं, शास्त्रार्थः, संस्कृताभि-नय इत्यादीनां प्रबन्धोऽपि भविष्यति। संस्कृत-भाषाप्रधानकेन्द्रभूतायां वाराणस्यामस्यां संस्कृतविदुषां साहित्य-सम्मेलनमिति परं प्रमोद-स्थानं संस्कृतप्रणयिनाम्। अतो वयं संस्कृतप्रणयिनाम् आचार्याणां, सन्यासिनां, विदुषां, छात्राणाम्, अन्येषाञ्च सुरभारती-सुहृदां शुभा-गमनं सविनयं सादरञ्च समभिलषामः।

आशास्महे नूनं श्रीमन्तः सम्मेलनमिदं सफलीकर्तुं प्रयता भवि-ष्यन्तीति।

श्रीदेवीप्रसादशुक्लः कविचक्रवर्ती (म०म०)
स्वा० स० सभापतिः।

श्रीमदनमोहनशास्त्री—प्रधानमन्त्री। कार्य्यकारिण्याः समितिः।

**छात्रप्रतिभा**—अथ श्वशुरालये प्रचुराहार्य्यचोरितचित्तो माधवः कदाचिद् रामायणं शुश्रूषमाणया श्वश्र्वा सादरमवादि, "वत्स! माधव! साधुरेव भवान् रामायणादिवृत्तेष्विति तर्कयामि, तदधीत्य धीमन् किञ्चिदितिवृत्तं कृत्तिवासीय-रामायणा"दिति।

असंस्तुतविषयसन्निपातभीतो माधवः स्वामयोग्यतामप्रकाशयन्नेव किञ्चित् स्थानमुद्घाट्य तद्विषयवेदीव रोदितुमारभत।

अथाश्रुचालितवक्त्रा माधवः क्रन्दननिदानमजानद्भिः श्यालकप्रभृतिभिरभितः पर्य्यव्रियत, पृष्टश्च—"भोः किं ते रोदननिदानम्? किमशोकवाटिकायामाटीकमानाभिर्निशाटनाभिरुपद्रुतां जनकसुतां स्मरसि? आहोस्विद् राज्यात् प्रव्रजन्तं जटावल्कलधारिणं रामभद्रमनुध्यायसि? किं वा दशाननशक्त्या विमुक्तप्राणं रामानुजं प्रत्यभिजानीषे?" इति।

द्विगुणितशोकावेशो माधवः प्रसुक्तकण्ठं रुदन्नवादीत्,—"न जनकसुतां न रामं, न वा रामानुजं स्मरामि, परं रामायणपदघटकीभूतं 'रेफ'मनुस्मरामीति।

"कथमिवे"ति तैरभिहितो माधवः साश्रुगद्गदकण्ठमभ्यधात्—

"अस्माकं गृहे 'रेफस्य' महत् स्थौल्यं दृष्टम्, अत्र तु तस्यैतावत् कार्श्यमवलोक्य दुःखदुःखेन मे हृदयं विदीर्य्यत" इति। *

श्रुत्वा ते श्यालकादयः परस्परं मुखमवालोकयन्।

---

* अत्रेदमवधेयं;—शिशोरक्षरपरिशीलनविधौ स्थूललेखनीव्यवहारः सार्व्वत्रिकः, तेन चाक्षराकृतिरपि स्थूला भवति; परं परिचयाभावात् प्रवयसोऽपि कचिदक्षरस्थौल्यमुपलक्ष्यते। अत्राभ्यासाभावान्मांसलाक्षरविधातुर्माधवस्य कृशाक्षरदर्शन-मुद्वेगजनकमभूदिति।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| February, 1930. | १८५१ शकोये माघे १२श-वर्षस्य १०म-संख्या | Vol. XII. No. 10 |
|---|---|---|


## मतिमञ्जरी

**श्रीपञ्चमी**—समपद्येतामुत्सवश्च पूजा च श्रीमत्या वागधिदेव्याः सरस्वत्या इति प्रीतिमाविष्कुर्वन्तु श्रीमन्तः शिष्याः शिल्पकाश्च ।

प्राचीना खल्वियं देवता सरस्वतीति प्रत्नतात्त्विकानामतात्त्विकानामपि गवेषणा, अतो न तत्र काचिद् विप्रतिपत्तिः । परं कदाप्रभृतीयं पूजा वर्त्तमानरूपतायां पदं चकारेत्यप्यवगाढविविधशास्त्रोदधयः सुधिय एव प्रतिभावन्तः प्रतिभावयन्तु, वयमन्यदेवाद्य निवेदयितुमभिप्रेमः । अत्र च "पञ्चम्यां श्रीरपि श्रियम्" इति, "कार्य्यः सारस्वतोत्सवः" इति च स्मार्त्तप्रमाणादस्याः पूजारूपता उत्सवरूपता चेति द्वयमेवावगम्यते । लोके च तथैव व्यवहारः समुपलभ्यतेऽद्यापि । किन्त्वस्योत्सवस्यैतदेव वैचित्र्यं वैशिष्ट्यञ्च यदयं सर्व्वत्रैव प्रतिष्ठानादिषु प्रचरद्रूपो दरीदृश्यते । उत्सवत्वाविशेषेऽपि दुर्गोत्सवादौ न तथा विलोक्यते । यत्रैव पञ्चभिरपि जनैः सम्भूय किमपि कर्म्म क्रियते, व्यायामो वा अश्वाप्लवनाभ्यासो वा गीताद्यालोचनं वा, तत्रैवायमुत्सवः

सम्पूर्णाङ्गतया निष्पत्त्यहं निर्व्वाह्यन्त इति। आस्तां स्थानान्तराणां परिशीलनं, वेशवासेऽप्ययमुत्सवः शवरादिभिः प्रभिन्नप्रस्थानैरप्युपस्थाप्यते प्रायशः। तत्र च कारणमनुसन्दधाना वयं जानीमः, यत् साक्षाद् विद्याभ्यास भावेऽपि कलाविद्यानुशीलनं तत्र तत्र भवत्येवेति श्रीमत्यपि सरस्वती न तत्तत्स्थानं परित्यजतीति।

पूजाङ्गानि जपहोमादीनि, उत्सवाङ्गानि च प्रमोदजनकव्यापाराः। तेष्वङ्गेषु सारस्वतोत्सवेऽस्मिन् मुख्यमेकमङ्गं श्लोकलिखनम्। अस्मिन्नवसरे विद्यार्थिनो योग्यतानुरूपं श्लोकादिकं प्रस्तूय सरस्वत्याः स्तवादिकं कुर्व्वन्ति, सधर्म्माणामन्यविद्यालयमधिवसतां छात्राणामामन्त्रणञ्चानुतिष्ठन्ति। सुव्यवस्थापितोऽयं नियमः पूर्व्वेषाम्, एवं हि लेखशक्तिरनुशीलनप्रवृद्धा जडतां परिहर्त्तुमीष्टे। प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते इति नियमात कारणव्यतिरेकेण केवलं कवित्वशक्तेरनुशीलनवाञ्छया नाल्पदृशः शिशुप्रायाश्छात्त्रा श्लोकलेखने प्रवर्त्तन्ते; यदि हि कारणं किञ्चिदुपस्थाप्यते, प्ररोचयन्ति च नितान्तानुलङ्घनीयादेशा गुरवस्तदा विनापीच्छया स्वच्छान्तःकरणाः प्रवर्त्तन्ते। अत्र च निःस्वार्थानरनुग्रहाः केचन प्रतीच्यशिक्षिता आचारमिमं निर्व्विचारमयथाव्यवहार इति प्रलपन्ति, ते तु पूर्व्वदर्शितकारणेन प्रत्युक्ता भवन्तीति स्वान्तमास्माकीनम्। वैद्यकयुगेऽस्मिन् वैद्यकविद्यालयेषु तदितरविद्यालयेष्विव सरस्वत्यावाहनं यथारीति सम्पाद्यमानमपि श्लोकलेखव्यवहारो दूरापेत इव प्रतीयते। मन्ये इदानीमिव पुरा वैद्यकविद्यानां तथा प्रसारो नासीत्, तेन च विलुप्यमान इवायमुत्सवः पारम्पर्य्याभावात् सम्प्रदायेषु। इदानीं शास्त्रान्तरापेक्षया वैद्यकस्य बाहुल्येन प्रसारे समनुभूयमानेऽपि चिरलुप्ता रीतिरियं नैव प्रोज्जीवतीति दुःखमनुभवामः। केवलं क्वचिद् वैद्यकप्रतिष्ठानादिषु अङ्गुलिसंख्याते क्वचिद् विद्यापीठे च व्यवहारोऽयं परिदृश्यते।

परिषदङ्गीभूतविद्यालयप्रसङ्गेनास्माभिः पराःशताः सरस्वत्यावा-

ष्टनलिपयः प्रलोकिता वर्त्तन्ते। तासाञ्च लिपीनां वैचित्र्यदर्शनात् किमप्यालोचनमस्माभिः कर्त्तुमिष्यते, अनाविला केवलमालोचनैवेयमित्यस्मत्पत्रिकापाठकास्तत्तल्लिपिकर्त्तारश्च प्रतिकूलामपि नैवासूयिष्यन्ति, नाप्यनुकूलामभिनन्दयिष्यन्तीति प्रार्थयामः।

तत्र दौलतपुरवामनाश्रमान्तर्गत-सारस्वतचतुष्पाठीतः प्रकाशिता लिपिः प्राथम्येनास्माकं नेत्रेष्वापतति। अस्याः सारसिकतायामकठोरपदन्यासो मानसमनेकेषामेव वशीकरिष्यतीति नास्ते सन्देहलेशोऽपि। प्रतिवर्षप्रसूततया निःशेषमुपक्षीणायां सरस्वतीविषयकभावधारायामुत्तमकविरिवायं निबन्धा कञ्चनानुत्सृष्टं भावं लेखन्यग्रनर्त्तकीरूपया भाषया प्राचीकशत्। तत्र च—

> मातः कालवशात्तुषारनिकरान्नष्टं सरोजं समं
> तत्पङ्केरुहवासलालसमतेः क्वास्तु वासस्तव।
> कामक्रोधमदादिपङ्कविलसन्मूला हि नो वासना
> अन्तर्वक्त्रसरोजनिश्च रसना किन्नासनात् पूयते॥

अयमेक एव श्लोकः पर्य्याप्त-प्रमाणम्। भावगाम्भीर्य्यमत्र प्रभूतमुपलभ्यते। तथाहि—शिशिरादिकालवशात् प्रकृतं पद्मं नश्यति, कामक्रोधमदादिमूलवासनारूपं पद्मन्तु चिरन्तनं, तथा प्रकृतं सरोजं निरावरणस्थानस्थितत्वात्तुषारनिकरेण नश्यते, रसनासरसीरुहन्तु अन्तर्वक्त्रसरोजनित्वेन तुषारसम्पर्कविरहात् चिरप्रकाशीति प्रतीयमानं वैशिष्ट्यद्वयं रूपकद्वये अधिकमारोहद् विनाप्यलङ्कारेण श्लोकमिममुज्ज्वलीकरोति।

शब्दालङ्कारेष्वनुप्रास एवाधिकां प्रशस्तिमप्रथयदित्यतः केचनानुप्रासप्रिया लेखक्रियायां बलादिवानुप्रासमुपासते, तेन चास्तां प्रशस्तिरनुप्रासजन्या, परं लिखितविषयोऽप्यधन्यतामुपगत पाठकानामुद्वेगविशेषमिवोपनमयति। अनेन च लेखकेन स्वरससमानीतोऽनुप्रासः प्राशयतीवाभूतपूर्व्वं कञ्चनानन्दं समं भाषासारल्येन भावबोधतार-

ष्येन च पाठकमहोदयानित्यधोद्धृतश्लोकानुशीलनेनैव प्रज्ञायते।
यथा—

पुण्या काचन पञ्चमी परिलसत्प्रेमप्रवाहाः प्रजा-
स्छात्रा मोदभृतो विभान्ति जननीस्नेहाङ्कसम्पर्किणः।
पुण्यानीहसि कश्चिदीदृशि वयं कर्त्तुं महः काङ्क्षिणो
भो वाणीचरणारविन्दमधुपा अवेत नः प्रीतये॥ इति।

"चिरं चुम्ब चेतोद्विरेफ! प्रमाथिन्" "इरतोह सरस्वती"त्यादिरूपं वैचित्र्यविशेषं प्रत्येकश्लोकेष्वतिमात्रमुपलभ्यते। विस्तारभिया त्वत्रैव विरम्यते।

वैशिष्ट्येन एतदनन्तरमेव भट्टपल्लीपञ्चाननशिष्यानयान्तेवासिना-मुपहारलिपिर्लोचनातिथिश्चित्रकाव्यरसिकानां भवति। अस्य श्लोक-द्वयमेव चित्रकाव्यान्तर्गतं, तत्रैको 'महापद्मबन्धो लताबन्धो वा', द्वितीयः 'सर्व्वतोभद्रबन्धः'। अत्र हि काव्ये वर्णास्तत्तच्चित्राकारेण परिणता दर्शकानां चमत्कारविशेषमुपजनयति, उक्तञ्च दर्पणकारेण, "पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते" इति, तेन च तथाविध-श्लोकनिर्मातुश्चित्रफलकमपि सुतरामावश्यकमिव प्रतिभाति; इतरथा यदस्य काव्यस्य वैशिष्ट्यं दर्शकेषु प्रतिपिपादयिषितं तदेव व्याहतं सत् कर्त्तुर्वृथाश्रमाय कल्पते। अत्रापि महापद्मबन्धत्वेनाख्यातं पद्यन्तथैव चित्रफलक-विकलं तालयादिमदपि विस्वरं गीतमिव प्राणिनां नैव सन्तोषमुत्पादयति। तस्माद् यद्यस्य पद्यस्य चित्रफलकमेकमभवि-ष्यत् तदा नूनं कृतिजन्या प्रशंसापि कविना प्रकाममुपादास्यतैव। मन्ये पञ्चषराजतमुद्रोपार्जनजन्यः परिश्रमः कवेरेवंविधचित्रकाव्य-प्रणयनपरिश्रमात् परिश्रमान्नातिरिच्यते इति।

सर्वतोभद्रबन्धस्तु सर्वतोभद्रतयैवाद्रियतेऽस्माभिः। चित्रफलक-मन्तराप्ययं स्वं वैचित्र्यं प्रकटयितुमीष्ट इति दिष्ट्याऽसम्भृतोपकरण-स्यापि कवेरभीष्टसिद्धिरर्थदैन्य नोदपादयदिति। स चायं श्लोकः—

मा या सा र र सा या मा
या ज पा च च पा ज या।
सा पा श दे दे श पा सा
र च दे वि वि दे च र॥ इति।

अस्य च दुर्बोधतया टीकापि काचिदधः सन्निवेशिता कविना। अत्र च रससृष्टेरभावेऽपि नैपुण्येन, लेखसामर्थ्येन च अस्यापि कविः काव्यरसिकेषु पदमादधातीति मतिरस्माकम्। अपरे पुनः केचनाधुनिकाः कवित्वहीनमिति दुर्बोधाभिधेयमिति, दुरुद्घाटपाठक्रममिति च प्राप्तरोषा दोषावेशमिह प्रायेण कल्पयन्ति, न पुनर्गुणवत्त्वम्। वयन्तु ब्रूमः मास्तामस्य रसवत्ता, परमनेन कवेः कौशलविशेषस्तु नैव न प्रकाश्यते इति को नाम विदितचित्रकाव्यवैचित्र्यः प्रत्येतु। भाषाकाठिन्यन्तु न केवलमस्यैव कवेः, परं प्राचीनकवयोऽप्येवंविधबन्धादिस्थले भाषासारल्यमुद्भावयितुं नैव प्राभवन्निति।

अतःपरं भट्टपल्लीभुवनेश्वरीचतुष्पाठीस्थ-पत्रमवलोकयितुमवसरः प्राप्तः। तत्रायं श्लोकः—

तनुतां तनुतां जाड्यतमसोऽग्ररविच्छविः।
विपश्चीखुरलीह्लादिपिकावाङ्नुत तां नुत॥

अत्र हि लेखकमते "छत्रबन्धः सरलपताकाबन्धो गदाबन्धो यमकसंसृष्टिः प्रहेलिकासङ्करश्च" पदं कुर्वन्ति। बन्धविषये च पूर्वोक्तं चित्रफलकवैकल्यमत्राप्यतिदिश्यते। विशेषेणैवंविधेष्वप्रसिद्धबन्धेषु। छत्रपताकादिभिरभितः परिवृतोऽप्ययं श्लोको नैव सुदृश्यतया प्रतीयते प्रतिजनमिति ज्ञायतामेतत्कविना। यमकसंसृष्टिश्च पादादिपादान्तयमकयोः "तनुतां तनुता"मित्यस्य "नुत तां नुते"तस्य च प्रकृत्या भिन्नाश्रययोस्तिलतण्डुलवदिति निश्चिनुमः। परं पादादियमकस्य भिन्नार्थत्वेन यथा वैशिष्ट्यमभून्न तथा पादान्तयमकस्य, तस्यैकार्थत्वेन वैचित्र्याभावात्। प्रहेलिकासङ्करस्येत्थं विचार्यते,—प्रहेलिकास्ताव-

दक्षरच्युतक-मात्राच्युतकादिभेदेन बहुरूपाः। अत्र च अक्षरच्युतक-रूपा मात्राच्युतकरूपा वा सेति मतमस्माकम्। तयोश्चैवं रूपमालङ्कारिकैः समर्थ्यते यद्, यदि किञ्चिदक्षरं विनापि श्लोकस्यार्थविशेषोऽव्याहतः स्यात् तदा तदक्षरच्युतकं, यदा पुनः स्वरादिरूपमात्राच्युतावप्यर्थसम्पत्तिस्तदा मात्राच्युतकं भवतीति। अत्र हि द्वितीय'तनुता'मिति-पदस्य तामित्यक्षरच्युतावपि कश्चिदर्थो भवति। एतत्पक्षे च 'वाक्' इति सम्बोधनान्तं पदं, तेन च 'हे वाक्' 'अग्रग्रविच्छविः' 'विपश्चोद्युरलो-ल्लादिपिका' त्वं 'जाड्यतमसः तनुतां तनु' इत्यर्थो भवति। मात्राच्युतकपक्षे तु तस्यैव पदस्य बिन्दुपरिहारेण जाड्यतमसः तनुताः तनुता-मिति भेदः, अत्र च 'तनुताः' इति कर्मपदं द्वितीयाबहुवचनान्तम्। एवमनयोरक्षरच्युतकमात्राच्युतकरूपप्रहेलिकयोरेकाश्रयानुप्रवेशरूपः सङ्करः काव्याटवीचंक्रममाणैरनुभूयते। यद्यप्यालङ्कारिकैः—"काव्यान्तर्गडुभूता या सा तु नेह प्रपञ्च्यते" इत्याद्युक्त्यास्याः प्रहेलिकायाः समुद्वेजकतैव प्रत्यपाद्यत, तथाप्यासीदस्या अपि भूयान् प्रचारः प्राचीनकाले। अद्यत्वे पुनस्तथाविधविद्यायाः क्लेशजनकतयार्थवैचित्र्याभावेण च प्रचलनं सलिलसमाहितमिव प्रतिभाति। यद्यप्यत्र केचन प्राचीनरीत्या दत्तावधानाः प्रहेलिकायां वृत्तिमादधति तन्नूनं प्रशस्यमेवेति प्रान्तः प्रसङ्गः।

इदानीं मुक्तकेशी आयुर्वेदीय औषधालयात् प्राप्तस्य श्रीयुक्त-सुशीलचन्द्रचक्रवर्त्तिच्छात्रवृन्दानामुपहारस्य वारः समायातः। एतत्-प्रसङ्गेन पुनर्वक्तव्यान्तरमेतदापतति, यदेकमेवेदं पत्रमायुर्वेदीय-विद्यालयादेकाध्यापकचालितादवलोक्यतेऽस्माभिः। इयं पुनरष्टाङ्गा-युर्वेदविद्यालय-गोविन्दसुन्दर्यायुर्वेदीयविद्यालययोरधिगतम्। एत-द्वयं पुनर्बहूनां प्रतिष्ठानरूपम्। एतयोः श्लोकानान्तु तथाविधं किमपि वैचित्र्यं भाषाभावादिगतं नावलोक्यते, नापि दोषोऽपि कश्चिदिति न वयमनयोः समालोचनामिच्छामः। परं सन्तीह नगरे परःशताः

स्वयं प्रधाना वैद्यव्यवसायिनः, सन्ति च बहूनि प्रतिष्ठानानि, तेषु च प्रोक्तं पत्रत्रयमात्रमधिगतमिति स्वान्तमपि स्वीयं न प्रत्येति। किं वयमेव वराकाः पारिषद्यास्तेषामुपहारेण प्रत्युक्ताः? आहोस्विद् भुवनमेव तेन विनाकृतमिति प्रष्टव्यास्ते वैद्यकविद्यानुशीलनपराः। अधुना प्रकृतमनुसरामः। पूर्व्वोक्तोपहारस्य वैचित्र्यमेतदेव यत्तत्र प्रसङ्गेन श्लेषमहिम्ना बह्व्यौषधनामानि सन्निधापितानि वर्त्तन्ते। वैद्यकविद्यालयादेवंविधमेवोपहारं बहिर्गच्छन्तमिच्छन्ति प्रभिन्नप्रस्थाना अपि स्थानकालविदो विद्वत्समाजमुख्याः। तस्य च श्लोकौ—

सर्व्वाङ्गसुन्दर-चतुर्मुख साभिलाषा
लक्ष्मीविलास-भुवनेश्वर-पोषितश्रीः।
चन्द्रप्रभा-सुविमला द्विजवैद्यवाणी
या स्याद् वसन्तकुसुमाकर-चारुमूर्त्तिः॥

सा सूचिकाभरण-विभ्रममुद्वहन्ती
दोषान् पिनष्टु विषमान् समसूतकेण।
चिन्तामणौ च रसभस्मनि चैकरूपा
वङ्गान् युनक्तु जयमङ्गलयो रसेषु॥ इति।

अस्यार्थं पुनः पदार्थभावनचतुराः सूरयः परिचिन्तयन्तु, प्रबन्ध-विस्तारभीतं सम्पादकीयं चेतस्तु कातर्य्यमवलम्बते! परमिदमत्रा-वश्यं प्रकाशनीयं यत्, यदनयोः श्लोकयोश्चातुर्य्यं, यश्च श्लेषमहिमा, या च सर्व्वैः सादरमवलोकिता स्थानविषयोपयोगिता, तानि नूनं नैव नूतनानीव प्रत्यभास्यन् यदि वैद्यसमाजेषु एवमुपहारलेखनरीतिः पूर्व्वतः प्रावर्त्तिष्यतेति प्रक्रमेऽप्यस्माभिरयमेवार्थः प्रख्यापितः। यदि चात्र श्लोकयोः क्वचन किञ्चिदसामञ्जस्यमिव प्रतिभाति, तदपि विषय-गुरुत्वमनुस्मरद्भिः सहृदयैरवश्यं क्षमिष्यत इति।

इदानीं परिषच्छात्रवृन्दानां श्लोकमाकलयामः। स च—

चञ्चच्चामरकश्रिमा शिरसिजे नेत्रे चलच्चित्रिमा
दीव्यत्काञ्चनपीतिमाधरपुटे विम्बोल्लसद्रक्तिमा ।
भ्रूयुग्मे घननीलिमा पदतले लाक्षामिलन्मञ्जिमा
सर्व्वश्वेतविलक्षणो विजयते सारस्वतः श्वेतिमा ॥ इति ।

अत्र चादौ 'इमन्' प्रत्ययमहिम्ना, तत्प्रत्ययस्य स्थानविशेषनिवेश-महिम्ना च जायमानं श्रुतिसुखं मूर्खाणामपि श्रुतिमतां मानसमुत्सुकयति, का कथा श्रुतिमताम् । भावोऽप्यत्र जनैर्नवीन इवान्वभावि । तथाहि—कविना तत्तदवच्छेदेषु तत्तद्वर्णसन्निधानवर्णनया सर्व्व-श्वेतवैलक्षण्यं तथा जनानामीक्षणगोचरीकृतम् यथा दर्शनमात्र एव ज्ञातार्थानां मनसि प्रतिभायाद् यदेवं भूता चित्ररूपापि सरस्वती कथं सर्व्वशुक्लत्वेन निर्दिष्टेति । अन्ते च मात्रिकवृत्त्येदमपि प्रोद्घाटनीयं यच्चतुर्थचरणाद्यभागे प्रक्रान्तेमन्प्रत्ययातिक्रमो विशेषानुसन्धानपराणां नेत्राण्यन्धयितुं नालमभूदिति ।

इदानीं राजकीयसंस्कृतविद्यामन्दिरान्तेवासिनामुपहारपत्रे विहरामः । सर्व्वादौ तावदस्य प्रशस्तिरियमेव, यदिदमाङ्गलभाषाङ्गीभूत-संस्कृतभाषापाठशालातो निर्गतम् । यद्यपि सर्व्वत्रैवाङ्गलविद्यालये संस्कृतभाषाङ्गरूपेण पदं करोति, तथापि तेभ्यः किमप्युपहारपत्रमत्रा-न्तरे नास्माभिरवलोकितम् ऋते "पार्क इनष्टिटिउशनात्" विना च राजकीयसंस्कृतविद्यामन्दिरादिति । राजकीयविद्यालयस्य श्लोक-स्त्वयम् ,—

श्वेताब्जे धवलं पदाब्जयुगलं विन्यस्य याङ्गश्रिया
मालिन्यं हरितां नृणाञ्च जड़तामाहन्ति वागीश्वरी ।
विद्यासद्मनिवेशिता सिततनूश्चञ्चद्विपञ्चीधरा
सा देवी पुरुषार्थसाधनकरी संपातु शश्वत् सुतान् ॥ इति ।

अस्य हि श्लोकस्य बालकानामिव सारल्यं युवकानामिवार्थौदार्य्यं वृद्धानामिव बन्धदार्ढ्यं चमत्करोति चेतांसि सहृदयानाम् । यत्

सत्यमेवं दृढ़बन्धो निबन्धः साम्प्रतिकसमायां सरस्वत्युपहारनिकरे नैवास्माभिरधिगतः। अस्य मानश्लोकाऽपि तथैव बन्धे निर्बन्धवानिति सोऽप्यग्रे प्रदर्श्यते। यथा—

सौम्य! पुण्यभवनेऽम्बर द्विभे सौरमाघशुभसोमवासरे।

चूतकुन्दकुसुमैः सचन्दनैर्मातुरङ्घ्रियुगलं समर्चताम्॥ इति।

अत्रापि पूर्व्ववदेव प्रायेण गुणा वर्त्तन्ते, तृत्यन्तोविेयं विभाव्यते भाषा बन्धप्रसादाच्छन्दोऽविभवाच्चेति निश्चयो मादृशानाम्। किन्त्वस्मिन् चूतकुन्दयोरानन्यमपि समाविशं कविसमयः सहते नवेति प्रविभावयन्तु काव्यरसभावुकाः।

आङ्गलविद्यालयादाङ्गलविद्यार्थिभिर्निबद्धोऽयं श्लोको बहूनामिव संस्कृतविद्यालयात् संस्कृतविद्यार्थिभिर्विरचितानां पद्यानां मूर्द्ध्नि पदं चकारेत्यसंशयं विश्वसिमः।

एतदवसरे पुनरेतदवश्यमङ्गीकार्य्यं यत्, संस्कृतप्रणयितया यदि कोप्युपहारः पुरष्कारमर्हेत् स तु <u>पार्क इनष्टिटिउशन</u> नामधेयाङ्गलविद्यालयस्योपहारः। यत आङ्गलभाषाप्रधानेषु विद्यालयेषु मध्ये केवलमस्मादेवैक उपहारो निरगादिति।

इदानीं रङ्गपुरपत्तनोय-<u>यादवेश्वरचतुष्पाठीतः</u> समासादितं पत्रमत्रोपस्थाप्यते, यस्यायमाद्यश्लोकः—

सद्दी-बद्ध-विवाहसिद्धविधिना क्रुद्धा कणद्दोणया
नो यामीति महोतलं क्वचिदहो चण्डात्मिका भारती।
गायन्ती गगनाश्रया मम पुरं स्तुत्यादिभिः प्रापिता
सा प्रेक्ष्या जगदम्बिका कृतिमता सम्प्राप्य विद्यालयम्॥

दृढ़बद्धः सरस-भावयुक्तोऽयं श्लोकः सदृशो यादवेश्वरचतुष्पाठ्याः सदृशश्च रङ्गपुरपत्तनस्य। अत्र च प्रथमपादः, द्वितीयपादस्य "नो यामीति महोतल"मित्यंशश्च सममेवात्रभवन्तं यादवेश्वरं स्मारयतः। किन्त्वाद्यपादः सादृश्येन द्वितीयांशश्च वैसादृश्येनेति तयोर्भेदः। द्वितीयांशे

'इति' पदस्याख्यानख्यता, सा चास्मन्मते 'नाहं यामि मद्दीमिती'-त्येवं रूपेण परिहृता सती श्रुतिसौन्दर्य्यमादधातीति। द्वितीयार्द्धे 'मम'पदेन कस्य परिग्रहः ? पद्यपक्षस्तु 'छात्रवृन्दाः' पुंसि विशेषादराः सरस्वतीं स्वं पुरं प्रापयितुं नेच्छते। "मम पुरं प्रापिते"त्यतिसाहसं सम्भावयामः।

इदानीं कुमिल्लायां चन्द्रमोहनकाव्यविनोदाख्येवामिनामवसरः श्लोकस्त्वयं—

शाखी मन्दसमीररिङ्गणलसच्छाखाभुजः सर्व्वतः
स्निग्धश्यामपलाशशासरुचिरो गुञ्जद्द्विरेफावलिः।
उत्कूजत् पिकराजराजिमुखरा नीलाम्बरा दिग्वधू-
र्वर्षान्तेऽधिगतां गिरं सुकुसुमैः सम्भाषते स्वागतम्॥ इति।

श्लोकोऽयं पदानां बन्धप्राधान्येन सन्निवेशविशेषेण च कवेर्योग्यतां विज्ञापयति। अत्र हि—शालशकुलभोजिनश्चिलिचिमजङ्घया दन्तभङ्ग इव पूर्व्वोक्तश्लोक कवेः 'तदुत्सवे हि प्राप्यते भवतां सुसमागमः' इत्या-द्यन्तिमश्लोके स्खलनम् अन्याय्यमिव प्रतिभाति।

- इदानीं मयमनसिंहजिलाधीन-पांचगाइग्रामीय-भारतीचतुष्पाठ्याः पत्रं समालोचयामः। सर्व्वेषूपहारेष्वयमेक एवोपहारः शरीरमहिम्ना प्राधान्यमवलम्बते। अस्मत्परिचितस्य कस्यचिद् रसिकस्यैतादृशो दीर्घोपहार एव प्रीतिप्रदः। तस्यायमाशयः—"पुरा विवाहादौ वस्त्रादिदानरूपो व्यवहारः प्रावर्त्तत; यस्य संक्षेपेण 'व्यवहार' इत्ये-वाभिधानं, स चेदानीं लुप्तप्रायः, अद्यत्वे तत्रोपहारः पदं करोति, सोऽपि कृशकायः। हंहो सामाजिकाः! यदि वस्त्रप्रतिनिधिरुपहारो दातव्यस्तदा तद्रूपेण 'वङ्गवासीपत्रिका' दातव्या, यं वस्त्रमिव वसितु-मपि शक्यते" इति। अ य तूपहारस्य वस्त्रप्रतिनिधित्वं मास्तु गात्र-मार्जनीप्रतिनिधित्वं केन वार्य्यताम्, आस्तामिदम्। अस्य द्वादशश्लोक्याम्

आद्यन्तवर्जमन्तिमपदास्तुल्या दशसु श्लोकेष्विति विशेषः। अन्तिमतः कवेरभ्यस्ता लेखशैलाति श्लोकपाठादवगम्यते। दिङ्मात्रमुदाह्रियते—

अयि देववाणि स्फुटत्श्वेतपद्मे
लसत्पादपीठे मरालासनस्थे।
प्रसीद प्रसन्ने वयं त्वां प्रपन्नाः
स्मरामो नमामो यजामो भजामः॥ इति।

प्रियपाठकमहत्तमाः! यान्यस्मभ्यं विशेषतो रुचितान्युपहारपत्राणि तानीमानि यथामति प्रबन्धरूपेणाहृत्य युष्मभ्यमुपहृतानि। शिष्टानि पुनरस्मन्मतेनादृष्टान्यविशिष्टानि चेत्यतः प्रतिश्लोकोल्लेखपूर्व्वकमेषां पर्य्यालोचना नानुष्ठिता। इदानीं पुनर्निबन्धोपसंहारावसरे मानस-तर्पण निन्दात्मकसमालोचनं किञ्चिदुपहृत्यावसरं लब्धुमिच्छामः।

तत्र तावन्नवद्वीप-भागवतचतुष्पाठीतः पठितं स्तोत्रमुत्कीर्त्तयामः। तदिदं स्तोत्रम्—

निधे! नित्यस्मेरे निरवधिगुणे नीतिनिपुणे
निराघाटज्ञाने नियमपरचित्तैकनिलये।
नियत्या निर्म्मुक्ते निखिलनिगमान्तस्तुतपदे
निरातङ्के विद्ये सफलयतु नो हि जनुरिदम्॥ इति

न तावत् पाठकानामाख्येयं, यदिदं भगवत्पूज्यपादैः शङ्कराचार्य्यैः कृतायाः सुप्रसिद्धानन्दलहर्य्या अन्यतमं पद्यम्। केवलं चतुर्थचरणार्द्धं "विद्ये सफलयतु नो हि जनुरिदम्" इत्यत्रैवास्योपहारस्य कवित्वम-वलोकयामः। चिन्त्यञ्चेतद् यदेतावत्येव तयोदशसु मात्रकास्वापतित-श्छन्दःपातः। पद्यान्तरेऽपि तस्या एवानन्दलहर्य्या जीमूतमन्द्रो ध्वनिः कर्णौ प्रोणयति। एवं चाद्यपद्यस्याद्यपादः "विपञ्चया गायन्ती विविधमवगीतं श्रुतिगुणम्" इति। आनन्दलहर्य्यान्तु—"विपञ्चया गायन्ती विविधमवदानं पशुपते"रिति वर्त्तते। अत्र पृच्छ्यते, किमस्य कविर्जननयनानामञ्जलिदानार्थं परकृतिमात्मीयत्वेन

आहोस्वित् भगवत्पादेषु प्रहृष्टश्रद्धस्तत्कृत्युल्लेखेनात्मानं पुपूषति। द्वितीयश्चेत् पक्षोऽभिमतस्तदा परकृतित्वव्यापकं बन्धनीचिह्नविशेषम् " " कथं प्रस्मृतवान्, कथं वा चतुर्थचरणार्द्धे, आद्यपादे वा विकृतिमापादितवान् भगवत्पादकृतिमिति ज्ञातुमिच्छामः। मानश्लोके च "सदयमिह समेत्य धीर नः प्रीणयस्व"त्यत्र 'मालिनी' वृत्यन्माला सती शोचनीयतां गतेव प्रतिभातीति।

इदानीमभयाचतुष्पाठ्यन्तेवासिनामसमीचीनतां विविचयामः। इयं चतुष्पाठी 'वर्द्धमाना'न्तर्गत-'गङ्गाटिकुरि' स्थाने वर्त्तते इति तत्पत्रादवगम्यते। तेषामन्तेवासिनां श्लोकचतुष्टयेष्वयमाद्यः—

उज्ज्वलकल-कोकिलकुल-लोलितरससिन्धुः
सहकृतसहकारमुकुल-मलयानिलबन्धुः।
विकशितसित-कुसुमराजि-राजित ऋतुराजः
राजत इह राधनकृते राजत तनुभाजः॥ इति।

द्वाविंशतिमात्रिकमिदं छन्दो जयदेवपादानां पदाङ्कानुसरणेन निबद्धमस्तीत्यनाख्यातमपि प्रख्यातप्रायं पाठकेषु। यतिनियमानुगत्यैवास्य च्छन्दसो माधुर्यं परितः प्रकाशते इत्यप्यविसंवादिनी वाक्। अत्र च 'सहकृतसह' इत्यत्र यतेरत्यावश्यकत्वेऽपि कवेरशक्त्या सा न व्यक्तीभूतेति प्रोज्झितमाधुर्योऽयं श्लोकः काव्यरसिकेषु प्रतिभास्यति। 'सितकुसुमराजि' इत्यत्र च सितपदं व्यर्थमिव प्रतिपश्यामः, व्यावर्त्तकसितेतरकुसुमानामपि प्रत्युक्तत्वाभावात्। चतुर्थचरणे च मात्रावैषम्यकृतो महान् दोषः समापतित इति मात्रासंख्यापरैरवश्यमालोकितं किल। मध्यश्लोकद्वयन्तु च्छन्दोऽन्तरनिबद्धं न तावन्निन्दामर्हति। चतुर्थश्लोके पुनर्जयदेवच्छन्दसा लिखिते प्रस्खलितमिव प्रलोकयामः किञ्चित्; 'मृन्मयप्रतिमाहितहितचिन्मयजनुरूप'मित्यत्र संयुक्तपूर्ववर्त्तितया 'मृन्मय'स्य गुरुत्वान्मात्राधिक्यमीक्षामहे, यतिनियमोऽपि पराहतः। तदत्रायं सिद्धान्तः,—कविरयं लेखकपदवाच्योऽपि

जयदेवपद्धतौ वृद्धतां नैवागाद्ववेत्यतः प्रश्नीयतां तस्यामाग्रहस्तेनेति। परं प्रसिद्धेन पथा चरता तेन कविना कालवशात् प्रख्यातिर्लप्स्यत इत्यप्याशास्महे।

ढाकाजिलान्तर्गत-भाग्यकूल-गङ्गाचरणचतुष्पाठीतः प्राप्तायाः पत्रयाः श्लोकोऽयम् :—

मातर्देवि सरस्वति प्रणमतां पाण्डित्यसम्पत्प्रदे
वाचामीश्वरि भक्तकल्पलतिके सर्व्वार्थसिद्धीश्वरि।
फुल्लेन्दीवरकान्तिलोचनयुते कारुण्यवारां निधे
सुज्ञानामृतवर्षणेन कृपया सिञ्च त्वमस्मादृशान्॥ इति

प्रसिद्ध-सरस्वतीस्तुतेश्छायामाश्रित्य कविना लिखित इत्यदिव्यचक्षुषोऽपि ज्ञातुमीशते। अनुशीलनेन भावविशेषोद्भावनार्थं कविमहोदयेष्वयमस्माकमञ्जलिर्यत्, यथाशक्ति स्वेनैव भावेनानुप्राणितास्ते लिखितुमभ्यस्यन्तु श्लोकान्, अन्यथा भावपुष्टिर्दूरापेता कुकवित्वख्यातिमेषामाजीवनं वक्ष्यतीति। मानश्लोके—"शशाङ्कवारेऽम्बरयुग्ममाघे संस्कृतविद्यालयमन्दिरेऽस्मिन्" इत्यादौ च छन्दोभङ्गः।

यशोहरवीरेश्वराख्यविद्यापीठान्तेवासिनां विनीतप्रार्थनायामिदानीं दत्तावधाना वयमस्योपहारस्य रीतिं काञ्चनाधिगन्तुं न शक्नुमः। लेखदर्शनेन प्रतीयते, यदयं कविर्भाषासमे समवदधानो लेखनीं व्यापारयितुं प्रावर्त्तत। परं शक्तिवैकल्यान्मनोरथोऽयमुत्थाय हृदि लीन इव प्रलोक्यते। तत्राद्यौ श्लोकौ कथञ्चित् स्वार्थसम्पादनसमर्थावप्यन्तिमौ नितरां कवेर्विवेचकत्ववैधुर्य्यं विदधानौ अवबुध्येते। तत्रान्तिमयोरयमाद्यः—

सुदरिद्रछात्रगणे तव पूजा करे
विरहित-भक्तिशक्ति-विभवविस्तरे।
भक्तिदानकरि देवि निजदत्तभक्ति-
ग्रहकरि वितर हे विद्यार्जनशक्तीः॥ इति।

अत्र तावत् वङ्गभाषानुरोधात् छनां छकारानावृत्तिं संस्कृतनियम-परम्परा नैव सहते इति ज्ञातुमुचितमासीत् कविवृषस्य। 'दत्तभक्ति-ग्रहकारि' इत्यादौ चालङ्कारसरसि निमज्जतः कवेः कथञ्चिदवलम्बितं भाषासाम्य-तृणं "विद्यार्जनशक्तौ." समेत्य त्रुटितं सत् कवयितारं निरा-लम्बमिव व्यधात्। 'मकरगतभास्करे विंशदिने सोमवारे छात्रैः सरस्वतीपूजा कार्य्य'त्यादिकन्तु नोदाहार्य्यमेव।

इदानीम् आइ छाइ दिनाजपुरान्तर्गत कृष्णचन्द्रचतुष्पाठ्याः पत्र-मुपान्त्यत्वेन परिगृह्यते। कविरयं परिचितेन पथा गतोऽप्यनवधान-तया यशो नैव लब्धवान्। जाने दत्तावधानेन तेनेतः परं लिखिष्यन् ख्यातिविशेषः समुपार्जयिष्यत इति। अस्य हि श्लोकस्य सर्व्वावयवा नोपादीयन्ते, परं यत्र दोषस्तत्तत् स्थानमेवोद्धृत्य प्रदर्श्यते। तत्राद्य-श्लोकस्य तृतीयचरणे—"अभिमतफलदात्रीं सुरवृन्दैश्च वन्द्याम्" इत्यादौ 'सुर' इत्यत्रापेक्षिता दीर्घता शीघ्रकारितया नैव स्थानमलभतेति छन्दो-दोषः प्रथमः। द्वितीयोऽपि छन्दोदोषः तृतीयश्लोकस्य तृतीयचरणे "फलजलनतिगीतैर्मातरमर्च्चयामः" इत्यादौ 'मातर'शब्दान्ते मालिनी-नियमानुगत्या प्रशक्तमपि दीर्घत्वं कवेरशक्त्या क्षतोभूतमिति।

अन्ते च कलिकाता बाग्‌बाजारान्तर्गत-'संस्कृतचतुष्पाठी श्री ज्योतिर्गणनाकार्य्यालय'स्य पत्रमद्यिमचर्चीकरिष्यामः। अस्य वैशिष्ट्य-मादाविदं दृश्यते यत्, सर्व्वत्र छात्रानेवाह्वानकारिणः परिलोकयामः, अत्र तु सच्छात्राध्यापक एव निमन्त्रयितेति। आद्यश्लोकस्त्वविशेषा-लालोचनामर्हतीति द्वितीयोऽस्माकमालोच्यः। स च—

अनन्तपक्षप्रमिति मृगाङ्के भानोर्हि माघ सह सारदोत्सवः।

छात्रैश्चतुष्पाठीगृहे शुभागमं याचे सतां वः सह बान्धवानाम् ॥ इति

अत्र प्रमिते इति भाव्ये 'प्रमिती'ति लिपिकरप्रमादाज्जातमित्यवधार्य्यते। 'सह सारदोत्सव' इत्यत्र तु 'सह' इति किमिति नावधारयामः। अत्रा-धूनानामद्यतनी व्याख्या—"नानाविधफलमूलादिलाभात् सहसा रदो-

त्सवो दर्शनानन्दजनको व्यापार इह चतुष्पाठ्यां भावीति। दीर्घान्ता "चतुष्पाठी" च स्वल्पाचरच्छन्दस्समाप्तौ नितान्तं श्रीहीना जाते-त्यास्तां विस्तरः।

प्रियपाठकाः, यथामति प्रत्युपस्थापितास्माभिः समालोचना सत्युपहाराणां गुणगुरूणां दोषगुरूणाञ्च। निबन्धकलेवरप्रवृद्धिभिया च मध्यमा नैव गृहीताः, तत्र च समासेनैतद् वक्तव्यं, यदेते साधारण-लेखा इव नैकान्ततो दूष्याः प्रशस्या वेति। एवञ्चात्र यथावसरमेत-दपि वक्तव्यं, यदियं समालोचना छात्राणां कृते, तैरेव च कृताः श्लोका इति निश्चित्यास्माभिरनुष्ठिता। उद्देश्यञ्च—यदिमां समालोचनां दृष्ट्वा तेषामुद्यमो वृद्धिं यायादिति। किन्तु समालोचितनिबन्धानां कर्तृषु यद्यध्यापकः कश्चित् स्यात्, स च यद्यस्माभिर्निन्दितः स्यात्, तदा तेभ्यो वयं क्षमां भिक्षामहे। परं नेयं लोकनिन्दा रचनानिन्दैवेर्यामति च न प्रमत्तव्यं तैरिति। अद्यत्वे बहुत्रैव दृश्यते यदिमे, उपहारा अध्या-पकैरेव लिख्यन्ते, वयन्तु तादृशसमयमसहमानास्ताननुनयामः, यदितः-परं तैरध्यापकवर्य्यैश्छात्रेष्वेवायं भारो न्यसनीयः, अन्यथा तेषामेतद्-विषयिणी समुन्नतिरधःपतिष्यतीति यत्किञ्चिदद्य।

---

## वाणीवन्दना

[ निबन्धकः—श्रीहिमांशुप्रसाद-भट्टाचार्य्यः बि, ए ]

विकच-विमल- सितशतदल-
पीठ-रचितवासे।
जय जय सति! वाणि! जगति
शशधरकरहासे॥

भ्रान्तिभवन- मोहगहन-

मन्धतमस-जालम् ।

छिन्धि सुतनु भासय ननु

मानसमनुकालम् ॥

करुणालव- मनिशं तव

वाञ्छितमतिमात्रम् ।

सदयं कुरु सुखदं पुरु-

पुण्यपरमपात्रम् ॥

विघ्नविसर- मयि संहर

सत्वरमतिवामम् ।

साधय ननु भूतिमतनु-

माशिषमथ कामम् ॥

मोहविहत- धिक्कृत-सुत-

सञ्चय इह नित्यम् ।

तव शुभकर- मपभयवर-

मिच्छति परवित्तम् ॥

देवि वससि भक्तमनसि

भक्तिकुसुमजुष्टा ।

एहि भवति देहि सुमति-

मर्चनविधितुष्टा ॥

---

# संस्कृतभाषा च संगीतं च *

[ निबन्धकः—भट्ट-श्रीमथुरानाथसाहित्याचार्यः ]

अस्माकमस्मिन् संस्कृतवाङ्मये कानि कानि रत्नानि प्रसूतानीति संस्कृतसरस्वतीमनुरागतो निषेवमाणानां सहृदयानां समक्षे विस्तरतो ह्यनुपपादनीयमेव। अनयैव भारत्या आध्यात्मिकगौरवं प्रसारयन्त्य उपनिषदो जनिता', यासां महत्त्वं पाश्चात्यविद्वांसोऽपि शतमुखं प्रशंसन्ति। यानि दर्शनशास्त्राण्यस्माकमुन्नतेः परां काष्ठां प्रमाणयन्ति, तान्यपि सेयमस्माकं संस्कृतैव वाणी जनयामास। सर्वतः प्रथमं गगनमण्डलस्य वृत्तान्तोऽनयैव भाषया प्रकाशितः। यां खगोलविद्यामवलम्ब्य पाश्चात्यैः साम्प्रतमतिशयितोन्नतिः कृता, सा विद्या संस्कृतभाषयैव सूचिता संसारस्याग्रे। यत् 'क्रान्तिमण्डलं' संस्कृतभाषाऽभिज्ञैः प्राक्तनज्यौतिषिकैरन्विष्टं तत् खलु समग्रोऽपि सभ्यसंसारः सम्मानयति। अङ्कगणितं यद्धि संसारे भारतवर्षस्य गौरवं सुस्पष्टं घोषयति, तदपि संस्कृतभाषायामेव सर्वतः प्रथममाविरासीत्। किं बहुना विस्तरेण, रेखागणितम्, आयुर्वेदः, नीतिशास्त्रम्, एवंप्रभृतीनि बहूनि रत्नानि संस्कृतरत्नाकरात् समुत्थितानि, येषां प्रभया समग्रमपि भूमण्डलमालोकपूर्णमवलोक्यते।

एवंविधेष्वेव रत्नेषु प्रधानभूतमेकतमं सङ्गीतशास्त्रमप्यस्ति, यद्धि सर्वतः प्रथमं संस्कृतभाषायामेव जन्म लेभे। यो हि वेद-भगवान् भावुकैरनादिः प्रख्यायते, स हि 'साम'-रूपेण सुपरिष्कृतकण्ठैर्महर्षिभिर्गीयते स्म। षड्ज-ऋषभ-गान्धारादि-सप्तस्वराणां नामान्येव सङ्गीतेन साकं संस्कृतस्य अपरिहार्यं सम्बन्धमुद्घोषयन्ति। प्राक्तना महर्षयः सङ्गीतद्वारा मुक्तेरप्यधिकारिणो बभूवुः। संस्कृतसङ्गीतशास्त्रे हनुम-

* गोस्वामि हरिकृष्णशास्त्रिणः कृपया प्राप्तोऽयं निबन्धः।

नारदभरतप्रभृतीन' बहूनि मतानि सङ्गीते नानाविधां पद्धतिं प्रचारयामासुः। एतेन स्पष्टं सिध्यति यत्संस्कृतविदुषां समाजे पूर्वं सुमहती समभूत्सङ्गीतस्य मीमांसा। नियत-वर्ण मात्रा-बद्धानि नानाविधच्छन्दांस्येव संस्कृतभाषायाः सङ्गीतस्य सुस्पष्टं प्रमाणानि। वाल्मीकिरामायणं कुशलवाभ्यां गीयते स्मेति को वा न जानाति। गायकानां 'कुशीलवे'ति नामैव तत एवाभूदित्यपि केचन वदन्ति।

एवं संस्कृतभाषा सङ्गीतशास्त्रस्य सर्वतः प्रथमं जन्मदात्रीति सुस्फुटं सिध्यति। परं मध्ययुगे वादमात्रमण्डितानां शुष्कपण्डितानां कृपावशात् सङ्गीतशास्त्रमिदं संस्कृतविदुषां हस्तात् प्रच्युतप्रायमभवत्। यानि ध्रुवापदानि संस्कृतपण्डितैः प्रचारितानि, तानि किल बैजूबविरहरिदास-सूरदास-कृष्णदास-प्रभृतीनां समये बहुतरामुन्नतिमलभन्त। यस्मिन् समये संस्कृतपण्डिताः 'अवच्छेदकावच्छिन्न'तया आच्छन्नाः एकैकशास्त्रमात्रे जन्म व्यतिगमय्य वादप्रथायाः सूत्रपातं कुर्वन्ति स्म, तस्मिन् समये व्रजभाषाकोविदैः सङ्गीताय सादरं निजसाहित्ये स्थानमदीयत।

एतस्मात्कालादनन्तरं मोगलसम्राजां समये सङ्गीतसागरस्य गर्भे शृङ्गारमयी नवीना लहरिः प्राचरत्। 'ठुमरी' 'टप्पा'दीनां सङ्गीते समादरः समभवत्। तस्मिन् समये ये केचन संस्कृतानुरागिणः सङ्गीतमशीलयन् तेऽपि हिन्दीगीतिभिरेव निजमनोविनोदमकुर्वन्। सङ्गीतग्रन्थास्तु गीतगोविन्दप्रभृतयो विरलतमा एवाऽऽसन्। यद्यपि सङ्गीतस्य शास्त्रीयान् नियमान् प्रकाशयन्तः सङ्गीतस्य व्याकरणग्रन्थाः 'सङ्गीतरत्नाकर' 'सङ्गीतदामोदर'प्रभृतयो बहवो व्यलिख्यन्त पण्डितैः, परं तदुदाहरणभूतानां नानाविधानां मनोरञ्जकगीतीनां संघटना तु न प्रायशः कृता ग्रन्थेषु। न किल सङ्गीतस्य नियमान् कश्चिद् गायति, अपि तु नानाविधरागेषु संदृब्धा गीतीरेव। अत एव गीतीनां भूरिशोऽनुपलब्धत्वात्संस्कृतगानचर्चा विरलप्राया भवितुमारेभे।

वर्तमानसमयस्तु सङ्गीतशास्त्रानुसारिणीनां रागानुगानां प्राक्तन-गीतीनां विषये प्रतिकूल इव। सङ्गीतव्यवसायिनोऽन्यांश्च कांश्चि-द्विहाय साधारणजनतायां सङ्गीतलहरिरवान्याहशी। नाटकीय-ध्वनिभिर्गजलैश्च सर्वे सन्तुष्यन्ति। 'गजल' गीतयो हि हिन्दी-भाषोपभेदभूतायाम् उर्दूभाषायामेवाधिकं परिगृह्यीताः। किन्त्वा-श्चर्यं भवेद् यद्, ये किल देशा उर्दूचक्रतः अतिदूरवर्त्तिनस्तत्रापि गजलगीतीनां सुमहान् प्रचारः। दृश्यतां गुर्जरदेश एव। एतस्मिन् हि सर्वत्र गुर्जरभाषैव सानुरागं परिगृह्यीता। नासौ भाषा मन्दप्राया, प्रत्युत समयानुसारमेतद्देशभवैर्विद्वद्भिरियं भाषा सुभृशमुन्नतिं नीता, नीयते च। अस्याः साहित्यमपि शनैः शनैरुन्नमति। एवं जातीय-गौरवं वर्द्धयन्त्यामप्यस्यां भाषायां गजलादिगीतीनान्तु प्रचारो भूया-नेव। नाटकेषु सहृदयसमाजेषु समितिभिर्दीयमानेष्वभिनन्दन-पत्रेषु उत्सवानां निमन्त्रणपत्रेषु च प्रायो गजलच्छन्दसो महान् प्रभावः। कुतो वा न स्यात्, समय एव सर्वस्य कृते उत्थानपतनयोः प्रवर्त्तकः। लोकानामेवंविधं प्रवाहमवलोक्य हिन्दीसंगीतसाहित्यसर्जकैरपि तादृशी गीतिपद्धतिरवलम्बिता। हिन्दीगीतिसाहित्ये समन्तत-स्तादृशान्येव गीतिसङ्घटनान्यवलोक्यन्ते। उचितमेवैतत्। भाषा हि समयमनुसृत्य लोकानां मनोरञ्जनसाधनानि सङ्घटयति।

किञ्च, उर्दूभाषागुम्फे सोऽयं गुणः प्रायोऽवलोक्यते समालोचकै-र्यदस्मिन् भावास्तु प्रायः प्राचीना एव, परं भाषाशैलीनाम् ( महाविरे ) यथावन्निर्वाहेण तन्निबन्धेषु भाषागतं किञ्चिल्लालित्यं स्वत एवोदेतीति। अपि च विप्रलम्भशृङ्गारस्य वर्णनमप्यत्र लोकानामाकर्षकम्, यद्यपि तत् औचित्यसीमानं क्वचिदतिक्रामति। एवंविधैरेव कारणैस्तां शैलीमनुहरन्त्यो गजलगीतयो रसिकानां कण्ठहाराः संवृत्ताः। परं संस्कृतज्ञाः सङ्गीतप्रणयिनोऽस्मिन् क्षेत्रे पश्चात्पदाः सन्ति छिद्रा-न्वेषिभिः संस्कृतभाषाया अपाटवं प्रख्यापयितुमेकमिदमपि कारण-

मुपलब्धं, यदियं भाषा लोकानां मनोरञ्जिका: सामयिकगीतीर्ग्रथयितु-मननुकूला। या हि 'जीविता' भाषा भवति, सा हि लोकानां रुचि-मनुसृत्य नवनवानि जनमनोरञ्जनसाधनानि उत्पादयति।

एतमभावमंशतो निरसितुम्, सर्वेष्वपि विषयेषु संस्कृतभाषाया अक्षुषं पाटवं सूचयितुञ्च एतासां पङ्क्तीनां लेखकेन नानाविधानां संस्कृतगीतीनां ग्रथनमकारि। सहृदयानां सेवकेनानेन 'कविता-निकुञ्ज' इति विस्तृतग्रन्थस्य 'साहित्यवैभवम्' 'जयपुरवैभव'मिति खण्डद्वयमाविष्कृतम्। अनयोर्मध्ये 'साहित्यवैभवम्' संस्कृतमुद्रणाय सुप्रसिद्धे बम्बईस्थ 'निर्णयसागर' मुद्रायन्त्रालये मुद्राप्य अनुपदमेव प्रकाशयिष्यमाणम्। अस्यैव एकदेशः 'गीतिवीथिः'। अस्यां हि सर्व-विधानां संस्कृतगीतीनां सङ्घटनमवलोक्येत। तत्रापि भूरिशो गजल-गीतयः सन्ति। एतस्य 'कवितानिकुञ्जस्य' विषये महामहोपाध्यायैः डा. गङ्गानाथझा महोदयैः हिन्दुविश्वविद्यालयस्य प्रिन्सिपल-ध्रुवमहा-भागैः डा. उलनरप्रभृतिभिश्च विश्वविख्यातैर्विद्वद्भिरात्मनः सम्मतिः प्रकाशिताऽस्ति। अस्मिन् ग्रन्थे संस्कृतभाषायां या नवीनता एतावत्-कालपर्यन्तं नावलोकिताभूत् सैव दृश्येत सहृदयैः। आरम्भादन्त-पर्यन्तं दोहा-चौपाई कवित्त सवैयादीनि नानाविधानि छन्दांसि, ऋतुवर्णनस्य नवीना सामग्री, 'बारहमासी' प्रभृतयो नवीनप्रकाराः, इंग्लिश-पर्शियन-हिन्दी-संस्कृतादिबहुभाषामिश्रपद्यानि, एकमेव पद्यं हिन्दी-संस्कृतभाषागतं भवतीति चित्रम्, खड्गबन्ध-पद्मबन्धाद्यति-रिक्तानि 'मोटर'शकटिकाबन्धप्रभृतीनि चित्रकाव्यानि, हिन्दीमहाकवे-र्विहारिणो दोहाच्छन्दसां समवृत्तमयी सूक्तिः, रेडियो-वायुयान-मोटर-प्रभृतीनां स्वरूपवर्णनम् एवमादीनि नवीन-नवीनानि मनोरञ्जनसाध-नानि राशीकृतानि सन्ति।

तत एवोद्धृत्य द्वित्रा गीतयः पाठकानां मनोविनोदार्थमधस्ताद् दीयन्ते—

ठुमरी—

कुञ्जे कुञ्जे मां विहारी सखि रुन्धे मनोहारी ॥ १

अपथशतैरपि मुञ्चति नायम्, यमुनातटमनु चञ्चति सायम्,

कपटवचनविश्वासवशादयमनुनयते नुतिकारी ॥ २

उचितमये कलये कमुपायम्, कस्य वचनमनुगच्छति वायम्,

मञ्जुनाथ बत दुर्ललितोऽयं न विनयते गिरिधारी ॥ ३

गजल—

भगवन् दयादृगेषा मयि दीयतां दयालो ।

अधुनाऽवहेलना मे न विधीयतां दयालो ॥ १

करितो न पीनकायो गिरितो गुरुर्न चाहम् ।

दुरितोपरोधतो मे न निलीयतां दयालो ॥ २

अहमस्मि सार्वभौमो निखिलाऽघकारकाणाम् ।

भवताऽद्य भूरि भूमन्नवधीयतां दयालो ॥ ३

विषयाटवीषु बाढं भ्रमितोऽतिदुःखितोऽहम् ।

अयि नाथ वेदना मे व्यपनीयतां दयालो ॥ ४

भ्रमता भृशं भवेऽस्मिन्नयि नाथ ! वीक्षितोऽसि ।

अधुना तु मे समीपान्न निलीयतां दयालो ॥ ५

निगमैस्तवाऽवबोधं कियदङ्ग गीयते स्म ।

अयि मञ्जुनाथ वाचा कति गीयतां दयालो ॥ ६

गजल कव्वाली—

नवीना वेदना काचिद्वियोगे हन्त जातेयम् ।

अलं मे वैद्य ! विश्वासैरिहायासो वृथा तेऽयम् ॥ १

मुहुर्मे मानसे सोऽयं समिन्धे पावको बाढम् ।

हिमानीवारिधाराभिः क्षणं ज्वाला न यातेयम् ॥ २

---

१ 'मानों मानों मा विहारी तारे पांय परहारो' इति हिन्दीठुमरीवत् ।

सखे संलापसौख्यं मे विहिंसोर्मा निशा याता ।
न जाने कुत्र संयाता पुनः पान्थः प्रभातेऽयम् ॥ ३
न कम्पं यामि नो दूये न रुणधे, हन्यमानोऽहम् ।
परं निस्त्रिंश ! निस्त्रिंशस्य नो धारा निशातेयम् ॥ ४
प्रतप्यन्ते प्रकम्पन्तेऽथ केचिद्दुर्मनायन्ते ।
गता ते चञ्चलापाङ्गे ! यतो दृष्टिर्निशातेयम् ॥ ५
सखे मे पृच्छ मा तापं दुरापं मामिकं मन्ये ।
पिशङ्गा श्वासधूमैर्मे ऋता रथ्याऽवदातेयम् ॥ ६
वचोभिर्मेऽञ्जनाथाऽलम् मनुष्या मूर्तयो जाताः ।
प्रभावो मानसादस्मान्न निर्याता सदा तेऽयम् ॥ ७

---

## भिक्षान्देहि

[ निबन्धकः—विष्णुभिकाजी कोलते ]

त्वदीयकरपङ्कजस्थवरवल्लकीनिक्कणो-
ल्लसद्धृदयमागतं किमपि याचितुं चत्वरे ।
त्वमेव ननु माममन्दमधुरामृतस्राविणा
तडित्तरलवीक्षणेन जननि ! प्रबुद्धं कुरु ॥१
तवामलिनमानसे विकचकाव्यपद्माश्रिनः
कवीन्द्रकलहंसकाः प्रविलसन्ति नित्यं सुखम् ।
न तव किमपि श्यलं कथमपि प्रियं मे कुरु
निवर्तयितुमम्ब नार्हसि गृहागतं याचकम् ॥२
यदा श्रुतमिहास्ति मत्सदृशपापिनो दुर्मते-
स्त्वमेव शरणं सदारुणितलोचने शारदे ।

तदाऽयमभवज्जनस्तव पदाम्बुजस्थः स्वयं
मरन्दमधुरस्वनाविरतमञ्जुगुञ्जन्नलिः ॥३

अयि ! त्वमसि चन्द्रिकाऽमलमनाश्चकोरोऽस्त्ययं
तृषाकुलितचातकस्त्वमसि मुग्धकादम्बिनी।
किमत्र नवरूपकैर्हृदयमेव मे त्वत्करे
जगत्त्रितयशङ्करे त्वरितमद्य मामुद्धर ॥४

---

# श्रीकृष्णचैतन्यचरितम्

( पूर्वतोऽनुवृत्तम् )

## श्रीनीलाचल-लीला।

[ निबन्धकः—भक्तिसागरः श्रीकालीहरदासवसुः विद्याविनोदः ]

"तं वन्दे गौरजलदं स्वस्य यो दर्शनामृतैः।
विच्छेदावग्रहम्लान-भक्तशस्यान्यजीवयत् ॥"

भुवनमङ्गलेन हरेर्नाम्ना दिङ्मण्डलं मुखरीकृत्य सर्व्वत्र नाममाध्वीकमववर्धन् विधृतानन्दभरश्चित्तचौरः श्रीगौरहरिर्नृत्यन् पथि जनानान्दयन् नेत्राम्बुना भूमिं प्लावयन् पाषाणं द्रावयन् अम्बुलिङ्गस्थानं छत्रभोगं प्राप्तवान्। डायमण्डहार्ब्बारस्य समीपस्थे छत्रभोगे गङ्गा शतमुखी प्रवहति। पुरात्र गङ्गां दृष्ट्वा अनुरागविह्वलः शिवस्तस्याः स्रोतसि सहसा झम्पमिति रवेण पतित्वा तत्र निमज्ज्य अम्बुमयोऽभवत्। तस्मात् शिवस्तत्र अम्बुलिङ्ग इत्यभिधीयते।

परेद्युः प्रभुः पुनश्चादन् उच्चैर्गर्ज्जन् हुङ्कारं कुर्व्वन् हरिरिति, हरिरिति" सघनं ध्वनन् नगरात् परं नगरमतिक्रम्य जलेश्वरमवाप। जलेश्वरे जलेश्वराभिख्यं शिवलिङ्गं विराजते, लोकैः सम्पूज्यते च। तस्य नामत एष ग्रामो जलेश्वर उच्यते। शङ्करस्य मन्दिर-

द्वारि उत्सवादिदर्शनोत्सुकः प्रभुः प्रेम्णा भृशं ननर्त्त। तस्य हुङ्कार-नादं श्रुत्वा नृत्यभङ्गीञ्च ईक्षित्वा नेत्रधारयोः स्नात्वा सर्व्वेऽमुह्यन्। अनन्तरं सभक्तः प्रभुः हर्षयन् सर्व्वान् स्निह्यन् कांश्चित् श्लिष्यन् कांश्चि-दानन्दरसे मज्जयन् रेमुणाभिमुखं चलितः। रेमुणायां क्षीरचौर-गोपीनाथविग्रहो विद्यते।

अत्र श्रीमाधवेन्द्रपुरीपादस्य मनोवाञ्छापूरणार्थं स्वयं श्रीगोपीनाथः क्षीरप्रसादमेकं निजपीतधट्या अञ्चलाधः सुगुप्तं रक्षित्वा पूजकं प्रति स्वप्नादेशं चकार। प्रत्यादेशं लब्ध्वा निद्रोत्थितः स त्वरया क्षीरभाण्डं गृहीत्वा ससम्भ्रमं श्रीमाधवेन्द्रमन्विष्य तत्तस्मै ददौ। श्रीमाधवेन्द्रः अमृतकेलिर्नाम क्षीरप्रसादमास्वाद्य स्वसौभाग्यं विभाव्य श्रीगोपीनाथस्य कृपाप्राचुर्य्यमुपलभ्य च विपुलप्रेमविगलित-नयनाश्रु-धारया स्ववक्षोऽसिञ्चत्। अस्मात् श्रीगोपीनाथः क्षीरचोर इति नामाऽभूत्। प्रभुः श्रीविश्वम्भरस्तन्मन्दिरं प्राप्य श्रीनित्या-नन्दमेतामपूर्व्वाम् अमृतमयीं माधवेन्द्रपुरीकथां श्रावयामास। एष श्रीमाधवेन्द्रः पृथिव्यां भक्तिकल्पवृक्षस्य बीजस्तच्छिष्यः श्रीईश्वरपुरी तस्य परमपादपस्य अङ्कुरस्तच्छिष्यः श्रीगौरभगवान् श्रीकृष्णचैतन्यस्तस्य कल्पतरोः स्कन्धः।

श्रीयुतमाधवेन्द्रपुरीपादचरितसुधालहरीमास्वाद्य आस्वादयंश्च श्रीमन्नित्यानन्दं प्रेमाश्रुगद्गदाकुलकण्ठः परमानन्दं श्रीमाधवेन्द्र-विरचितं श्लोकमेकमपठत्—

'अयि! दीनदयार्द्र! नाथ हे! मथुरानाथ! कदावलोक्यसे।
हृदयं त्वदवलोककातरं दयित! भ्राम्यति किं करोम्यहम्॥'

एवं पठन् प्रभुर्भूमौ मूर्च्छितः पपात। श्रीकृष्णदासकविराज एतच्छ्लोकस्य महिमानं वर्णयति, यथा—अयं श्लोकचन्द्रो जगदालोक-यति। घर्षणेन यथा चन्दनस्य गन्धो वर्द्धते, तथा अस्य विचारफलम्। रत्नानां मध्ये कौस्तुभं यथा, रसकाव्यानामेष तथा गण्यते।

अनन्तरं रेमुणां परित्यज्य प्रभुः कटकान्तिकस्थं याजपुरग्राम-मगच्छत्। तत्र वैतरण्यामवगाह्य तां पतितपावनीमकरोत्। सगणः प्रभुर्दिवसमात्रं याजपुरे सलीलं भ्रमन् महानदीतीरस्थं कटकमगासीत्। तत्र महानद्यामवगाह्य श्रीमन्महाप्रभुस्तत्रत्यं देवमन्दिरं गत्वा कान्तं साक्षिगोपालं ददर्श, प्रेमाविष्टस्तं तुष्टाव च। श्रीचैतन्यदेवस्यानन्दं वर्द्धयितुमुत्सुकः श्रीनित्यानन्दः पूर्वाभिज्ञतया तस्य साक्षिगोपालस्य विस्मापिकां लीलां वक्ष्यमाणरूपां वर्णयति स्म।

"गोदावरीतीरे विद्यानगरं नाम नगरमासीत्। तत्र पुरा द्वौ ब्राह्मणौ वसतः स्म। तयोरेकतरो युवकोऽपरो वृद्धः। मिलितौ तौ बहुतीर्थानि पर्य्यट्य श्रीवृन्दावनं ययौ। तत्र गोविन्दकुण्डे स्नात्वा पवित्रीभूय श्रीगोपालदर्शनमकुरुताम्। श्रीगोपालस्य सौन्दर्य्येण विमुग्धौ तौ कियतो दिवसान् तन्मन्दिरान्तिकेऽवसताम्। युवकविप्र-कृतयातिसेवया परितुष्टो वृद्धविप्रस्तस्मै निवारितोऽपि स्वकन्यां सम्प्रदातुं प्रतिजानीते स्म।

अथ तौ स्वं स्वं भवनमागत्य सुखमासाताम्। कियद्दिनेषु गतेषु लघुविप्रो गुरुविप्रवाक्यं क्वचिदसत्यं भवेदिति विचिन्त्य दुःखितः सन् तमुपेत्य तत्कृतां प्रतिश्रुतिं स्मारयति स्म। गुरुविप्रः स्त्रीपुत्त्रेभ्यो भीतः कथमपि सर्वान् स्वजनान् पृष्ट्वा प्रतिकूलमुत्तरं प्राप। एष युवको-ऽकुलीनो मूर्खोऽस्माकं कन्याया अयोग्यपात्रमिति युक्तिबलेन नैयायिकः पुत्त्रो घोरस्वभावः पितरं मिथ्या वक्तुमचालयत्, लघुविप्रञ्च क्षिप्रं यष्ट्या प्रहर्त्तुमधावत्। पिता पुत्त्राद्भीतः कन्यादानवाक्यं प्रदत्त-मिति न स्वीचकार, किन्तु मनसि तत्कृतसेवोपकारं स्मृत्वा तम-मानयत्, गोपालचरणयोः सत्यधर्म्मरक्षार्थमात्मसमर्पणञ्च कृतवान्। दण्डभयेन लघुविप्रः प्रथमतः पलायाञ्चक्रे। अन्येद्युः स ग्रामस्य शिष्टजनानाहूय तेभ्य आदितः सकलवृत्तान्तं निवेद्याभिदधौ— "अत्र विषये स्वयं श्रीगोपालः साक्षी वर्त्तते। तमानीयावे-

तत् प्रमाणयिष्यामीति।" तच्छ्रुत्वा कोऽपि विश्वसिति स्म कोऽपि न

अनन्तरं लघुविप्रस्य प्रस्तावतः सभाया अग्रतो वृद्धब्राह्मणेन सपुत्त्रकेण लेखमुखेन वाक्यमदायि—"यदि गोपालेन लघुविप्रवाक्यस्य सत्यतां प्रमाणिता स्यात्तर्हि आवयोरन्यथा कर्त्तुं का शक्तिः?" स्वभक्तिप्रभावेण साधुभावेन च लघुविप्रः सर्व्वदुःखं निवेद्य श्रीवृन्दावनात् श्रीगोपालं विद्यानगरमानिनाय। परमकृपालुर्भक्ताधीनो गोपालस्तमनुसरन् प्रतिपदं मञ्जीरद्वयं वादयन् हसन्नुपागतः। वार्त्तां श्रुत्वा विस्मिताः सर्व्वे चतुर्दिशो धावन्तो गोपालं परिवव्रुः। विग्रहश्चलतीति विस्मयमापन्नाः सर्व्वे आनन्दाश्रुविह्वलाः पौनःपुन्येन भूम्यां लुण्ठिता अनमन्। गोपालः साक्ष्यं ददौ। लघुविप्रो वृद्धस्य कन्यामुपयेमे। अथ भक्त्या विह्वलेन तेन ब्राह्मणद्वयेन परमकृपालोः श्रीगोपालस्य नित्यसेवा निरूपिताभूत्। राजा प्रजाश्च सर्व्वे जना आगत्य दर्शनेन प्रेमाप्लुताः सेवासाहायकमकुर्व्वन्। श्रीनित्यानन्ददेवमुखात् श्रीगोपालस्यात्यद्भुतां लीलावार्त्तामाकर्ण्य सगणः श्रीप्रभुरानन्दभरेण विवशोऽभूत्। कियति काले गच्छति चैतस्य राज्ञा पुरुषोत्तमेन श्रीगोपालैः कटके आनीय प्रतिष्ठापितः।"

अथ प्रभुः सगणो भुवनेश्वरं समागतवान्। अत्र शूलपाणेर्विग्रहो विद्यते। भुवनेश्वरस्य गुप्तकाशीत्यभिधानमपि श्रूयते। श्रीगौराङ्गसुन्दरो विन्दुसरोवरेऽस्नात्। सर्व्वतीर्थस्य विन्दुशो जलमेकीकृत्य कोऽप्येनं निर्ममौ। "हरहर वोम् वोम्" इति ध्वनिना मुखरितं दीपैरालोकितं धूपैः सुवासितं मन्दिरं सर्व्वेभ्य आनन्दं ददौ। श्रीगौरः स्वगणैः साकं शिवस्य पुरतो नृत्यभङ्ग्या संकीर्त्तनं चकार, स्थावरजङ्गमानां प्राणेषु मन्दिरशोभां स्फुटं चित्रयामास च।

पुरा शिववरेण बलदृप्तः काशीराजः कृष्णेनायुध्यत। शङ्करोऽपि

स्वयं युद्धचेत्रे तस्य सहायोऽभूत्। कृष्णो यथावकाशं सुदर्शनं निक्षिप्य काशीराजस्य शिरश्चिच्छेद। तद्दृष्ट्वा शिवो योद्धुमग्रसरोऽभूत्। सुदर्शनप्रभावाद्भीतः स सर्व्वत्र बभ्राम। विपदं विचिन्त्य कृष्णस्य शरणापन्नः शान्तिं प्राप च। तदा कृष्णस्तस्मै वरं ददौ— "एकाम्रवणं गच्छतु भवान्, स्वपार्षदैस्तत्र वसतु। तत्र भवान् नाम्ना भुवनेश्वरः कोटिलिङ्गेश्वरो भविष्यति। अहमपीतः प्रस्थाय सिन्धुतीरस्थं नीलाचलमधिवत्स्यामि। यत्र निद्रया समाधिफलं, शयनेन प्रणामफलं, भ्रमणेन प्रदक्षिणफलं च लभते, तस्मात् क्षेत्रादुत्तरतो भवतः स्थानं निरूप्यते।" भुवनेश्वरस्यैषा वार्त्ता शास्त्रकथिता। पुरात्र गङ्गावंशीयानां राजधान्यासीत्।

अथ प्रभुः शिवं पूजयित्वा भुवनेश्वरस्य सर्व्वमन्दिराण्यपश्यत्। अनन्तरं कमलपुरमागत्य भार्गीनद्यां सस्नौ। अस्मात् श्रीजगन्नाथमन्दिरस्य ध्वजं दृश्यते। तद् दृष्ट्वा प्रभुः प्रेमोन्मत्त ऊर्द्ध्वबाहुर्ननर्त्त। श्रीनित्यानन्दः कमलपुरे श्रीचैतन्यदेवस्य दण्डं बभञ्ज एवमस्य खण्डानि भार्गीसलिले निचिक्षेप।

प्रभुः श्रीमन्दिरचूड़ां यदावलोकयति तदा स दर्शनीयं यत्तद्दृष्ट्वा एवं वदति—

> प्रासादाग्रे निवसति पुरः स्मेरवक्त्रारविन्दो
> मामालोक्य स्मितसुवदनो बालगोपालमूर्त्तिः ॥

तामवलोक्य मन्दिराभिमुखो भूत्वा प्रभुः प्रेमोत्थहुङ्कारेण जगर्ज्ज, उद्दण्डं ननर्त्त पुनः पुनर्दण्डवन्नत्वा चावशेषे भूमौ पतित्वा निस्पन्दो मूर्च्छितश्चाभवत्। पुनः स्वयमेव उत्थायोन्मत्तवत् धावित्वा "आठारनाला" इति स्थानं प्राप। तदवाप्य प्रभुभावं संहृत्य उपविवेश। गणश्च तं वेष्टयित्वा तथाकरोत्।

तदानीन्तन-वङ्गाधिपेन हुशेनसाहेन सह ओड्रा-(उड़िष्या)-धिपतेर्गङ्गावंशीयस्य राज्ञः प्रतापरुद्रस्य तदा विग्रहादिकं तुमुलमासीत्।

मधुमतीनद्या उपरि राजा मत्स्यकेशरी "आठारनाला" इति अष्टादशसंख्यकं गोपुरं ( खिलान ) निर्ममे। नीलाचलपुरी षोड़श-हस्तोच्च प्राचीरेण वेष्टिता चोड़राजेन पुरुषोत्तमेन शत्रुभयान्निर्मिता। नाविकं निज-षड्भुजमूर्त्तिं प्रदर्श्य प्रभुः तत्साहाय्येन भार्गीं तीर्त्वा "आठारनाला" इति स्थानमागतवान्।

---

## कृष्णानुरागलहरी

[ निबन्धकः—योगीन्द्रनाथ-विद्याचुञ्चुः ]

वन्दे दुर्दमदैत्यदर्पदलनं दीनार्त्तिविद्रावणं
साराःसार रसप्रकाशरसिकं रामांशुकाकर्षकम्।
बाल्ये बल्लवबालवृन्दविहितं सख्यं वहन्तं मुदा
कंसाराति-दुरन्तदूतवनितास्रोतस्विनीशोषकम्॥ १

कदा स्वर्गाभिन्ने सकलसुखसञ्जातसुभगे
सदा वृन्दारण्ये सुरनरसमाहाररुचिरे।
यशोदायाः क्रोडे परमनिधिमालोक्य शयितं
परां प्रीतिं लप्स्ये शमनभयशङ्कां परिहरन्॥ २

कदा गोष्ठे दृष्ट्वा नयनयुगलं मामकमहो
तमीशं गोपीनां सह शिशुगणैर्धेनुनिवहैः।
चलन्तं गच्छन्तं रुचिरवनमाल्यञ्च मुरलीं
कृतार्थत्वं यायां विषमविषरूपे खलु भवे॥ ३

कदाहं पश्येयं मिहिरतनयाया उपतटं
समारूढ़ं नीपं व्रजमृगदृशां चौमपटलम्।

समाहृत्य श्रीशं कुतुकपरतया प्रेमजलधिं
सुमन्दं कुर्व्वन्तं हसितमसकृद् गुप्तवपुषम् ॥ ४
कदा कुञ्जे कुञ्जे व्रजभुवि पिकध्वानललिते
मयूरैर्नृत्यद्भिर्विततनिजपुच्छैर्यदुपतिम् ।
निरीक्ष्याव्यग्रभ्रान्त्या बहुकुलवधूभिः परिवृतं
भ्रमन्नात्मा शान्तिं झटिति समियाद् दुर्लभतमाम् ॥ ५
कदा श्रान्तं खेलच्चपलतरभङ्गालिसुलभे
विवस्वत्कन्यायाः सुललिततटे रामसहितम् ।
भ्रमन्तं पश्यन्तं दिशि दिशि वसन्तस्य सुषमां
समीक्षिष्ये कृष्णं कुरु मयि कृपां नाथ कथयन् ॥ ६
कदा श्रीधाम्नोऽहं पथि पथि रजोलुण्ठितवपु-
र्गिरा श्रीकृष्णाख्यं लघु लघु वदन् लोमहर्षितः ।
दृशा मूर्त्तिं तस्यासमशररुचिं सस्मितमुखीं
पिबंश्छान्तिं यायां विगतविषयास्वादरसनः ॥ ७
कदात्मा मे घोराद्विषयनिरयाद्दुर्लभतमं
सुखं वृन्दारण्यं व्रजति परमामेति च गतिम् ।
वृथा मायापाशैर्दृढविजडितं पापनिरतो
दशायामन्त्यायामभिलषितुकामो हरिपदम् ॥ ८

ताडतोडवलयैस्तथाङ्गदै-
र्जातरूपघटितैः समुज्ज्वलैः ।
भूषितं रुचिरपीतवाससं
बर्हचन्द्रकमनोज्ञचूडकम् ॥ ९
दिव्यवेणुमुखचुम्बनाकुलं
धारयन्तमतुलां वनस्रजम् ।
नूपुरध्वनित-पादपङ्कजं
गोपनन्दनमहं सदा भजे ॥ १०

# आर्य्ययुगे साक्ष्यपद्धतिः

[ निबन्धकः—श्रीशिवशङ्करशास्त्री ]

( १ )

'समक्षदर्शनात् साक्षी श्रवणाद्वे'ति भगवान् विष्णुः ( ८।१३ )। 'समक्षदर्शनात् साक्ष्यं श्रवणाच्चैव सिद्ध्यती'ति च मनुः ( ८।७४ )। स साक्षी द्विविधः प्रोक्तः, कृतोऽकृतश्चेति। तत्र साक्षित्वेन निरूपितः कृतोऽकृतोऽनिरूपितः। साकल्येन एकादशविधः साक्षी शास्त्रे निर्दिष्टस्तत्र पञ्चविधः कृतोऽकृतश्च षड्विध इति नारदादिस्मृतीनां मतम्। तथा च—

'एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः।
कृतः पञ्चविधो ज्ञेयः षड्विधोऽकृत उच्यते॥'

एतेषाञ्च विभागो नारदेन दर्शितो यथा—

'लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च।
गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः स्मृतः॥' इति।

लिखितादीनाञ्च स्वरूपं ज्ञायते मिताक्षराधृत-महर्षिकात्यायनवचनेन, यथा—

'अर्थिना स्वयमानीतो यो लेख्ये संनिविश्यते।
स साक्षी लिखितो नाम स्मारितः पत्रकादृते।' इति।

स्मारितः पत्रकादृते इत्यस्य विवरणं तेनैव कृतम्—

'यस्तु कार्य्यप्रसिद्ध्यर्थं दृष्ट्वा कार्य्यं पुनः पुनः।
स्मर्य्यते ह्यर्थिना साक्षी स स्मारित इहोच्यते॥' इति।

यदृच्छाभिज्ञः स यो यदृच्छयाऽऽगतः साक्षी क्रियते। अतोऽनयोः पत्रानारूढत्वेऽपि भेदस्तेनैव प्रदर्शितः—

'प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः।
द्वौ साक्षिणौ त्वलिखितौ पूर्व्वपक्षस्य साधकौ॥'

तथा— 'अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम्।
यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते॥' इति।

'साक्षिणामपि यः साक्ष्यमुपर्य्युपरि भाषते।
श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः॥' इति।

एतावत्कालं पञ्चविधकृतस्य भेदो दर्शितोऽधुना नारदविहित-षड्-विधाकृतस्य भेदः प्रदर्श्यते—

'ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम्।
कार्य्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च यः॥
कुल्याः कुलविवादेषु विज्ञेयास्तेऽपि साक्षिणः।

प्राड्विवाकग्रहणं लेखकसभ्योपलक्षणार्थम्॥'

तथा च—'लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्व्वशः।
नृपे पश्यति तत्कार्य्यं साक्षिणः समुदाहृताः॥'

( २ )

महाकुलप्रसूतास्तपस्विनः सत्यवन्तः श्रौतस्मार्त्तक्रियापरा धनान्विता धर्म्मज्ञाः पुत्रिणोऽकुटिला दानशीला अधीयानाश्चैविद्यवृद्धास्तथा यथाजाति यथावर्णं पुरुषास्त्र्यवराः साक्षिणो भवन्तीति विष्णु-याज्ञवल्क्य-वसिष्ठानां मतम्। 'त्र्यवरे'ति त्रयः अवरा न्यूना येषां ते, त्रिभ्योऽर्वाक् न भवन्ति। परन्तु यथाकामं भवन्तीति। जातयो मूर्द्धावसिक्ताद्याः अनुलोमजाः प्रतिलोमजाश्च। तत्र मूर्द्धाभिषिक्तानां मूर्द्धावसिक्ताः साक्षिणो भवन्ति। एवमम्बष्ठादिष्वपि द्रष्टव्यमिति मिताक्षराव्याख्यानम्। तत्र ब्राह्मणानां ब्राह्मणाः, क्षत्रियाणां क्षत्रिया एवोक्तलक्षणाः साक्षिणो भवन्ति। तथा 'स्त्रीणान्तु साक्षिणः स्त्रियः कुर्य्यात्, द्विजानां सदृशा द्विजाः, शूद्राणां सन्तः शूद्राश्च अन्त्यानामन्त्याः। (वसिष्ठः १६ अः) 'स्त्रीणां साक्ष्यं स्त्रियः कुर्य्युरिति मनुनोक्तं

मिताक्षरासम्मतश्च। अतो दृश्यते उपर्य्युक्तसाक्षिणोऽधिकृत्य वैमत्यं नास्तीति।

( ३ )

अथ नारदेन प्रदर्शिताः पञ्चविधा असाक्षिण उच्यन्ते साक्षिणामसम्भवे प्रतिषेधरहितानामन्येषामपि साक्षित्वप्रतिपादनार्थम्—

'असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः।
वचनाद्दोषतो भेदात् स्वयमुक्तिर्मृतान्तरः॥' इति।

अत्र के पुनर्वचनात् असाक्षिण इत्यत आह—

'श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः।
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः॥'

तापसा वानप्रस्थाः। आदिशब्देन पित्रा विवदमानादीनां ग्रहणमिति मिताक्षरा। यथाह शङ्खः—'पित्रा विवदमान गुरुकुलवासि-परिव्राजक-वानप्रस्थ-निर्ग्रन्था असाक्षिण' इति। दोषादसाक्षिणो दर्शिताः—

'स्तेनाः साहसिकाश्चण्डाः कितवा वञ्चकास्तथा।
असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते॥'

'चण्डस्त्वत्यन्तकोपनः' इत्यमरः। कितवा द्यूतकृत इति मिताक्षरा किञ्च, याज्ञवल्क्यमते—

'स्त्रीबालवृद्धकितव-मत्तोन्मत्ताभिशस्तकाः।
रङ्गावतारि-पाखण्डि-कूटकृद्विकलेन्द्रियाः॥
पतिताप्तार्थसम्बन्धि-सहायरिपुतस्कराः।
साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः॥'

वृद्धग्रहणं वचननिषिद्धानामन्येषामपि श्रोत्रियादीनामुपलक्षणार्थम्। कितवोऽक्षदेवी। उन्मत्तो ग्रहाविष्टः। अभिशस्तोऽभियुक्तो ब्रह्महत्यादिना। रङ्गावतारी चारणः। पाखण्डिनो निर्ग्रन्थप्रभृतयः। कूटकृत् कपटलेख्यकारी। पतितो ब्रह्महादिः। आप्तः सुहृत्। निर्धूतो बन्धुभिस्त्यक्तः। आद्यशब्दादन्येषामपि स्मृत्यन्तरोक्तानां

दोषादसाक्षिणां, भेदादसाक्षिणां, स्वयमुक्तेर्मृतान्तरस्य च ग्रहणम् इति मिताक्षराव्याख्यानम्।

भेदादसाक्षिणां स्वरूपं ग्रन्थेनैव दर्शितम्—

'साक्षिणां लिखितानाञ्च निर्दिष्टानाञ्च वादिनाम्।
तेषामेकोऽन्यथा वादी भेदात् सर्व्वे न साक्षिणः॥'

तथा स्वयमुक्ति-स्वरूपञ्चोक्तम्—

'स्वयमुक्तिरनिर्दिष्टः स्वयमेवेत्य यो वदेत्।
सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति'॥

मृतान्तरस्यापि लक्षणमुक्तम्—

'योऽर्थः श्रावयितव्यः सात्तस्मिन्नसति चार्थिनि।
क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः॥' इति।

येनार्थिना प्रत्यर्थिना वा साक्षिणां योऽर्थः श्रावयितव्यो भवेद् यूयमस्मार्थे साक्षिण इति तस्मिन्नर्थिनि प्रत्यर्थिनि वा असति मृतेऽर्थे चानिवेदिते, साक्षी क्व कस्मिन्नर्थे कस्य वा अर्थे साक्ष्यं वदत्विति मृतान्तरः साक्षी न भवति। यत्र तु मुमूर्षुणा स्वस्थेन वा पित्रा पुत्त्रादयः श्राविता अस्मिन्नर्थेऽमी साक्षिण इति, तत्र मृतान्तरोऽपि साक्षीति मिताक्षरामतनिष्कर्षः। एतच्च नारदस्यापि मतम्। यो नरः साक्षित्वेऽनिर्दिष्टोऽपि उपेत्य किञ्चिद् ब्रूयात् स, तथा एको नरश्च द्वावपि साक्षिणौ न भवतः। परन्तु उभयानुमतो गुणसम्पन्नश्चैको नरोऽपि साक्षी भवितुमर्हति। अपिशब्दाद्द्वावपि। यद्यपि 'श्रौतस्मार्त्तक्रियापराः' इति त्र्यवराणामपि धर्म्मवित्त्वं समानं, तथापि तेषामुभयानुमत्यभावेऽपि साक्षित्वं भवति। एकस्य द्वयोर्वोभयानुमत्यैव साक्षित्वं भवतीत्यर्थवत् त्र्यवरग्रहणमिति मिताक्षराव्याख्यानम्।

उभयोरपि वादिनोः सम्भवतस्तु साक्षिषु, पूर्व्वस्मिन् काले मया

प्रतिगृह्णीतं भुक्तञ्चेति यो वदत्यसौ पूर्व्ववादी, न पुनर्यः पूर्व्वं निवेदयति, तस्य साक्षिणः प्रष्टव्याः। तथाच भगवान् विष्णुः—'द्वयोर्विवदमानयोर्यस्य पूर्ववादस्तस्य साक्षिणः प्रष्टव्याः (८।१०) योगीश्वर-याज्ञवल्क्यानुशासनमप्येतत्संवादि, यथा—

'साक्षिषूभयतः सत्सु साक्षिणः पूर्व्ववादिनः।' (२।१७)

परन्तु यत्र पूर्व्वपक्षस्य हीनता परिलक्ष्यते, तत्र प्रतिवादिनः प्रष्टव्याः। यथा योगियाज्ञवल्क्यः—

'पूर्व्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः।

एतच्च भगवतो विष्णोरपि मतम्—'आधर्य्यं कार्य्यवशात् यत्र पूर्व्वपक्षस्य भवेत् तत्र प्रतिवादिनोऽपि।' अस्यार्थष्टीकाकृता विज्ञानेश्वरेण विशदीकृतः—'यदा त्वन्य एवं वदति सत्यमनेन पूर्व्वं प्रतिगृह्णीतमुपभुक्तञ्च किन्तु राज्ञेदमेव क्षेत्रमस्मादेव क्रयेण लब्ध्वा मह्यं दत्तमिति अनेन वा प्रतिग्रहेण लब्ध्वा मह्यं दत्तमिति, तत्र पूर्व्वपक्षोऽसाध्यतयाऽधरीभूतस्तस्मिन् पूर्व्वपक्षेऽधरीभूते उत्तरकालं प्रतिगृह्णीतमुपभुक्तञ्चेति वादिनः साक्षिणः प्रष्टव्या भवन्ति।' इति।

निर्दिष्टसाक्षी चेद् मृतो देशान्तरगतो वा भवेत्तदा ये तस्य वक्तव्यं जानन्ति त एव प्रमाणम्। साक्षिणः संख्या अनल्पाः स्युः। साक्षिणां विप्रतिपत्तौ बहूनां वचनं ग्राह्यम्। समसंख्येषु विप्रतिपत्तौ ये गुणिनस्तेषां वचनं ग्राह्यम्। यदा पुनर्गुणिनां विप्रतिपत्तिस्तदा ये गुणवत्तमाः तेषां वचनं प्रमाणम्। यत्र तु गुणिनः कतिपये अन्ये च बहवस्तत्रापि गुणिनामेव वचनं ग्राह्यम्।—

'उभयानुमतः साक्षी भवत्येकोऽपि धर्म्मवित्।' इति

गुणातिशयस्य मुख्यत्वात्। गुणवत्तमाः श्रुताध्ययनतदर्थानुष्ठानधनपुत्रादिगुणसम्पन्ना इति विज्ञानेश्वरपादाः।

साक्षिणो यस्य वादिनः प्रतिज्ञां सत्यां वदन्ति, स जयी भवति। यस्य चान्यथा वदन्ति तस्य ध्रुवः पराजयो भवति। यत्र तु प्रतिज्ञाता-

थस्य विस्मरणादिना भावाभावौ साक्षिणो न प्रतिपादयन्ति, तत्र प्रमाणान्तरेण निर्णयः कार्य्यः। न च राज्ञा साक्षिणः पुनः पुनः प्रष्टव्याः। स्वभावोक्तवचनमेव ग्रहणीयम्। सत्येन पूता भवन्ति साक्षिणः। वादिप्रतिवादीनां समक्षम् इति श्रावयितव्यम्—

'ये पातककृतां लोका महापातकिनां तथा॥
अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम्।
स तान् सर्व्वानवाप्नोति यः साक्ष्यमनृतं वदेत्॥
सुकृतं यत्त्वया किञ्चिज्जन्मान्तरशतैः कृतम्।
तत् सर्व्वं तस्य जानीहि यं पराजयसे मृषा॥'

अस्यार्थः—यो नरो मिथ्या साक्ष्यं वदति, स पातकोपपातकमहापातककारिणामग्निदानां स्त्रीबालघातिनां च ये लोकास्तान् सर्व्वानवाप्नोति। जन्मान्तरशतैर्यत् पुण्यं कृतं, तत् सर्व्वं तस्य भवति; योऽनृतवादेन पराजितो भवतीति श्रावयितव्यम्। विष्णोर्मतानुसारेण एतच्चापि श्रावयितव्यम्—

'सत्येनादित्यस्तपति सत्येन भाति चन्द्रमाः।
सत्येन वाति पवनः सत्येन भूर्द्धारयति॥

सत्येनापस्तिष्ठति। सत्येनाग्निस्तिष्ठति। स्वर्ग्ग सत्येन। सत्येन देवाः। सत्येन यज्ञाः।

अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते॥' इति।

वसिष्ठस्य तु मतेन वक्ष्यमाणमपि श्रावयितव्यम्—

ब्रूहि साक्षिन्! यथातत्त्वं लम्बन्ते पितरस्तव।
तव वाक्यमुदीर्य्यन्तमुत्पतन्ति पतन्ति च॥'

यत्र सत्यवचनेन ब्रह्मचारिणां बधः सम्भवति तत्रानृतेनापि नरो न पापी भवति। एतच्च महर्षिवसिष्ठेनापि विशदीकृतम्—

'उद्वाहकाले रतिसम्प्रयोगे प्राणात्यये सर्व्वधनापहारे ।
विप्रस्य चार्थे अनृतं वदेयुः पञ्चानृतान्याहुरपातकानि ॥

ये च जानन्तोऽपि साक्ष्ये तूष्णींभूता आसते, ते कूटसाक्षिणां सदृशैः पापैर्लिप्यन्ते, अत एव सर्वे ते कूटसाक्षिवद् दण्डनीयाः। वर्णानुक्रमतो नृपेण साक्षिणः प्रष्टव्याः। यस्य साक्षिणः सत्यां प्रतिज्ञां ब्रुवन्ति स जयी भवति। अन्यथावादिनस्तु ध्रुवः पराजय इति मया पूर्वमेवोक्तम्। आर्य्ययुगे प्रागुक्ता साक्षिणां बहुत्वग्रहणरीतिर्भगवता विष्णुनाप्यङ्गीकृता। तथा च भगवान् विष्णुः—

'बहुत्वं प्रतिगृह्णीयात् साक्षिद्वैधे नराधिपः।
समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ॥

परन्तु यस्मिन् यस्मिन् विवादे कूटसाक्षी मिथ्या वदेत् तत्तत् कार्य्यं निवर्त्तेत, कृतञ्चाकृतं भवेदिति शम्।

---

## ग्रन्थनिकषः

[ समालोचकः—श्रीसीतानाथ सिद्धान्तवागीशः ]

**न्यायदर्शनम्**—नानादर्शनदुर्गमार्गकेशरिभिस्तत्रभवद्भिर्महामहोपाध्यायैः श्रीयुक्त-फणिभूषण-तर्कवागीशमहोदयैः सम्पादितं "वङ्गीयसाहित्यपरिषदः" प्रकाशितं विस्तृतानुवाद-विवृति-टिप्पण्यादि-समेतं वात्स्यायनभाष्योपेतं "न्यायदर्शनमस्माभिरधिगतम्। सर्व्वत्र प्रसिद्धिमुपगतस्य गौतमसूत्र-न्यायदर्शनाक्षपाददर्शनापरपर्य्यायस्यास्य दर्शनस्य परिचयो दर्शनारण्यानीमटाट्यमानेन केन वा तर्करसिकेन नावेदि। तथापि ग्रन्थप्रतिपाद्यविषयमनधिगच्छता केनापि बुभुत्सुना

यदि प्रकाशितग्रन्थस्य न्यूनत्वमुपादेयत्वं वेति सम्यगवधारयितुं न शक्यते, तदर्थं दर्शनमिदं किञ्चिदालोचयामः।

सत्स्वपि नास्तिक-बौद्ध-चार्व्वाक-जैनादीनां बहुषु दर्शनशास्त्रेषु वेदमार्गाविरोधितया यथार्थतत्त्वावभासकतया दुःखनिवृत्त्युपदेशपरतया च न्याय-वैशेषिक-सांख्य-पातञ्जल-मीमांसा-वेदान्ताभिधेयानि षडेव दर्शनशास्त्राणि प्रख्यातिमुपागमन्। यैरेव निरतिशयकठोरदुर्भेद्यदर्शनदुर्गैरारचितान्यस्माकं धर्म्मशास्त्राण्यद्यापि विरुद्धवादिभिरीर्षापरवशैर्नास्तिकाचारलिङ्गैरतिक्रमितुं न शक्यन्ते।

दर्शनेऽस्मिन् मोक्षोपयोगितया प्रमाणादि षोड़शपदार्थानामुद्देशः, आत्मसाक्षात्कारः, मोक्षरूपप्रयोजनप्रतिपादनं, तत्त्वज्ञानाधीनमुक्त्युत्पत्तिक्रमः, प्रमाणचतुष्टयनिरूपणं, प्रमेयलक्षणं विभागश्च, दृष्टार्थादृष्टार्थभेदेन शब्दविभागः, सिद्धान्तविभागः, न्यायावयवविभागः, दुष्टहेतुलक्षणानि, प्रत्यक्षादीनां व्यवस्थापनं, वेदवाक्यविभागः, वेदप्रामाण्यादौ युक्तिः, शब्दानित्यत्वसाधनं, प्रमेयपरीक्षा, शरीरात्मवादादिदूषणं, शरीरस्य भौतिकत्वप्रतिपादनं, इन्द्रियाणां भौतिकत्वं नानात्वञ्च, बुद्धेरात्मधर्म्मत्वकथनं, हेत्वाभासाः। एते विषयाः प्रसङ्गादन्ये च बहवो विषयाः सप्रपञ्चं स्फुटतया प्रतिपादिताः।

अनेनैव दर्शनसुधांशुना दीप्यमाना पुण्यवती सौभाग्यवती चेयं भारतभूमिरद्यापि विविध-विज्ञान-नक्षत्रमालालोकितेषु पाश्चात्यदेशेष्वपि प्रचख्ये। दुर्बोधतया सुदुर्लभतया उपदेश्योपदेशकाभावेन च कालवशाद् विलुप्तप्रायस्यास्य दर्शनस्य जिज्ञासुभिरस्माभिर्बहुतिथेऽपि काले कृच्छ्रेण मुद्रितं खण्डमेकं संग्टहीतम्। बलवती चास्माकं स्पृहा सञ्जाता निगूढ़ाभिप्रायमतिकठोरं वात्स्यायनभाष्यमालोचयितुम्। किन्तु हे नानादर्शननिष्णाता मनीषिणः! दुःखेनैतदावेदयामो यत्तत्र क्वचित् स्खलिततया, क्वचित् मुद्राकरलिपिप्रमादेन, क्वचिदनुपदिष्टत्वेन दुर्गमतया चास्माकं वैमनस्यमुदपादि। देववशेनेदानीं बहुकाल-

सञ्चिताऽस्माकं बलवती वासना सफला सञ्जाता। पण्डितधुरीणानां नानादर्शनकान्तारसञ्चरणपटीयसां पण्डितकेशरिणां श्रीयुक्तफणि-भूषणतर्कवागीशमहोदयानामक्षययशःपटलं वात्स्यायनभाष्योपेतं विस्तृतवङ्गानुवाद-टिप्पण्यादिसमलङ्कृतं सुदुर्लभं दुर्बोधमपि न्याय-दर्शनं सुप्रापतया सुबोधतया च प्रकाश्यतामुपनीतम्। ग्रन्थेनानेन सप्रणिधानसमालोचयतां मादृशां स्थूलधियामपि दर्शनान्तरसमुत्थानि विवादास्पदस्थानानि परिस्फुटयता नानादर्शनरसलालसानां दार्शनिक-मधुकराणां निराकारि बलवती स्पृहा। प्राचीनरीत्यनुसारेण संस्कृत-विद्यालये समधीतानां जलतरलसूपमात्राहाराणाम् अनधिगतपाश्चात्त्य-विद्यानां सभ्यताव्यञ्जकपरिच्छदविहीनानां, आधुनिकैरनादृत-पाण्डित्यानां तत्रभवतामेतेषां तर्कवागीशपादानामस्मिन् वाग्विभवः, चिन्ताशीलता, दर्शनान्तरेषु गभीरज्ञानं, निरपेक्षसमालोचनं, निरन्तर-शास्त्रालोचनतपःकृशीकृतानामप्यतियुवायमध्यवसायः सत्यमेवास्माकं विस्मयमुत्पादयामास। शास्त्रेऽस्मिन् यत्र यत्रास्माकं महान् सन्देह उदपद्यत, तत्र तत्र जातिनिग्रहस्थानादिषु सम्यगस्फुटभावता निराकृता खल्वेभिः पण्डितवर्य्यैः। बौद्ध-जैनादिदर्शनान्यालोचयतां मनसि तेषां दर्शनानां प्रतिपाद्या विषयाः प्रस्तावक्रमेण स्फुटतया संस्थापिताः। अत्र च टिप्पण्यादौ धर्म्मशास्त्राणामापाततः प्रतीयमानो विरोधो दर्शन-शास्त्रविचारव्याजेनैव शास्त्रविरुद्धाधुनिकसिद्धान्तस्य निरासि। भूमि-कासु सूत्रकार-भाष्यकार-वार्त्तिककार-वार्त्तिकतात्पर्य्यटीकाकृतामुद्देशे समयनिरूपणादौ च महान् प्रयासः पाण्डित्यपूर्णा काप्यभिनवा गवेषणा चाकारि। यद्यपि पण्डितधुरीणैः पाश्चात्त्यैरस्मद्देशीयैरैतिहासिकैश्चै-तद्विषये गरीयसी गवेषणा कृता, न च विभिन्नमार्गावलम्बिनामैति-हासिकानां विप्रतिपत्तयः सम्यक् तिरोबभूवुः, न वा कुतर्कवातान्दो-लिता संशयदोला नाश्माश्माभिवभूव, तथाप्यवश्यमेवैतदङ्गीकर्त्तव्यं यथार्थतत्त्वनिर्णये समालोचनमिदं प्रभूततमां सचिवतां करिष्यतीति।

वस्तुतो ग्रन्थेऽस्मिन् केनाप्यननुसृतमार्गा काप्यनिर्वचनीया सम्यगभिनवा चेयं पद्धतिर्नूनमेवास्मानानन्दयति। आशास्महे प्राचीनगौरवदिरक्षिषया, अभिनववस्तुदिदृक्षया, नारिकेलफलसम्मितदर्शनरसलिप्सया, स्वदेशोत्पन्नवस्तुप्रेमिकतया पण्डितजनानुजिघृक्षया, पाण्डित्ययशोलिप्सया, विरुद्धमतवादसमालोचनाकाङ्क्षया, वङ्गभाषागौरवसम्वृद्धये, दोषोद्घाटनचिकीर्षया वा कारुण्यामृतवर्षिण्या दृशा सहृदयैर्विद्योत्साहिभिरवश्यमेवेदमालोचनीयमिति।

किन्तु दुःखेनैतदावेदयामो यत्, निखिलशास्त्रप्रलयचिन्तापयोधिमग्नम् अनन्तशय्या-व्याप्तिमधिरूढं समाधिनिष्ठं फणिभूषणमस्मत्प्रदत्तो धन्यवादपुष्पाञ्जलिरुपतिष्ठति, नवेति संशयाना एवैतादृशे जगदुपकारकारिणि सर्वजनश्लाघ्ये कठोरकर्म्मणि प्रवृत्ताय कृतकार्य्याय सम्पादकाय धन्यवादकुसुमनिकरवर्षणे कृपणा वयमिति।

---

# परिषत्सन्देशः

**छात्रसमितेरभिनयोद्योगः**—विदितमास्तां परिषत्पारिषद्यानां छात्रसमितिसामित्यानाञ्च, समाशंसितसमागमानां प्रमाणाधिकसम्मानभाजां केषाञ्चन प्रधानपुरुषाणां परिषदि समागमसुपलक्षीकृत्य प्रवृत्स्यते छात्रसमितेः कैश्चिदभिनयसमायोगैः। येष्वितः पूर्वं तैरेव च्छात्रसमितिसदस्यैरभिनयसौकर्य्यार्थं परिहार्य्यांशपरीहारलघुशरीरीकृतं "मृच्छकटिकं" नाम रूपकम्, सम्भवत्पक्षे चान्यदपि रूपकमभिनीयमानं द्रष्टृनाकष्टुमलं भविष्यतीति। अनेकशो दर्शितोत्कर्षास्ते च्छात्रसमितिसदस्याः सर्वेषामभिनयदर्शिनामिति प्रवर्त्स्यमाने-

ऽप्यभिनये क्रमशो विज्ञतया ततोऽप्यधिकाधिकमुत्कर्षमापादयिष्यन्तीत्यपि निश्चप्रचम्।

जिज्ञासितपूर्वा संस्कृतभावधारातः श्लोकवादादिप्रणाली छात्रसमित्यैवानया पुनः स्वां पदवीमधिरोपिता, अवलुप्तप्राया बलवत्तमकालदैत्यप्रभावादभिनयाद्यङ्गत्यरूपा जर्जरपूजादिपद्धतिरनयैव छात्रसमित्या परिषदनुवृत्त्या पुनः प्रसारं नीता अनयैव च छात्रसमित्या प्रक्रान्त्या चोणतमायाः प्राचीनपारम्परिकविवादरूपाया मननपद्धतेः संस्कारः समानीत इति प्रशस्तिस्तस्याः सर्वथैवोद्घोषयितुं युज्यतेतराम्।

अल्पीयसाप्यनेहसा समितिरियं यथात्मप्रतिष्ठामुदभावयत्, यथा चागन्तुकेभ्यो जनसमूहेभ्यः प्रशस्तिमुपादीयत, यथा च तांस्तान् कर्म्मविशेषानसंशयं निरवाहयत्तथा मन्यामहे कालेनेयं समितिः परिषदो योग्यतरा वंशधरा भविष्यतीति। सूक्तमिदं कस्यापि कविसम्राजः—

"आकरे पद्मरागाणां जन्म काचमणेः कुतः।" इति शम्।

---

## विशेषद्रष्टव्यम्

वर्त्तमानसञ्चिकायां स्खलितान्यधोलिखितानि सहृदयैः स्वयं संशोध्यानि—

'सधर्म्माणां' 'प्रतिकूलामपि' 'नश्यतं' 'रूपं वैचित्र्यविशेषं' 'सुपजनयति' 'विज्ञायति' 'लिखिष्यन्' 'तेभ्यः'।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| March, 1930. | १८५१ शकीये फाल्गुने<br>१२श-वर्षस्य ११श-संख्या | Vol. XII.<br>No. 11 |
|---|---|---|

## वासन्तिका

[ निबन्धकः—श्रीपुलिनविहारी दाशगुप्तः वि, एल् ]

हित्वा भानौ मकरभवनं संश्रिते कुम्भसङ्गं
शीतर्त्तुश्रीः परिणतिमगात् शोचनीयां वराकी।
उन्मील्यासौ नवरसयुतान् कुड्मलान् कान्तिभाजो
भौमे लोके ऋतु-कुलपतिः प्रादुरास्ते वसन्तः ॥१

वाति ख्यातो मलयनिलयान्निर्मलो गन्धवाहो
नृत्योन्मत्ता नवकिसलया लीलया मञ्जरीताः।
हर्षोत्फुल्ला रसविलसिता प्राप्तशोभा धरित्री
कान्ताश्लेषाद्विरहविधुरा मानिनी कामिनीव ॥२

किं ब्रूषे त्वं पथिक गगने प्राचि पश्यन् प्रभाते
बिम्बावर्त्तं मृदुतनुरुचिं शोणिताभं दिनेशम् ?
भ्रान्तिस्त्वेषा तव तनुमतेर्नायमर्कोऽ शुमाली
भाले रम्यं प्रकृति-युवतेर्भाति सिन्दूर-विन्दुः ॥ ३

संवर्द्धन्ते प्रकृतिसुषमा दर्शनीयाः प्रकामं
दृष्ट्वा साक्षाहतुकुलपतिं सर्व्वलोकाभिरामम् ।
नंनम्यन्ते व्रतति-ततयः कान्तिभिः स्निग्धरूपा
लज्जानम्रा इव नवरसाः प्रेमसुग्धाश्च बाला: ॥ ४
अस्तं यातः शिशिरसविता हर्षितो मीनकेतु-
राविर्भूतो भुवि मधुसखः पञ्चबाणान्वितश्रीः ।
देदीप्यन्ते दिगधिपतयः सौम्यरूपं दधानाः
पृथ्वी चासौ समनुकुरुते नन्दनस्येव कान्तिम् ॥ ५
भास्वानर्को नभसि विमले तेजसा व्याप्य विश्वं
लोकानन्दं खलु वितनुते स्निग्धरागैर्मयूखैः ।
जाग्रत्पृथ्वी शयनविरता विह्वला लालसाङ्गी
प्राणेशस्यागमनसुखिनी मुग्धभावेव कान्ता ॥ ६
रात्रौ रम्ये गगननिलये चित्रिते कज्जलाभे
बिभ्रद्रूपं शतदलनिभं शोभते शुभ्ररश्मिः ।
नक्षत्राणां विकचतनुषु स्थापयित्वा सुदृष्टिं
ग्रामान्नित्यं ललितममृतं सेवमानो विलासी ॥ ७
मर्त्ये मायारचितभवने कानने वल्लरीते
वार्त्तां स्वस्यागमनजनितं गौरवं सूचयन्तीम् ।
दिक्षु प्रायः प्रचलनपटुर्घोषितुं बद्धकामो
दूतैश्चूताङ्कुरविकशनैश्च ष्टमानो वसन्तः ॥ ८
वीणाकण्ठामृतरसयुतां गीतिकां किन्नराणा-
मुद्यन्नादो विपिननिचये सांवहस्येव सम्यक् ।
गीतोन्मत्ता विकलमधुपा रेणुभिः कीर्णकाया
गुञ्जन्त्यस्मिन् बहुसुखमये निर्मलत्वौ वसन्ते ॥ ९
नाथं दृष्ट्वा पुलकचकिता सुन्दरी भामिनीव
पत्रावल्या नयनरमणा माधवी लब्धशोभा ।

शाखाहस्तैः परिचलदलैर्यो बाहुराजिं दधानं
द्रागुत्क्षेपं विपुलवपुषं तं रसालं स्वजेत ॥१०
कुञ्जे श्यामो व्रजकुलवधूवित्तसम्पत्तिचौरो
वंशोगीतैस्तपनतनयाजीवनं यद्‌ व्यकर्षत् ।
तद्वत् क्रीडापर-परभृतः काकलीगीतिकाभिः
कान्तप्राणां युवति-रसिकां कर्षयन् राजतेऽत्र ॥११
श्रीपञ्चम्यां शुभकरतिथौ भारतं सेवमाना
वीणापाणिं सुखितमनसश्चार्च्यवंशावतंसाः ।
वासन्तप्रेमजनितरुचिं भूयसा धारयन्तः
शोभाकृष्टा मुदितहृदयाः संरमन्ते जनौघाः ॥१२
मन्दाराणां विकचकुसुमैर्विद्रुमाभैः समन्ताद्‌
बिम्बोष्ठीवत् विटपि-बहुला वीतशोषा वनश्रीः ।
धत्ते रूपं ललितममलं श्यामलं चित्तमोदं
स्वर्गस्थानं भृशमुपहसन्तीव सम्यग् विभाति ॥१३
रम्यं भाति प्रमदविपिने किंशुकच्छातिलोलं
रक्तज्वालास्फुरितवदना पुष्पिताशोकराजिः ।
वापीनीरे स्फुटति कमलं षट्‌पदालिङ्गनेषु
कन्दर्पेषुप्रणिहितबलं भृङ्गयूथं वृणीति ॥ ४
कुञ्जे मत्तं पिककुलवधूचुम्बनोद्भ्रान्तचित्तं
दृष्ट्वा शोकात् पतिविरहिणी कोकिलं काकलीतम् ।
नूनं निन्देदपगतसुखा ह्यात्मनो मन्दभाग्यं
वामा कामप्रबलदहना लोभनीये वसन्ते ॥१७
मन्दानिलो वहति यत्र मनः प्रणीय
सम्मोहिता जनगणाः श्रवणात् सुगीतेः ।
भृङ्गादितः कुसुमितं विपिनं यदा स्याद्‌
भूयाद्‌ वसन्तसमयो जगतीह धन्यः ॥१६

# भारतीयस्त्रीशिक्षा *

[ निबन्धकः—श्रीसीतानाथसिद्धान्तवागीशः ]

माननीयाः सभासदः! चतुर्दशवर्षदेशीयया परिषदा समादिष्टोऽस्मि किञ्चिदालोचयितुम्। किन्तु भोः सभाजनीयाः सभ्याः! समुपजातायामिदानीमस्माकमाश्रयभूतायां षड्‌विधरसाश्रयायामपि रसायां विरसायां, विविधरूपवत्यामपि विरूपायां रत्नप्रसविन्यामप्यतिदीनायां, गन्धवत्यामपि सुमनोभिः परिहीनायां, विश्वम्भरायामप्यनाहारक्लिष्ट-परिक्षीण-दुर्बलकलेवरावलम्बनक्रोड़ायां, प्रलयं सूचयति शैत्यविरहिणि शस्यविनाशिनि विश्वव्यापिनि माधुर्य्यविहीने सलिलपूरे, प्रावृषिकजलदजालकैङ्कर्य्यप्रतिहते नितरां शैत्यमुपगते तेजसि, प्रवहति कलुषरजोवर्षिणि विषवायौ, निरन्तरमितस्ततो धावतामवनतशिरसामप्यदत्यवकाशमाकाशे, मानहानिविधिनिगड़बन्धनभीता लेखनी न चलति। शस्त्रीसम्पातभीतः सव्येतरः करोऽपि पराङ्मुखो लिपिव्यापारेषु, स्वल्पवाग्विभवस्य मे वाचोऽपि न स्फुरन्ति, तथापि लिपिकुशलानां वाग्विभववतां लब्धयशसामपि स्त्रीशिक्षाविषये महन्मतद्वैधस्यमुपलभ्यते। तदत्र भीता अपि यथाबुद्धि किञ्चिदालोचयामः।

यद्यप्येतदालोचने मृदुलपाणिपादतलानां शस्त्रीभ्यामानामुपनेत्राद्यृताक्षीणामुपहासस्तिरस्कारः पादप्रहारो यष्ट्याघात उपानन्निःक्षेपो वा मयि निपतेन्नहि असम्भावितायतसुलभोऽयमनुग्रहो रमणीनामिति मत्वा आत्मानं कृतकृत्यं मन्यमानः सज्जनपदवीमधिगच्छेयम्।

अत्रेयं विचिकित्सा—किं तावल्ललना पिञ्जराबद्धा विहङ्ग इव चिरं स्थास्यन्ति? उत वा अविज्ञातपितृपुत्रभ्रातृभर्तृका वन्या इव

---

* परिषदो मासिकाधिवेशने वाचितोऽयं निबन्धः।

स्वाधीना विचरिष्यन्ति ? तासां शिक्षा उपयोगिनी न वा ? तास्वा-विद्यावगुण्ठनं परित्यज्य बन्धनमुक्ता भवितुमर्हन्ति न वा ? किं वा लौकिको वैदिको वा कण्टकमार्गस्ताः प्रतिबध्नाति पुरुषवदाचरितुम् ? शिक्षाया आवश्यकत्वे च कीदृशी शिक्षा तासामुपयोगिनी ? इत्यादि।

इदानीमस्तंगते भारतगौरवसदाचारविभाकरे वैदेशिकभाषा-लोकेनालोकितं भूतलम्। यस्यार्य्यधर्म्मस्य, आर्य्यभाषायाश्च यस्या गौरवं पृथिवीमण्डले सुव्यक्तं सुपरिचितञ्चासीत्, प्रातःस्मरणीयानां यासामार्य्यरमणीनां पातिव्रत्यमानाकं देवरमणीनामपि विस्मय-माविश्चकार, तासामियं चरमा दुर्दशा सञ्जाता, यन्मुहुर्विचिन्त्यापि तद्भावं हृदये सन्निधापयितुमक्षमा वयम्। यद्यपि म्लेच्छभावबहुले-ऽस्मिन् भारतवर्षे स्वधर्म्ममतिक्रान्ता दासभावमापन्ना नराः कठोराया-सेन कालक्रमेण स्वकीयामवस्थां प्राप्य लब्धस्वास्थ्या भवेयुरित्याशंसा गगनकुसुमवदनुपेक्षिता भवितुमर्हति, तथापि प्रबलकलिकालग्रह-ग्रस्तानां वैदेशिकभावस्रोतसि न्यस्तकलेवराणां सुकुमारमतीनां कोमलहृदयानां रमणीयत्वमवश्यमेव विनङ्क्ष्यतीत्यत्र न कश्चित् संशया-वकाशोऽस्ति।

सदसद्विचारनिर्म्मलमतयो मनीषिणः! सहृदयहृदयनिहिताः कुसुम-स्रजो वा, गृहकोणस्थिता क्रीडापुत्त्रिका वा रमण्यो भवन्तु, किन्त्वि-दानीं विज्ञानालोकालोकिते, साम्यमुपगते प्राणिजाते राजविधिनियन्त्रि-तैकनिलयशरणानां वन्यानामपि केशरि-करि-शार्दूल-मृगाणां शिक्षा-नैपुण्यं विस्मयमुत्पादयति, का कथा मानुषीणाम्? न च स्वार्थ-रक्षणाय क्रीतदासीमिवाज्ञावहां, सम्भोगैकनिरतां, गृहकोणस्थिता-मवगुण्ठनवतीं तिरस्कारैकपात्रभूतां कामपि दीनातिदीनां छिन्नमलिन-वसनां रमणीं समर्थयिष्यन्ति केचन सुधियः। अन्ये यथेच्छं यथासुखं विचरिष्यन्ति, केवलं ललनाः सर्व्वापराधैकनिलयाः शुश्रूषापरायणा अवगुण्ठनवत्यो भविष्यन्ति इति सज्जनविगर्हितां व्यवहारविरोधिनीं

पद्धतिं के वा विवेचका अनुमोदन्ते ? प्राणिमात्रोपभोग्यायां स्वाधीनतायां के वा करप्रसारं कर्त्तुं शक्नुयुः। न चेर्ष्यादिकालुष्यरहिते सर्व्वभूतसमत्वदर्शिभिः कारुण्यपरवशैः सद्विवेचकैराचरिते मार्गे के वा दोषकण्टकं निखनितुमीशते सुधियः। अहो! महतीयमाशा, वैदेशिकविद्यालोचननिर्म्मलमतीनां भारतीयस्वाधीनतालिप्सूनां यत्, नारीजागरणमेव भारतीयसर्व्वमङ्गलनिदानभूतमेकमेव विजयते, किमियमज्ञता भारतीयानां, यद् गिरिगह्वरवासिनः पर्णकुटीरावलम्बना वा अदृष्टदृष्टान्ताः केचनाविवेचकाः सरलामपि मिथ्यापवादकलुषितामन्वर्थभूतामबलां प्रतिपादयितुं न लज्जन्ते ? श्रुतिस्मृतिप्रमातारोऽपि जानन्ति, यदस्माकमाराध्या जगज्जननी समरकुशला कदाचिच्चतुर्भुजा, कदाचिद्दशभुजा, कदाचिदष्टादशभुजा, कदाचित् सहस्रभुजा वा शत्रुपराजयैकाग्रमानसा विस्मृतस्त्रीजनोचितशालीनता नग्ना नृत्यति। इदानीन्तनेष्वपीतिहासेषु प्रसिद्धिमुपगतं नारीणां भुजबलं, केन न ज्ञायते रमण्या अपि वाण्या मुखरता, सर्व्वसम्पदधिष्ठात्र्या अपि कमलायाश्चपलता, अहो सभासदः, के च नानुमोदन्ते नर्त्तकीं कलाकुशलामङ्गागतां रमणीम्? कान्न प्रीणाति नवीना स्मितहासा प्रगल्भवचना वामा, कांश्च वा नानुकर्षत्यसत्याः कुटिलः कटाक्षविक्षेपः? कान् वा कुटिलभ्रूधनुर्न्नी हन्त्यल्पमतीन् मृगयुवकान्? न वा स्वल्पबलान्यबलानि वा महिलाकुलानीत्यवधारयितुं शक्यते। राजकीयविभागेषु कर्म्मकुशलानां स्त्रीपुरुषाणां गणनावसरे विशिष्टकर्म्मस्वधिकृताः परिदृश्यन्ते परःसहस्राः सीमन्तिन्यः। काश्चन शिक्षाविभागेषु, काश्चन विचारालयेषु, काश्चन शासनविभागेषु, काश्चन स्वास्थ्यविभागेषु, काश्चन बहुष्वन्येषु च विभागेषु परं नैपुण्यं प्रदर्शयन्त्यः प्रधानराजपुरुषैः समर्थिताः। विश्वविद्यालयपरिगृहीतपरीक्षायामपि योषितां योग्यतां के नाम नाङ्गीकुर्व्वन्ति? दर्शन-ज्योतिष-ब्रह्मविद्यासु प्राचीनतमानामिव

आधुनिकीनां रमणीनामपि विशेषतो वैदेशिकविद्यासु किं नाम प्रातिभं ज्ञानं नोरीकुर्व्वन्ति ? सूक्ष्मदर्शिनः प्रेक्षावन्तो भवन्त एवात्र प्रमाणम् ।

यद्यपि "स्त्रीशूद्रौ नाधीयेताम्" "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ती"त्यागमवाक्येन स्त्रीणामध्ययने नाधिकारस्तथापि "निषादस्थपतिं याजये"दित्यादिवद् विशेषगुणसम्बन्धेनाध्ययनविशेषे स्त्रीणामधिकारोऽस्त्येवेति मन्यामहे। तथा च "कन्याप्येवं पालनीया शिक्षणीयातियत्नतः" इत्यादिस्मृतिशास्त्राणामादेशोऽपि साधु सङ्गच्छते। तथा चैवं शिक्षा दातव्या, यया गार्हस्थ्यं सम्यक् सम्पद्येत, शिशूनां स्तनन्धयत्वं न व्याहन्येत, पातिव्रत्यं न भज्येत, गुरुजनानुरागो न विरज्येत, देवरादीन् प्रत्यकृत्रिमस्नेहस्तानवं नापद्येत, समागतेष्वात्मीयजनेष्वतिथिषु च समादरो न दूरीक्रियेत, दीनजनेष्वनुग्रहो न निगृह्येत, आर्त्तेषु शुश्रूषा न भ्रश्येत, देवब्राह्मणेषु विश्वासो न हीयेत, शास्त्रेष्वैकान्तिकी श्रद्धा नापचीयेत, स्वजात्युक्तसदाचारो न विलुप्येत, सरलता विनयो विवेकः कमनीयता च न शिथिलीक्रियेरन् तादृश्येव शिक्षा स्त्रीणामुपयोगिनी। उक्तवचने "अतियत्नतः" इत्युपादानात् यथा च स्त्रीणां मनश्चापल्यं नोत्पद्यते, यथा च ताः साधारणलोकलोचनविषयतां न व्रजन्ति, तथा यतितव्यम्। तथा च वृद्धात् जितेन्द्रियात् गुरुजनाद्वा एकान्ते अध्येतव्यम् इत्युपदिष्टं भवति। बहुलजनसम्मिलनैकनिलये वर्त्तमानविश्वविद्यालये शिक्षितानां प्रगल्भता, निर्लज्जता, यथेच्छकारिता च प्रायश एव परिदृश्यते। भगवता मनुना स्पष्टमेवाभिहितं "पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिष्क्रिये"ति। श्रूयतां श्रीमद्भिः सदस्यैर्यादृशी स्त्रीणामादर्शभूता शिक्षा। तत्रायमार्षः सिद्धान्तः—

"शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजनं
भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः

भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥"

अत्रैव शकुन्तलां प्रति गौतमीवाक्यं—"एतावान् खलु वधूजने उपदेशः। जाते! एतत् खलु हृदये कुरु, मा विस्मरिष्यसी"ति। पुरा खलु वेदादिशास्त्रेष्वधीतिन्यो रमण्य इति प्रलापमात्रमित्युक्तवतां वचनं न वयं श्रद्दधीमहि। तथा चोत्तरचरिते आत्रेयीवाक्यं—

"अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
वाल्मीकिपार्श्वादिह पर्य्यटामि ॥" इत्यादि।

किं बहुना, अत्र खल्वात्रेयी-मैत्रेयी-गार्गी-प्रभृतयः प्रातःस्मरणीया रमण्य एव प्रमाणम्।

महाभागाः! स्त्रीणां शिक्षाविषये सावधानैर्भवद्भिर्भवितव्यम्। यया शिक्षया स्त्रियः सुशीला विनीताः पतिप्राणा गुरुजनानुगताः शिष्टाः धर्म्माचाररताः अतिथिप्रियाः देवद्विजपरायणा गृहकर्म्मणि निपुणाश्चापल्यविहीनाश्च भवेयुः, तादृशी शिक्षा यदि विहिता भवेत्, तदैव भारतीयरमणीत्वं स्थास्यति। यथा च भारतीयललना आर्य्यभाषामार्य्यग्रन्थांश्चाधिकर्त्तुं शक्नुवन्ति, यथा च गृहस्थिता अपि शिल्पकर्म्मणि निपुणा भविष्यन्ति, यथा च चित्रविद्यासु गृहकर्म्मसु च नैपुण्यं लप्स्यन्ते, यथा च पुत्रादीन् सत्शिक्षया सत्पथमानेतुं शक्ता भवेयुः, सैव शिक्षा विधातव्या। सा च शिक्षा संस्कृतभाषाशिक्षयैव सफलतां लभते। मधुरा कोमला चेयं भाषा सम्यगधिकृता वाचां वैचित्र्य, नीतिविद्यायां पाटवं धर्म्माधर्म्मादिनिर्द्धारणशक्तिञ्च सम्यगुपजनयति। माननीया विद्वांसः! भारतीयललनासु रक्षितासु भारतं रक्षितं भवति। देवतातिथिपूजासु धर्म्माचरणे परोपकारे दारिद्र्यनिवृत्तौ प्रभूतायासः, परदुःखनिवृत्तौ स्वतः प्रवृत्तिर्भारतस्य वैशिष्ट्यं,

तद्वैशिष्ट्यं यथा रक्षितं भवेत्, तथा स्त्रीशिक्षायां भवद्भिर्यतितव्यम्। यदि केऽपि स्त्रीशिक्षया भारतस्य वैशिष्ट्यं लब्धुमभिलषन्ति, तर्हि यथा स्त्रीणामार्य्यभाषायामार्य्यग्रन्थेषु आर्य्याचारेषु शालीनतासु शिक्षा-शिल्पनैपुण्यादिषु च सम्यगधिकारो जायेत तथा यतितव्यम्।

विविधविचारचतुरा विपश्चितः! स्थावरजङ्गमात्मकभुवनमण्ड-लेषु स्त्रीपुरुष-क्लीवभेदेन विविधं सृष्टिवैचित्र्यं परिदृश्यते। कर्म्म-वैचित्र्यादेवेदं सृष्टिवैचित्र्यमिति। अत एव कर्म्मविपाकादेव जात्यायुर्भोगसिद्धान्तः सर्व्वेषामेवास्तिकदर्शनानां सङ्गच्छते। देश-कालपात्रभेदेन जगन्निर्म्मातुर्निर्म्माणकौशलव्यवस्था सर्व्वत्रैवाव्यभि-चारिणीति न केनाप्यतिक्रमितुं शक्यते। तथा च निदाघे तपन-स्तापयति, वर्षासु जलदजालं जगदिदं प्लावयति, शरदि हंसकूजनं, सरोवराणां सौन्दर्य्यं पार्व्वणशर्व्वरीनाथस्य सौम्यत्वं, कमलिनीकामि-नीनां मृदुविकाशहासः परिशोभते। हेमन्ते च हैमन्तिकशस्यसम्पदं सर्व्वेषां जीवनभूतां धारयति धरित्री। शीते च सङ्कुचितगात्रा बाल-वृद्धा वैश्वानरं सखायमिव मन्यन्ते। सर्व्वेषां जीवनभूतमपि सलिलं शल्यमिव शरीरं तुदति। वसन्ते मधुरं मनोहरञ्च कोकिलकूजनं, कन्दर्पदर्पविकाशः, सुमनसां राशिः सुमनसोऽप्याकर्षति। न चैतेषां यथाकालं स्वाभाविककार्य्यकारणभावेनाविर्भूतानां राजशासनभीरस्ति, न च राजकीयविधिपाशो यथाकालं समुन्नततरुनिकरनिकेतनोन्मूलन-कारिणीं वात्यां, प्रलयकालागतमिव जलप्रवाहं वा प्रतिबन्धुं शक्नुयात्, न च विविधविचित्रोपकरणकं जगदिदं शासति भगवति करौ प्रसार्य्य कोऽपि "मैवं कुर्व्वि"त्याज्ञापयन् साफल्यं लभते। तदिदं स्वतो वैचित्र्यमापन्नं स्थावरजङ्गमात्मकभूतजातं स्वाभाविकगुणकर्म्म-राशिमाददानं समुत्पन्नं स्वस्ववैशिष्ट्यं प्रकटयति। अतो विशिष्ट-धर्म्मवत्स्वरूपस्त्रीत्वपुंस्त्वनपुंसकत्वभेद आसंसारं प्रवर्त्तिष्यत एवेति

न तत्र कश्चिद्बाधको भवितुमर्हति। अतः स्त्रीपुरुषभेदेन कर्म्मविभागः शिक्षाभेदश्चावश्यं प्रवर्त्तयितव्य इति सुधियां सिद्धान्तः।

स खलु भगवानादिसर्गे सर्व्वेषां भूतानां नामानि कर्म्माण्यवयवसंस्थाश्च पृथक् पृथगेव कल्पयामास। तथा च मानवधर्म्मशास्त्रे—

"सर्व्वेषान्तु स नामानि कर्म्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्म्ममे"॥१।२१

अतः काचिन्नियमानुवर्त्तिता जगत्यवश्यमङ्गीकर्त्तव्या। अन्यथा जगदिदमुच्छृङ्खलं विनाशमापद्येत। शान्तिर्नाम किञ्चिद् गगनकुसुमवदलीकं प्रतीयेत। यदि ब्राह्मणादयो रजकचर्म्मकारादिवृत्तयः स्युः रजकादयो वा ब्राह्मणादिवृत्तयः, एवं पुरुषायमाणाः स्त्रियः स्त्रीवृत्तयो वा पुमांसो भवेयुस्तर्हि वृत्तिभेदवैमत्येन स्वस्वकर्त्तव्यजातं प्रतिहतादराणां परस्परविरोधे कार्य्यहानिरापद्येत। एवञ्च नूनमेव महतीयमशान्तिदावानलज्वाला जगदिदं धक्ष्यति। अतो जगतः स्थितये शान्तये च आसृष्टिकालं सर्व्वमेव प्राणिजातं नियमानुवर्त्तितया वर्त्तते। एतन्नियमोन्मूलने राजदण्ड एव जागर्त्ति।

न चावगुण्ठनं स्त्रीणामपकृष्टतासूचकं सभ्यजनाननुमोदितं विसदृशं हास्यकरञ्चेति केनचित् प्रत्नतत्त्वविदा विदुषापि समर्थयितुं शक्यते। अतो लोके महादराणां बहुमूल्यानां वस्तूनां यत्नतो रक्षणं पेटिकादिषु स्थापनं वस्त्रादिना पिधानञ्च परिदृश्यते। अतः कलापिकलापकेशपाशानां, अष्टमीचन्द्रशकलभालानां, विजितकामधनुर्भ्रूयुगलानां, नीलोत्पलाक्षीणां, तिलकुसुमनासिकानां, नवकिशलयाधराणां, मृदुज्योत्स्नाविकाशहासानां दन्तमुकुलप्रभाकवलीकृततमसां, शुक्लभास्वरगण्डस्थलानां, कम्बुग्रीवाणां, शशधरवदनानां, मृणालकोमलबाहुवल्लीनां, पीयूषसरसपयोधरपीनोन्नतपयोधराणां, मौक्तिकहारविलसद्वक्षःस्थलानां, कृशोदराणां, सुगभीरनाभिकन्दानां कराग्रसम्मितमध्यदेशानां, विपुलनितम्बानां, करभोरूणाम्, अलक्तकरञ्जित-

चरणकमलानां, कुसुमसुकुमारकलेवराणां, हंसगतीनां, मृदुमन्द-वचसां, लज्जावनतशिरसां, विनीतानां, वात्सल्यैकनिलयानां, लावण्या-म्बुधिलहरिकाणां, लोकलोचनचकोरचन्द्रिकाणां, श्रूयमाणपीयूष-वर्षिपराभूतपरभृतरुतानां, समाघ्रेयपद्मगन्धानां, आस्वाद्यबिम्बा-धरमाधुर्य्याणां, निरन्तरमसहनीयसंसारदावानलज्वालानिवारकसुशी-तलस्पर्शमहौषधीनां, चतुराननिर्म्माणनैपुण्यावधिभूतानां, कटाक्ष-मात्रायुधविजितचराचराणां, सर्व्वेषामपि रत्नानां रत्नभूतानां रमणी-रत्नानाम् आवरणं यत्नतो रक्षणञ्च यदि सभ्यजनानुमोदितं न स्यात् तर्हि किमस्मादृगोपनीयं रमणीयं रक्षणीयञ्च भवितुमर्हति, तद् एव विवेचयिष्यन्ति विवेचकाः ।

इदानीं स्त्रीजनोचितशालीनताविरोधिनी चपलता, ललनाकुला-लङ्कारपरिपन्थिनी निर्लज्जता च भीषयन्ती प्रतिदिशं सगर्वं भ्रमति । अतः सकलवैशिष्ट्यविनाशिनि महत्यस्मिन् काले पृथिवीमण्डले योषितां यादृशो व्यवहारः परिदृश्यते, तत्र स्त्रीजनोचिता शिक्षा शिक्षा-भावो वा कारणमिति बहव एव संशेरते। वयन्तु विवेचयामः शिक्षाभाव एव तत्र कारणम् । इदानीं यादृशी शिक्षा प्रवर्त्तते सा खलु शिक्षा-भाव एवान्तर्भवति । इदानीन्तनी पाश्चात्यशिक्षा नारीणां सर्वथैव नोप-योगिनी, अतः सा शिक्षा प्रकृतशिक्षा न भवति, किन्तु शिक्षाभास एवेति सूक्ष्मदर्शिनां विवेचकानां सिद्धान्तः । तथा च शिक्षेयं शाली-नतां हरति, अबलां सबलां करोति, गुरुजनेषु सम्माननां खर्वयति, अतिथीन् विमुखीकरोति भिक्षुकान् बहिर्निष्कासयति, पतिं दासी-करोति, देवरादीनसूयति, सततं दौर्मनस्यं जनयति, स्त्रीजनविग-र्हितेषु निरन्तरं परगृहाटनादिषु मतिं लब्धप्रसरां करोति, परपुरुषा-लिङ्गनादिषु सौभाग्यं प्रकटयति, विलासव्यसनेषु चित्तं दृढीकरोति, स्वातन्त्र्यमुद्घोषयति, पातिव्रत्यं शिथिलीकरोति, ऐहलौकिक-पार-लौकिकधर्म्मकर्म्मणि सूत्रवत् संसक्तं दाम्पत्यसम्बन्धमप्यनायासेन

विचारालयसाहाय्येन वा निष्क्रान्तति। अहो दौर्भाग्यं भारतीयललनाकुलानां, यदेवं शिक्षाफलं जानन्तोऽपि विवेकहीनाः पित्रादयः कुफलं विषवृक्षं प्रचुरतरविभववारिसेचनेन परिवर्द्धयितुमुत्सहन्ते। अहह! किमिदं दुर्नीतं विधातुर्यज्जगदादर्शभूतानां पतिप्राणानां भारतीयललनाकुलानाम् आदर्शं विलोपयितुमुद्युङ्क्ते। अत्र खलु जगद्भक्षकस्य महाकालस्यापि ताण्डवलोला लेलिहाना च परिदृश्यते लोलरसना।

समुज्ज्वलज्ञानरत्नोपहितानां भारतीयानां या जनन्यो भविष्यन्ति, ता यदि निरन्तरं वैदेशिकभावमापन्ना धर्म्माचारनिरायासाऽट्टहाटननिपुणाः परपुरुषकरावलम्बिन्य उच्छृङ्खला गुरुजनादेशपालनविरता गृहकर्म्मण्यस्थिरमानसा भारतीयगौरवस्थानीयातिथिसत्कारनिरस्ता देवद्विजार्च्चनप्रतिकूलाः पुरुषसमानाधिकारं लब्धुकामा विधातृविहितनियममतिक्रम्य स्वेच्छाहारविहारा भवेयुस्तदा फलवतीं कामाशालतामुपजीव्य वयं जीवामः। मूलमुच्छिद्य शाखायां जलसेचनमिव नानाजातीनामनुन्नतानामप्युन्नतिविधायिनीनां समितीनामानर्थक्यं स्वत एव भविष्यतीति नात्र सन्देहः। महाभागाः! इदानीन्तनी स्त्रीशिक्षा न सत्फलप्रसविनी, प्रत्युत विपरीतफलमेव सूते। अपि च "सुकेशी सुस्तनी श्यामा पीनोन्नतपयोधरा"। "बिम्बोष्ठी चारुनेत्रा गजपतिगमना दीर्घकेशी सुमध्ये"त्यादि स्त्रीणामुत्कर्षविधायकं विशेषणमसभ्यजनोचितं मन्वाना व्यर्थविशेषणतां नयन्ति पुरवासिन्यो रमण्यः। "परिणामशीलेऽस्मिन् जगति सर्वे एव परिणमन्ते इत्यस्माकमपि परिवर्त्तनमवश्यम्भावीति सभ्यताभिमानिनीभिः पुरुषायमाणाभिरस्माभिर्भवितव्य"मिति मत्वा यदि सुकेशीः कृत्तकेशा, सुस्तन्यऽचीरस्तनाः, श्यामा वामा गौरी पीनोन्नतपयोधरा क्षीणपयोधरा, बिम्बोष्ठी कज्जलोष्ठी, चारुनेत्रा कोटरस्थनयना, गजपतिगमना वाजिवेगा, दीर्घकेशी कुञ्चितकेशा सुमध्या स्थूलमध्या सयत्नमुपकर्ण

कृतसोमन्ता वा विधातृविहितनियममतिक्रम्य कथञ्चिद्वर्त्तितुं प्रभवन्ति। किन्तु न जाने कीदृशानामपि मन्त्रमहौषधीनां प्रयोगो विशिष्टं स्त्रीचिह्नं पुंस्त्वेन परिणमयितुं शक्नुयात्। यासां प्रस्नवतः स्तनौ, बाल्यदेहं पोषयितुं न प्रभवतः। यासां वात्सल्यं जगज्जननीपदं नालङ्कर्त्तुं शक्नुयात्, इन्द्रियनिरोधं कर्त्तुमशक्नुवतीभिरपि गर्भनिरोधोपायः सयत्नमवलम्ब्यते, यासां करौ देवतातिथिपूजासु पतिशुश्रूषासु रुदतो बालस्याकर्षणे कृतप्रसारौ न भवतः, यासां पादपल्लवौ दुष्टानजितेन्द्रियानभिभवितुं न प्रभवतः, यासां हृदयपुण्डरीकं कारुण्यरसाभिमृष्टं भगवच्चिन्ताव्याकुलं न भवति, यासां मधुरवचनामृतसेकः संसारदावदग्धान् स्वजनान् न शीतलयति, तासामीदृशी शिक्षा यदि फलोपधायिनी, तर्हि का नाम असतीशिक्षेति विबुधैरपि प्रतिपादयितुं न शक्यते, हन्त भोः! येषु येषु प्रदेशेषु आधुनिकीयं स्त्रीशिक्षा परं प्रचरति, तेषु तेषु प्रदेशेषु स्त्रीशिक्षा फलभूतं चित्रकरैरङ्कितं चित्रं समुपहरामो भवतां सूक्ष्मदर्शिनां सकाशे।

---

## कविरहस्यम्

[ निबन्धकः—अध्यापक श्रीसुरेन्द्रनाथविद्यारत्नः एम्. ए ]

अविदितमहिमानं नैकरूपं स्वशक्ति-
स्फुरणमभिदिशन्तं सर्गरक्षाविनाशैः।
जनहृदि विलसन्तं तेजसा सर्व्वकालं
विभुमिव कविसिंहं को हि वेत्तुं समर्थः॥ १

किं कारुण्यसुधाम्बुधेरयमुदारावर्त्तगर्त्तो महान्
किंवा शोकयुगान्तवारिदघनस्यानीचविस्फूर्जथुः।

किं स्वित् प्रेमशशाङ्ककान्तशकलः स्निग्धोच्छ्रितः खच्युत-
शाहो ब्रह्मकृतो निषेधविधिवद् वेदोपदेशो हितः ॥ २

विच्छित्तिभङ्गिभणितिः खलु वाक् कवीनां
लोकोत्तरां रसभरोप्रहृतिं प्रसूते ।
यत्पानतो हसति रोदिति रौति विश्वं
प्रोन्मत्तवच्चलति जल्पति मूर्च्छतीदम् ॥ ३

काव्यं श्राव्यं नेति वाक्यं मृषोद्यं
सूक्ष्मं तत्त्वं वेत्ति वान्यः कवेः कः ।
त्रय्यां निष्ठा दर्शनादिप्रबन्धे
नूनं सर्व्वे सत्कविलाद्रंभावाः ॥ ४

कविता वनितारत्नं परं मृत्योरपोष्टदा ।
श्रीरिवानन्यसामान्या राज्ञः साता मता कवेः ॥ ५

---

## श्रीकृष्णचैतन्यचरितम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—भक्तिसागरः श्रीकालीहरदासवसुः विद्याविनोदः ]

अधुना निजदण्डमलब्ध्वा प्रभुः क्रोधमिषेणकाको दर्शनोत्सुको भक्तान् तेषां सम्मतिमयाचत । मुकुन्दमुखात्तां प्राप्य नीलाचलनाथदर्शनोत्-कण्ठितो नीलाचलं प्रत्यधावत् । प्रेमोन्मत्तः प्रभुस्तथा कुर्व्वन् फाल्गुने मासि श्रीजगन्नाथमन्दिरस्य पुरत आजगाम । श्रीजगन्नाथ-देवः स्वयं निजं श्रीहस्तं प्रसार्य्य, प्रभुं स्पर्शनाभ्यर्थ्य पुनरन्तर्दधे। सपदि प्रभुर्धूल्यामवलुण्ठितो रोदितुं प्रवृत्तः । क्षणमेवं कृत्वा भाव-निधिः श्रीगौराङ्गो द्रागुत्थाय रत्नसिंहासनस्थितं मूर्त्तित्रयं लक्षयित्वा

प्रेमाकुलः श्रीजगन्नाथं परिष्वङ्क्तुं लम्फेन मन्दिरं प्राविशत्। प्रतीहारिणः ( परिछा इति ) श्रीजगन्नाथसेवकास्तं प्रभुं प्रहर्त्तुं गलहस्तेनापवाहयितुञ्चागताः इत्यालोक्य प्रभुर्मूर्च्छन् पपात।

महेश्वरविशारदनाम्ना ब्राह्मणेनैकेन पूर्व्वमुषितं नवद्वीपे। तस्य द्वौ पुत्रौ मधुसूदनवाचस्पति-वासुदेवसार्व्वभौमौ। वासुदेवस्य जन्मभूमिः खलु नवद्वीपः। स मिथिलायां न्यायं वाराणस्याञ्च वेदानधीते स्म। ततः प्रत्यावृत्त्य स वङ्गदेशे नवन्यायप्रतिष्ठां विदधौ। “चिन्तामणिः” इति ग्रन्थञ्च प्रणिनाय। वासुदेवो रघुनाथशिरोमणेरध्यापकः। इदानीमिव चेत्राधिपतेः प्रतापरुद्रस्य सभापण्डितः चेत्रे निवसति। स भारते अद्वितीयः पण्डितः।

श्रीमन्दिराभ्यन्तरे यदा प्रभुर्मूर्च्छितोऽभूत्तदा दिष्ट्या वासुदेवसार्व्वभौमेण तत्रास्थायि। तेन निवारिताः सेवकाः श्रीगौरसुन्दरस्य श्रीदेहं नास्पृशन्। भट्टाचार्य्यस्तस्य रूपमाधुर्य्यं लक्षयित्वा विस्मितो मनसि अचिन्तयत् “ईदृक् प्रेमभावो मनुष्ये न सम्भवति”। वस्तुतस्तद्दर्शनादेव तस्य चित्ते तस्मिन् गाढभक्तिरजायत। अनन्तरं चिरादपि नवीनसन्न्यासिनश्चैतन्यसम्पादनं न भवतीति दृष्ट्वा वासुदेवस्तान् सेवकान् आदिशत्—“भवन्तस्तावत् सर्व्वे महापुरुषमेतं स्कन्धे आरोप्य मद्गृहं नयन्तु। भक्त्या तैस्तथा कृतम्। वासुदेवगृह आनीतः प्रभुश्चैतन्यं न लेभे। वासुदेवः श्रद्धया सेवमान आसीत् तथापि समाधिभङ्गस्तस्य चिरेण नाभूत्।

गोपीनाथाचार्य्यो नाम सार्वभौमस्य भामः प्रभोः प्रियभक्तः। स तत्रागत्य अवतारभूतस्य प्रभोः परिचयं कारयामास। अत्रान्तरे श्रीनित्यानन्दप्रभृतयः प्रभोर्गणाः मन्दिरमागत्य व्यापारञ्च ज्ञात्वा सार्व्वभौमगृहं तूर्णमुपतस्थिरे॥ भट्टाचार्य्यः सर्व्वान् सादरं सम्मानयति स्म। गृहाभ्यन्तरमानीताः सर्व्वे प्रभुं साक्षाद्दृष्ट्वा स्वस्था बभूवुः। वहिर्गत्वा ते श्रीजगन्नाथदर्शनं कृत्वा प्रसादमाल्यञ्च प्राप्य आप्यायिता

महाप्रभोः समीपमागत्य तं संवेष्ट्य सङ्कीर्त्तनं कर्तुं समारेभिरे। मूर्च्छादेव्या सेव्यमानः प्रभुः प्रहरत्रयेण संज्ञां लेभे। उत्थाय प्रभुर्भूरि आनन्दं विततान सार्व्वभौमस्तस्य पदधूलिमग्रहीत्। तस्मात् प्रभुश्चातुरीबहुलां विनयभङ्गीमुररीचकार।

समुद्रस्नानात् परं सभक्ताय प्रभवे प्रसादान्नभिक्षामयच्छत्। अतः परं मधुरसंलापोऽभूत्। सार्व्वभौमो व्यक्तमवदत्—"प्रेममयस्त्वं नु द्वितीयतः सन्न्यासी नु। अतस्त्वं मम पूजनीयोऽसि।" प्रभुणा विष्णुं स्मृत्वा अभाणि—"बालकोऽहं सर्व्वथा तव पालनीयः।" विदुषां मुकुटमणिः भक्तमोदमातन्वन् स श्रीगौराङ्गो मूर्च्छामलिनमाननचन्द्रं स्मितसुधया धारयन् यद्वदति तदमृतं वर्षति। लोचनद्वयं कारुण्यं वर्षति। भावावली पाषाणं द्रवयति। यतः प्रभुः सर्व्वगुणरत्नानामुदधिः। "सन्न्यासिनो धर्म्मो वेदान्तपाठ" इत्यभिधाय सार्व्वभौमः प्रभुं सप्ताहकालं वेदान्तं श्रावयामास। प्रभुस्तु केवलं शृणोति। सार्वभौमः सप्ताहशेषे पृच्छति—"मत्पठितस्य किञ्चित्त्वं बुध्यसे किमिति ?" विनयनम्रः प्रभुः प्रतिवक्ति—"मूर्खोऽहं मम अध्ययनं नास्ति, केवलं तव आज्ञया शृणोमि। तथापि सूत्रार्थमहं स्पष्टं बुध्ये न तु त्वत्कृतां व्याख्याम्। अभिधावृत्तिमुपेक्ष्य कथं लक्षणावृत्तिं करोषि ?

प्रमाणानां श्रुतिप्रमाणं परम्। वेदः स्वतःप्रमाणम्। व्याससूत्रस्यार्थः यथा सूर्य्यकिरणः। स्वकल्पितभाष्यमेघस्तमाच्छादयति। षडैश्वर्य्यपरिपूर्णः स्वयं भगवान्। तमेव त्वं निराकारं व्याख्यासीति किम् ? "निर्विशेषः" प्राकृतं निषेधति अप्राकृतं स्थापयति। अनन्तरं प्रभुः—

"आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः॥"

इति श्लोकस्य बहूनर्थान् श्रावयित्वा वासुदेवं विमोहयन् स्वकीयस्वरूपं

दर्शयति स्म। वासुदेवो विद्यार्णवस्य प्रभोः पादयोः पतितोऽस्तौत्। अन्यस्मिन्नहनि प्रेमपीयूषसुरभिः प्रभोः प्रभुर्जगन्नाथस्य शय्योत्थानं पश्यन् प्रसादं लब्ध्वा तमञ्चले बद्ध्वा द्रुतं सार्व्वभौमगृहमागतः कृष्ण-कृष्णेति उच्चारयंस्तं जागरयति स्म। प्रभुस्तस्य शय्यापार्श्वे उपविश्य अञ्चलबद्धं प्रसादमुन्मोच्य तस्य हस्तेऽर्पयामास। कृतार्थम्मन्यः स भट्टाचार्य्यो मुखप्रक्षालनं दन्तधावनञ्चाकृत्वा "प्राप्तिमात्रेण भक्षये"-दिति स्मृत्वा महाप्रसादमभक्षयत्। श्रीचैतन्यकृपया वेदधर्म्मरूपं जाड्यं तस्यापनीतम्। "अद्य कृष्णप्राप्तियोग्यमभूत्तव मनः" इति उदित्वा प्रभुः सानन्दं परिरभ्य वासुदेवं धन्यं चकार। उभौ परस्पर-माश्लिष्य भावावेशेनानृत्यताम्। अद्य वासुदेवस्य महाप्रसादे विश्वासोऽजायत। तद्दिनात् प्रभृति वासुदेवोऽभिमानशून्यः अमानो मानदः परमभक्तोऽभूत्। भारतभूमिः पाण्डित्यपर्व्वतचूड़ा धूलिविलुण्ठिताऽभूत्।

---

# सर्वप्रत्ययमाला

## द्वितीयोऽध्यायः

[ श्रीशङ्करार्य्यविरचिता ]

उक्ताः सप्तविभक्त्यर्था मालाः कर्त्तुमथारभे।
क्रियाक्रमानुसारेण कस्यचिच्चरितेन च ॥ १
दशाध्यायस्थ-भू-वादि सर्वधातुक्रियाक्रमम्।
उक्तः श्लोकाष्टकेनादौ प्रत्ययार्थोऽथ कथ्यते ॥ २
शतृ-शानच्-तुमुन्-क्त्वा-ल्यप् क्त-क्तवत्वादिसंज्ञकैः।
कृत्प्रत्ययैः कृता मालाश्चतस्रः स्युः क्रियाक्रमात् ॥ ३

शानचः सदृशा रूपे सन्त्यन्ये कानजादयः।
कानच्प्रयोगो वेदेषु सुषुवाण इतीदृशः॥ ४
शानचोऽर्थश्च ताच्छील्य-वयो-वचन-शक्तयः।
नन्दमानः सदा चन्द्रस्ताच्छील्ये समुदाहृतः॥ ५
उत्तिष्ठमानो मल्लालो वयस्येवमुदाहृतः।
पाषाणमपि भिन्दानो वज्रः शक्तावुदाहृतः॥ ६
शानचः सदृशत्वाच्च प्रयोगाल्पत्वहेतुतः।
चानशो न पृथङ्माला प्रयोगेष्वेव दृश्यताम्॥ ७
वर्तेते वर्तमानार्थे प्रत्ययौ शतृ-शानचौ।
स्यातां भविष्यदर्थे च तौ व्याप्तौ सर्वधातुषु॥ ८
शत्रन्तः कर्त्तरि ज्ञेयः शानच् कर्त्रादिषु त्रिषु।
अर्थसाम्यात् तयोरेका माला भवति सा यथा॥ ९
भवन्नुत्पद्यमानः सन् विद्यमानः सुतस्तव।
प्रादुर्भवन्नवतरन् जायमानः प्रियो नृणाम्॥ १०
उत्पादयन् प्रजनयन् भावयन्नवतारयन्।
णिचि निर्वर्तयन् पुत्रानच कर्ता प्रयोजकः॥ ११
सूयमानः सृजन् पुत्रान् रचयन्निर्मिमाणवत्।
उत्पत्स्यमानो गर्भात्तु बुभूषन् सनि णिच्यथ॥ १२
उत्पिपादयिषन्नन्यानुद्बिभावयिषन्नपि।
उत्पन्नोपद्यमानो यङ् भवेद् बोभूयमानवत्॥ १३
भूयमानो जायमानो यकि चोत्पाद्यमानवत्।
सूयमानः सृज्यमानः पुत्रो निर्मीयमाणवत्॥ १४
रंहमानश्चेष्टमानः स्वयमुत्सहमानवत्।
प्रवर्तमान आयस्यन् यतमानः प्रयोजने॥ १५
इङ्गन् व्याप्रियमाणश्चाऽऽयस्यन् बालो दिवानिशम्।
श्यनि यत्प्रत्यये जाते तत्र रूपं तु पूर्ववत्॥ १६

रंहयन् यतयन् पुत्रानिङ्गयंश्च प्रवर्तयन् ।
व्यापारयन् पिता पुत्रं णिचि चोत्साहयन्निति ॥ १७
विदधद् विदधानोऽनुतिष्ठन्नप्याचरंश्चरन् ।
कुर्वन् धर्मांश्च कुर्वाणः तन्वंस्तन्वान एव च ॥ १८
तानयन् कारयन् पुत्रैर्धर्मानेवं विधापयन् ।
आचारयंश्चारयंश्च समनुष्ठापयण्णिचि ॥ १९
विधित्सन्ननुतिष्ठासन् सदा धर्मानसौ सुतः ।
विधित्समानस्तु सनि स्याच्चिकीर्षमाणवत् (?) ॥ २०
एधमानो वर्धमानश्चायमुत्तिष्ठमानवत् ।
प्यायमानः स्फायमानः पुष्णन्नेतत् सकर्मकम् ॥ २१
अनुशासत् सुतं शिक्षन् पुनरन्येन शिक्षयन् ।
अक्षराणि लिखन् भूमौ वाचयन् पुस्तकं पुनः ॥ २२
पिताऽथ नयमानस्तमुपाध्यायान्तिकं वटुम् ।
पित्रापनीयमानः सन्नुपाध्यायवशो वटुः ॥ २३
अभिवादयमानस्तमुच्चरन् प्रणवं पुनः ।
अधीयानः स चतुरो वेदानप्यामनन् पठन् ॥ २४
अध्यापयन् पाठयंस्तं गुरुराम्नापयण्णिचि ।
पठ्यमानोऽधीयमानो वेदः स्वाम्नायमानवत् ॥ २५
वेदार्थे सन्दिहानोऽयं संशयानो विकल्पयन् ।
संशाययन् बहुविधं वटुं सन्देहयण्णिचि ॥ २६
विमृशंश्चिन्तयन् ध्यायन् ध्यायमानो निरूपयन् ।
परामृशंस्तर्कयंश्च नित्यमालोचयण्णिचि ॥ २७
विमृश्यमानश्चिन्त्यमानः कर्मण्यालोच्यमानवत् ।
निरूप्यमाणो मनसा ध्यायमानश्च कर्मणि ॥ २८
शिष्यं पर्यनुयुञ्जानः पृच्छंश्च परिचोदयन् ।
चोदयन् पृच्छयन्नन्यैः प्रत्यवस्थापयण्णिचि ॥ २९

तथाऽनुयुज्यमानोऽथ शिष्यैः कर्मणि पण्डितः ।
पृच्छ्यमानस्तोद्यमानः प्रत्यवस्थीयमानवत् ॥ ३०
ब्रुवन् ब्रुवाणोऽभिदधद् भाषमाणो भणन् वदन् ।
व्याहरन्नालपञ् शंसन् आचक्षाणो गदन् वचः ॥ ३१
गृणन् सङ्गिरमाणश्च कथयन् कीर्तयन्नपि ।
वर्णयन्नीरयन्नुच्चैर्वाचयन्नभिधापयन् ॥ ३२
व्याहारयन् वादयंश्च व्यक्तमाख्यापयण्णिचि ।
उच्यमानो भाष्यमाणः कर्मण्याख्यायमानवत् ॥ ३३
तथाऽभिधीयमानश्च भण्यमानस्तथैव च ।
कीर्त्यमानः कथ्यमानो गुरुणोदीर्यमाणवत् ॥ ३४
गद्यमानो वर्ण्यमानः शिष्यो व्यक्रियमाणवत् ।
अभिधित्सन् विभणिषन् विवक्षन् जनसंसदि ॥ ३५
तथाऽभिधित्समानश्च चिख्यासन् सनि कर्तरि ।
व्याचक्षाण उपन्यस्यन् योजयन् ग्रन्थमादरात् ॥ ३६
शिष्यैर्व्याख्यापयन् ग्रन्थं यकि व्याख्यायमानवत् ।
शृण्वन्नाकर्णयन् वाक्यं बुध्यन्निशामयंस्तथा ॥ ३७
चेतञ् जानन् परिच्छिन्दन्नवस्यन्नवयन् विदन् ।
कलयन्नवगच्छंश्च प्रतियन्नवयंस्तथा ॥ ३८
मन्वानो मन्यमानश्च जानानो बुध्यमानवत् ।
तथोपलभमानश्च संख्याननुभवन् द्रवन् ॥ ३९
ज्ञापयन् बोधयन्नर्थं वेदयन् प्रतिपादयन् ।
प्रत्याययंश्चेतयंश्च णिच्येवमुपलम्भयन् ॥ ४०
ज्ञायमानो वेद्यमानश्चेत्यमानस्तथैव च ।
अर्थः प्रतीयमानस्तैर्दृश्यमानस्तु कर्मणि ॥ ४१
बुभुत्समानो जिज्ञासमानो विविदिषन् सनि ।
तथोपलिप्स्यमानश्च यकि जिज्ञास्यमानवत् ॥ ४२

निश्चिन्वानश्च निश्चिन्वन् निर्णयन्नवधारयन् ।
निश्चीयमानो निर्णीयमानो यकि तु कर्मणि ॥ ४३

गर्वन् दृप्यन्नहङ्कुर्वन् अवलिम्पन् स्वविद्यया ।
तथाऽभिमन्यमानश्च माद्यन् राजकुमारकः ॥ ४४

पृथ्वीं पालयमानश्च गोपायन् परिपालयन् ।
रक्षन् शासन्नवन् भुञ्जंस्त्रायमाणो नृपस्ततः ॥ ४५

रक्षयन्नवयन्नन्यैः शासयन् पालयण्णिचि ।
पाल्यमानो रक्ष्यमाणः शास्यमानो जनो नृपैः ॥ ४६

सेव्यमानो जुष्यमाणः श्रीयमाणस्तु कर्मणि ।
पूजयन्नर्चयन् पश्चादर्चन्नाराधयन् नृपम् ॥ ४७

तथैवाऽर्चयमानस्तं वरिवस्यन् महीपतिम् ।
यजमानो यजन् देवं याजयन्निज्यमानवत् ॥ ४८

पूज्यमानोऽर्च्यमानोऽन्यैर्जनैराराध्यमानवत् ।
महीयमानोऽर्च्यमान इज्यमानश्च कर्मणि ॥ ४९

नमस्कुर्वन् प्रणिपतन् नमस्यन् प्रणमन् प्रणन् ।
प्रयोजकः प्रयत्नेन नमयन् प्रणिपातयन् ॥ ५०

यङि नंनम्यमानः स्याद् नम्यमानश्च कर्मणि ।
ईडमानो गुणं स्तोत्रैः प्रशंसन् संस्तुवन् नुवन् ॥ ५१

स्तावयन्नीडयन्नन्यैर्णिचि तत्र प्रशंसयन् ।
ईड्यमानः स्तूयमानो नूयमानस्तथैव च ॥ ५२

इच्छन्नभिलषन् वाञ्छन्नभिलष्यंश्च गृध्नुवन् ।
काङ्क्षन् कामयमानश्च काङ्क्षमाणश्च कन्यकाम् ॥ ५३

आशासानः श्रद्दधानोऽपेक्षमाणस्तथैव च ।
लुभ्यन्नुत्सुकयन् कन्यां वरः स्पृहयमाणवत् ॥ ५४

श्रद्धापयन् काङ्क्षयंश्च वाञ्छयण्णिच्यपेक्षयन् ।
लोभयन्नेषयन्नेवं भृशमास्थापयण्णिचि ॥ ५५

दूष्यमाणोऽपीष्यमाणः काङ्क्ष्यमाणश्च कर्मणि ।
काम्यमानो वाञ्छ्यमानो नृपेणाऽऽशास्यमानवत् ॥ ५६
नाथमानो भिक्षमाणः कन्यां प्रार्थयमानवत् ।
याचयन् भिक्षयन्नन्यैर्नाथयन् भिक्षयण्णिचि ॥ ५७
याच्यमानोऽर्थ्यमानश्च प्रोयमाणश्च कर्मणि ।
प्रदिशन् वितरन् कन्यां प्रयच्छन् ददर्पयन् ॥ ५८
निवेदयन् पिता तस्मै प्रहृष्टो निर्वपन् दिशन् ।
णिचि निर्वापयन्नन्यैर्दापयंश्च वितारयन् ॥ ५९
दीयमानाऽर्प्यमाणा सा दिश्यमाना च कर्मणि ।
प्रदित्सन्नर्पिपयिषन् निर्विवप्सन् भवेत् सनि ॥ ६०
अश्नुवानश्च विन्दानो लभमानस्त्ववाप्नुवन् ।
स्वीकुर्वन्नाददानश्च कन्यां नृपतिसत्तमः ॥ ६१
लभ्यमानो गृह्यमाणः कर्मण्यादीयमानवत् ।
अर्ज्यमानोऽनिशं लोकैरर्थं स्वीक्रियमाणवत् ॥ ६२
हरन्नपहरन् मुष्णन् निशि चोरयमाणवत् ।
मुष्यमाणश्चोर्यमाणस्तथाऽपक्रियमाणवत् ॥ ६३
अलङ्कुर्वन्नलङ्कारैर्मण्डयन् भूषयन् जनः ।
मण्ड्यमानो भूष्यमाणस्तथाऽलङ्क्रियमाणवत् ॥ ६४
णिच्यलङ्कारयन्नन्यैर्भूषयन् मण्डयन्निति ।
वसानो वासयन् वस्त्रं वरः परिदधत् स्वयम् ॥ ६५
दधद् दधानो बिभ्राणः प्रबिभ्रद् धारयन् वहन् ।
वस्यमाना धीयमाना माला तेन तु कर्मणि ॥ ६६
चन्दनेनाऽनुलिम्पंश्च रूषन् देहं तथा च्छुरन् ।
प्रकाशमानो भान् दीप्यन् भ्राजमानः श्रिया ज्वलन् ॥ ६७
भासमानः शोभमानो द्योतमानस्तथा वरः ।
चकासत् काशमानश्च रोचमानो लसन् कसन् ॥ ६८

राजमानस्तथा राजा दीप्यमानः पुमानसौ।
शोभयन् भासयन्नेवं द्योतयंश्च प्रकाशयन् ॥ ६९
काशयन् रोचयन्नन्यैर्भ्राजयन् राजयण्णिचि।
वीजयन् पवमानो वान् पावयन् वाययण्णिचि ॥ ७०
वायुः सन्धुक्षमाणोऽग्निं वीजयन् धुक्षयण्णिचि।
दीप्यमानो ज्वलन्नग्निः दीपयन्…"(?)णिचि ॥ ७१
आज्यं विद्रावयन्नग्निं स्रुवेणाथाऽभिघारयन्।
उपस्तृण्वंस्तथा लाजान् याजयन् कन्यया तथा ॥ ७२
यजमानो यजन् जुह्वत् वषट्कुर्वंश्च मन्त्रयन्।
इज्यमानो ह्वयमानो ह्वावयन् याजयण्णिचि ॥ ७३
भस्मीकुर्वन् दहन् प्लुष्यन्नोषन्नग्निर्हुतं हविः।
दाहयन् प्लोषयन् होता दह्यमानस्तु कर्मणि ॥ ७४
पणमानो वणिक् क्रीणन् विक्रीणानोऽर्थसञ्चयम्।
यक्ति विक्रीयमाणः स्यात् पण्यमानस्तथैव च ॥ ७५
पचमानः पचन्नन्नं पाचयन् पच्यमानवत्।
चरुं तु श्रपयन् भूयः कषायं क्वाथयन्नथ ॥ ७६
भर्जन् भृज्जन् घटे धान्यमुपदंशं तु शोषयन्।
अशनायन् जनः क्षुभ्यन्नतिथिः समुपागतः ॥ ७७
उदन्यन्नुक्षवं श्रुत्वा तुष्यन्नर्कौ यदा तपन्।
ततोऽभ्यवहरन्नश्नन् भुञ्जानश्चाहरन् जनः ॥ ७८
गिलन् कवलयन् ग्रासं त्वरितो निगिरन् ग्रसन्।
भोजयन्नाशयन् विप्रान् हृष्टमभ्यवहारयन् ॥ ७९
ओदनो भुज्यमानस्तैरभ्यवह्रियमाणवत्।
प्रत्यवस्यन्नदन् भक्षन् भक्षयंश्चर्वयंश्चरन् ॥ ८०
खादन् दंशन्नसौ दन्तैरुपयुञ्जान एव च।
खादयन्नादयन्नन्यैर्दंशयन्नुपयोजयन् ॥ ८१

भक्ष्यमाणोऽश्यमानश्च खाद्यमानश्च कर्मणि ।
लिहन्नास्वादयंस्तत्र लेहयल्लिँह्यमानवत् ॥ ८२
धयन् पिबन्नथाऽऽचामन् पाययन् पीयमानवत् ।
पूरयन् पारयन् दृभ्नन् कुक्षिमाप्याययन् दृढम् ॥ ८३
पूर्यमाणः पार्यमाणः कुक्षिराप्याययमानवत् ।
साक्षात्कुर्वन्नीक्षमाणः पश्यन्नालोकयन् मिषन् ॥ ८४
दृश्यमानः प्रेक्ष्यमाणः कर्मण्यालोक्यमानवत् ।
आलोकयन् पिता कन्यां दर्शयन्नीक्षयण्णिचि ॥ ८५
तथैवाऽऽलोकयन् भूयः प्रेक्षयंश्च निशामयन् ।
मूर्ध्नि शिङ्खन् मुखं चुम्बन् जिघ्रन् गन्धमनुत्तमम् ॥ ८६
आघ्रापयंश्चुम्बयंश्च चुम्ब्यमाना तु कर्मणि ।
आलिङ्गन् गाढमाश्लिष्यन्नुपगूहन् परिष्वजन् ॥ ८७
आश्लेषयन् प्रयत्नेन प्रियया परिरम्भयन् ।
आलिङ्गयन् दृढं कामो कराभ्यामुपगूहयन् ॥ ८८
कान्तयाऽऽलिङ्ग्यमानोपगूह्यमानस्तथैव च ।
सम्परिष्वज्यमानश्चाऽऽश्लिष्यमाणश्च कर्मणि ॥ ८९
त्रपमाणो लज्जमानो व्रीडन् जिह्रन् वधूजनः ।
ह्रेपयन् लज्जयन् कान्तां ह्रापयन् णिचि वर्तते ॥ ९०
विहरन् रममाणश्च क्रीडन् दीव्यंस्तया सह ।
रमयन् क्रीडयन् कान्तां देवयंश्च विहारयन् ॥ ९१
तुष्यन् प्रहृष्यन्नानन्दन् मोदमानश्च तृप्नुवन् ।
आनन्दयन् मोदयंश्च प्रियामाह्लादयन् प्रियः ॥ ९२
तोषयन् हर्षयन्नेवं प्रीणयन् पतिमादरात् ।
निर्वृंखंस्तर्पयन् धिन्वन् ह्लादयन् सकलं जनम् ॥ ९३
स्वपञ्छयानो निद्रांश्च शाययन् स्वापयन् प्रियाम् ।

उन्मीलन्निमिषंश्चक्षुर्नृणामभ्युदिते रवौ।
विकचन् विकसन् पद्मस्तथा फुल्लन् स्फुटन्नपि ॥ ९५
फुल्लयन् स्फोटयन्नर्कः पङ्कजानि विकासयन्।
विसृजन् व्यासृजन् मुञ्चन् मुञ्चमानो विसर्जयन् ॥ ९६
प्रहिण्वन् प्रेषयन् दूतं नियुञ्जानः समादिशन्।
आज्ञापयन् नृपो भृत्यांश्चोदयन् प्रेरयन् नुदन् ॥ ९७
क्षिपन् क्षिप्यंस्तथैवाऽस्यन् निरस्यन् पृथिवीपतिः।
अपह्नुवानोऽपलपन् निराकुर्वन्नरिं सदा ॥ ९८
त्यजन्नुज्झन् पराकुर्वन्नपोहन् वर्जयन् जहत्।
णिचि व्यादेशयन्नेवं मोचयंश्च वियोजयन् ॥ ९९
नोदयन्नाययन्नन्यैः प्रेषयंश्च निवारयन्।
त्याजयन् हापयन्नेवमुज्झयंश्च व्यपोहयन् ॥ १००
नियुज्यमानो भृत्यश्च प्रेष्यमाणश्च कर्मणि।
हीयमानस्त्यज्यमानो मुच्यमानस्तथैव च ॥ १०१
नुद्यमानः प्रेर्यमाणो दूतः सञ्चोद्यमानवत्।
अन्वेषयन् विचिन्वानो विचिन्वंश्च गवेषयन् ॥ १०२
वने मृगयमाणश्च मार्गमाणो मृगानसौ।
अन्विष्यमाणो विपिने मृग्यमाणो मृगो जनैः ॥ १०३
राजाऽथ क्रममाणोऽसौ गन्तुमारभमाणवत्।
सन्नह्यमानः सन्नह्यन् सैन्यैः प्रक्रममाणवत् ॥ १०४
आमुञ्चन् कलयन् बध्नन् मुञ्चमानो दृढं भयात्।
रहयन् बन्धयन्नन्यैर्दृढमामोचयन् णिचि ॥ १०५
बध्यमानो नह्यमानः कर्मण्यामुच्यमानवत्।
आतिष्ठन् रथमारोहन्नधिरोहन् नृपस्ततः ॥ १०६
आरोहयन् णिचि पुनः कर्मण्यारुह्यमाणवत्।
प्रतिष्ठमानः स्वपुरात् प्रयान् निर्यान् मनाग्बलम् ॥ १०७

प्रस्थापयन् प्रयत्नेन शिचि निर्यापयन् जनान् ।
ऋच्छन् गच्छन् व्रजन्नश्नन् सर्पन् ना प्राप्नुवन् सरन् ॥ १०८

---

## मनसा-पूजनम्

[ निबन्धकः—श्रीमणीन्द्रनाथ-चक्रवर्त्ती ]

पुरा किलास्मिन् पुण्यदेशे भारतवर्षे धर्म्मप्राणा आर्य्याः सर्व्वे वेदानुमोदितानां मखानामनुष्ठानेनात्मनां प्रजानाञ्च मङ्गलं मह-च्चक्रुः । अधुनापि तेषां पुण्यश्लोकानामार्य्याणां पुत्त्रास्तादृश्या रीत्या धर्म्मानुष्ठानानि विविधानि कुर्वन्ति । वैचित्र्यमयीमिमां प्रकृतिं परितो विविधभावेन भगवतोऽस्तित्वमनुभूय एकं ब्रह्म द्वितीयं नास्तीति जानन्तोऽप्यार्य्या बहूनां देवानां सृष्टिमकुर्व्वन् । विप-न्मुक्तये, सुखलाभाय, रोगशोकादीनाञ्च विनाशाय शश्वदेव ते भगवन्त-माराधयामासुः । तदर्थमनेकासां पूजानां सृष्टिः सञ्जाता । प्रका-रेणानेन यानि पूजनानि प्राचीनकालादारभ्य यावदिदानीमपि प्रच-लितानि सन्ति, मनसार्च्चनं तेषामेकतमम् ।

कस्मिन् काले मनसार्च्चनस्य सृष्टिरभूत्, इदं पुनः वेदानु-मोदितं न वा, वङ्गविषयादृते देशान्तरेष्वस्य प्रचलनं किमस्ति नास्ति वा, एतेषु विषयेष्वैकमत्यं न परिदृश्यते । श्रुत्यामनेकासां देवतानां नामानि श्रूयन्ते, किन्तु मनसादेव्यास्तस्यामुल्लेखोऽपि नास्ति । अस्ति सर्पवेदाख्यः कश्चिद्ग्रन्थः । परमसौ लुप्तप्रायः । गरुड़ोपनिषदि लिखितमस्ति यन्मुनयः सर्व्वे आशीविषाणां विषविनाशार्थं गरुड़-माह्वयन्ति स्म ।

"अनन्त-वासुकि-तक्षक-कर्कोटक-पद्मक-महापद्मक-शङ्खक-गुलिक-

पौण्ड्रकालिक-नागक इत्येतेषां दिव्यानां महानागानां हतं विषं नष्टं विषमन्तः प्रलीनं विषं प्रनष्टं विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा।"—गरुडोपनिषत्।

मनसापूजायां येषां नागानां पूजा क्रियते, अस्यामुपनिषदि सर्व्वेषां तेषां नामानि दृश्यन्ते। सम्भावयामि खलु कालादस्मादेव नागानां ततो नागमातुर्मनसादेव्याश्च पूजा प्रचलिताभूत्। अस्या वेदानुमोदितत्वे संशयलेशोऽपि नास्ति। यतः पुराणेऽपि अस्या नाम दृश्यते। पुराणरचयितारः सर्वे आसन् वेदज्ञाः। धर्म्म-प्राणैर्वेदज्ञैर्वेदबहिर्भूतायाः पूजायाः समर्थनं सम्भाव्यमिति नाहं मन्ये।

कथं, केन वा प्रकारेण मनसापूजायाः प्रचलनमभूत्तदहमधुना कथयामि,—ब्रह्मवैवर्त्तपुराणस्य प्रकृतिखण्डे षट्चत्वारिंशाध्याये वक्ष्य-माणाः श्लोका वर्त्तन्ते।

> पुरा नागभयाक्रान्ता बभूवुर्मानवा भुवि।
> यान् यान् खादन्ति नागाश्च न ते जीवन्ति नारद॥
> मन्त्रांश्च ससृजे भीतः कश्यपो ब्रह्मणार्थितः।
> वेदबीजानुसारेण चोपदेशेन ब्रह्मणः॥
> मन्त्राधिष्ठातृदेवीं तां मनसां ससृजे ततः।
> तपसा मनसा तेन बभूव मनसा च सा॥

अतो वयं जानीमो यत् ब्रह्मोपदेशादृषिवरः कश्यपो वेदबीजा-नुसारेण मन्त्रान् संसृज्य योगप्रभावेण मनसामसृजत्।

यस्मिन् समये अस्माकं देशे मनसापूजा भवति, तदपि पुराणे-ऽस्मिन् उल्लिखितमस्ति। पुराणस्यास्य पूर्व्वोक्तेऽध्याये यक्षेवराजः शतक्रतुर्मनसादेवीं वाचमिमामुवाच—

> ये त्वामाषाढसंक्रान्त्यां पूजयिष्यन्ति भक्तितः।
> पञ्चम्यां मनसाख्यायामिषान्ते वा दिने दिने॥

पुत्रपौत्रादयस्तेषां वर्द्धन्ते च धनानि च।
यशस्विनः कीर्त्तिमन्तो विद्यावन्तो गुणान्विताः॥

* * * *

तपसा तेजसा त्वाञ्च मनसा ससृजे पिता।
अस्माकं रक्षणायैव तेन त्वं मनसाभिधा॥

पुराणमिदमधीत्य जानीमो वयं यदादौ कृष्णेन पश्चात् शङ्करेण ततः कश्यपेन ततो मनुना नाग-मानवाद्यैश्च मनसादेवी पूजिताभवत्। मुनिपुङ्गवो जरत्कारुस्तामुपयेमे।

प्रथमे पूजिता सा च कृष्णेन परमात्मना।
द्वितीये शङ्करेणैव कश्यपेन सुरेण च॥
मनुना मुनिना चैव नागेन मानवादिना।
बभूव पूजिता सा च त्रिषु लोकेषु सुव्रता॥
जरत्कारुमुनीन्द्राय कश्यपस्तां ददौ पुरा।
अयाचितो मुनिश्रेष्ठो जग्राह ब्राह्मणाज्ञया॥

ब्रह्मवैवर्त्तपुराणं प्रमाणं चेत्तदा मनसापूजापि सुप्राचीना। किन्त्वेतस्मिन् विषये ब्रह्मवैवर्त्तपुराणस्य प्रामाण्यं सर्व्वे न मन्यन्ते। कलिकाता-विश्वविद्यालयस्य सुप्रवीणोऽध्यापको माननीयः श्रीदीनेश-चन्द्रसेनमहोदयो ब्रह्मवैवर्त्तपुराणस्य प्रामाण्यं नानुमन्यते। स आह—स्पर्शमणेरिव संस्कृतवचनस्य प्रभावेण लोष्टखण्डमपि देवत्वमाप्नोति। तस्मात् ब्रह्मवैवर्त्तपुराणे मनसादेव्या माहात्म्यं समासेन लिखित्वा ब्राह्मणैर्वङ्गीयपद्मपुराणं दृढीभूतमकारि। अनया उक्त्या स्पष्टमेव प्रतीयते यन्मनसामङ्गलाख्यो वङ्ग-भाषया लिखितो ग्रन्थो ब्रह्मवैवर्त्तपुराणात् प्राक् विरचितोऽभूत्। यतो मनसाविषयकेभ्यः पुस्तकेभ्यो मनसामङ्गलमेव प्राचीनतमम्। पद्मपुराणञ्च तस्मात् परवर्त्ति। ब्रह्मवैवर्त्तपुराणस्य विषयोऽयं मनसामङ्गलाद् गृहीतश्चेत् तदा अवश्यमेव पुराणस्यास्य रचनकालो

मनसामङ्गलरचनकालात् परवर्त्ती भवेत्। तस्मादौ मनसामङ्गल-रचनायाः कालनिर्णये यतितव्यमस्माभिः।

स्वर्गतेनाध्यापकेन श्रीयाङ्कमोहनसेनेन लिखितम्—चतुर्दशशां खिष्टीयशताब्द्यां हरिदत्तो मनसामङ्गलं विरचितवान्। दीनेशचन्द्र-स्त्वाह—हरिदत्तो द्वादशशताब्द्यां ग्रन्थमिमं चकार। यद्येतत् सत्यं, तदा ब्रह्मवैवर्त्तपुराणं त्रयोदशशताब्द्यां तस्याः परवर्त्तिनि काले वा लिखितं बभूवेति प्रतीयते। किन्तु नैतत् सत्यम्। प्रथित-यशसा साहित्यिकप्रवरेण स्वर्गतेन बङ्किमचन्द्रचट्टोपाध्यायेन ‘कृष्ण-चरित’ग्रन्थे लिखितम्—

इदानीं यद् ब्रह्मवैवर्त्तपुराणमस्माभिः परिदृश्यते, प्राचीनाद् ब्रह्मवैवर्त्तपुराणाद्भिन्नमप्येतदेकादशशताब्द्याः प्राक् विरचितं बभूव। यतो गीतगोविन्दकारः श्रीजयदेवो गौड़ाधिपतेर्लक्ष्मण-सेनस्य सभापण्डित आसीत्। द्वादशशताब्द्यां लक्ष्मणसेनो महीं भुनक्ति स्म। इदानीमुपलभ्यमानस्य ब्रह्मवैवर्त्तपुराणीयश्रीकृष्णजन्म-खण्डस्य पञ्चदशोऽध्यायश्चेत्तस्मिन् काले प्रचलितो नासीत्तदा गीतगोवि-न्दस्य प्रथमश्लोकस्य “मेघैर्मेदुरमम्बर”मित्यादे रचनम् असम्भवमेव स्यात्। अत एवोपलब्धस्य पुराणस्यापि रचनकाल एकादशशताब्द्याः प्राक्।

अतो वयं पश्यामो यत् ब्रह्मवैवर्त्तपुराणोक्तो मनसार्च्चनविषयो मनसामङ्गलान्न गृहीतः। प्रश्नस्त्वत्र भवितुमर्हति, ब्रह्मवैवर्त्तपुराणस्य मनसार्च्चनविषयस्याप्रच्छिन्नत्वे किं प्रमाणम्? उत्तरञ्च जायते—यद्येष विषयो मनसामङ्गलाद् गृहीतस्तदा कथमुभयोर्मध्ये पार्थक्यं दृष्टम्? अनुकरणे तावत् सादृश्यमेव स्यात्, कथमत्र वैपरीत्यम्? मनसामङ्गले चन्द्राख्यस्य वणिजः, लखिन्दरस्य, वेहुलायाश्च विषय उल्लिखितः। ब्रह्मवैवर्त्ते तेषामुल्लेखोऽपि नास्ति। मनसामङ्गलस्य मनसा शिवदुहिता ब्रह्मवैवर्त्तस्य मनसा कश्यपस्य मानसी कन्या।

महाभारतोक्ताख्यानेन सह ब्रह्मवैवर्त्तोक्ताख्यानस्य सादृश्यमस्ति। उक्तञ्च महाभारते यत्, मातुरादेशादास्तोकः सर्पाणां रक्षणार्थं राज्ञो जनमेजयस्य यज्ञस्थलमियाय। मनसामङ्गले आख्यानमिदं नास्ति। ब्रह्मवैवर्त्ते तु एतद्विराजते। पुराणस्य षट्चत्वारिंशाध्याये लिखितमस्ति—

> तत आस्तीक आगत्य यज्ञञ्च मातुराज्ञया।
> महेन्द्र-तक्षकप्राणान् ययाचे भूमिपं वरम्॥
> ददौ वरं नृपश्रेष्ठः कृपया ब्राह्मणाज्ञया।
> यज्ञं समाप्य विप्रेभ्यो दक्षिणाञ्च ददौ मुदा॥

महाभारते लिखितमस्ति यन्नागमाता कश्यपात्मजा, आस्तीकस्य माता, वासुकेः स्वसा, जरत्कारोश्च भार्य्या। एतस्मिन् विषयेऽपि ब्रह्मवैवर्त्ते सादृश्यं दृश्यते। ततो निःसंशयो ब्रवीमि यदेतद्विषयो महाभारताद् गृहीतः। अतः पश्यामो वयं यदेतदंशः प्रक्षिप्तोऽपि न भवति। किन्तु महाभारते नागमातुर्नाम जरत्कारुर्न तु मनसा। कारणञ्चात्र विद्यते। जरत्कारवे स्वसारं समर्पयितुमिच्छता वासुकिना श्रुतं यत् सनामधेयां विना नारोमपरां जरत्कारुर्नोपयंस्यते। ततः स्ववाञ्छां पूर्णतामानेतुं वासुकिः स्वसुरेतन्नाम चकार इत्यनुमीयते।

अपरः प्रश्नश्च भवति। मनसामङ्गलस्य देव्या मनसया सह शास्त्रोक्ताया मनसायाः किं कश्चित् सम्बन्धः अस्ति नास्ति वा। नास्ति चेत्तदा भिन्नाख्यानस्य उत्पत्तेः को हेतुः? उत्तरञ्च जायते—उभयोर्मध्ये वस्तुतस्तु सम्बन्धः कोऽपि नास्ति। एकस्मिन् काले शाक्तवैष्णवयोः शाक्तशैवयोश्च मध्ये महान् कलहः सञ्जातः। सर्व्वे स्वस्वधर्म्मस्य श्रेष्ठत्वं प्रतिपादयितुं चचेष्टिरे। तदर्थं ते आख्यानानि बहूनि रचितवन्तः। शाक्तवृन्दं स्वधर्म्मस्य प्राधान्यं प्रतिपादयितुं रामचन्द्रेण दशभुजाया अर्च्चनामचीकरत्। कृत्तिवासस्य रामायणे

रामचन्द्रेण दुर्गायाः पूजनस्य यद्विवरणमस्ति तदेवास्मात् कलहात् सञ्जातमिति मन्ये। वाल्मीकिरामायणे चैतन्नास्ति। अनया रीत्या ग्रास्त्रगणो बेहुलाया विवरणं रचयित्वा भूयोऽपि स्ववाञ्छां पूर्णता-मानेतुमचेष्टिष्ट।

सम्यक् पर्य्यालोच्य वयं पश्यामो यन्मनसापूजा शास्त्रोक्ता वेदानु-मोदिता च। श्रीदीनेशचन्द्र-सेनमहोदयेन कथमस्याः पूजायाः श्रेष्ठत्व-मस्वीकृतं नाहं तदवगन्तुं शक्नोमि। अन्यत्र तु, सेनमहोदयः कथ-यति—मनसादेवी वङ्गदेशीयानां देवता, स्त्रियश्चास्याः पूजायां पौरो-हित्यं कुर्व्वन्तीति।

एतन्मतं समर्थयितुं कः शक्तः? स्त्रीणां मध्ये मनसादेव्या या पूजा प्रचलितास्ति तया सह शास्त्रोक्तस्य पूजनस्य सम्बन्धः कोऽपि नास्ति। इयं पूजा कस्यचित् क्षुद्रसम्प्रदायस्य मध्ये प्रचलिता, बहुभिर्लौकिकैश्चाज्ञातैव। अस्यां बौद्धधर्म्मस्य प्रभावो दृश्यते। अस्माकं देशे योषितां मध्ये मनसादेव्या यदाख्यानं प्रचलितमस्ति तेन सहाप्यस्याः पूजायाः सादृश्यं नास्ति किमपि। एतस्मिन् देशे नागपञ्चम्यां मनसादेव्या या पूजा भवति, तस्यां ब्राह्मणा एव पौरोहित्यं कुर्व्वन्ति, न तु योषितः।

आर्य्याणां पूजाङ्गीभूत उत्सवोऽप्यस्ति। तस्मिन्नुत्सवे स्त्रियः पुरुषाश्च हर्षमनुभवन्ति। नेपाले मिथिलायाञ्च महोत्सवैः सह मनसापूजा क्रियते।

सर्व्वमिदमालोच्य दृश्यतेऽस्माभिर्यन्मनसार्च्चनं भारतवर्षस्य सर्व्व-स्मिन्नेव प्रदेशे भवति। एतच्च शास्त्रानुमोदितं प्राचीनञ्च। वङ्ग-देशीयानां कवीनां सुन्दराण्याख्यानानि मनसापूजायाः प्राधान्यम् अभिभवितुं न समर्थानीति मन्ये॥

ॐ आस्तीकस्य मुनेर्मात्रे भगिन्यै वासुकेस्तथा।
जरत्कारुमुनेः पत्न्यै मनसादेवि नमोऽस्तु ते॥

# कः पन्थाः ।

[ निबन्धकः—श्री······ ]

"रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां" मानवानां सर्व्वत्रैव विरुध्यन्ते मतयो विषयेष्विति प्रत्यक्षसिद्धमिदम्। केचित् सरलता-मभिष्टुवन्ति, अन्ये पुनर्निर्बुद्धिताप्रसूता सेत्युपहसन्ति। नियतमावश्यक-मिति शारीरबलमुपासीनाः केचनान्यैः कृषीवलायमानाः खल्वमी दुरन्तव्यवसाया इत्यवहस्यन्ते। बृहत्संहननस्याप्यसितवपुषो वर्ण-हीनतामेके जुगुप्सन्ते, प्रतिवादिनः पुनर्व्वर्णप्रकर्षमनुष्यमाणाः संस्थानाद्यं बहुमन्यन्ते। एवमेव केचिदद्यतने काले, निर्व्वा-सनदण्डितायां सर्व्वतन्त्रस्वतन्त्रतायां किञ्चित्तन्त्रस्वतन्त्रतामात्य-न्तिकश्रेयःसाधनत्वेनावदधते, प्रतिपक्षाः पुनः सर्व्वतन्त्रस्वतन्त्रतामभि-वादयन्तोऽपि किञ्चित्तन्त्रस्वातन्त्र्यं कूपमाण्डूक्यमित्युपहसन्तः पल्लवग्राहित्वं बहुमन्यन्ते।

इत्यमुत्थिते प्रतिपक्षविक्षोभे हानोपादानाभ्यामभिसृष्टान् कांश्चिद् विषयान् नैकान्त्येन कान्तानवलोकयामः। तत्तन्मतावलम्बिनस्तु स्व-प्रतिभासमुद्भावितां युक्तिपरम्परां परिगृह्य वादं प्रवर्त्तयन्तः स्वावलम्बितं मतं दृढयन्ति। श्रोतारः पुनरुभयोर्मतयोः सारवत्तामुभाभ्यामुपक्षिप्तां सममेव प्रतिपद्य कर्त्तव्याकर्त्तव्ययोरनीशाः प्रज्ञाभिदमनिश्चयमश्नुवाना विमनायन्ते। शक्नुवन्ति च प्रतिभानवन्तो रजनीमपि प्रभातयितुं प्रभातञ्च क्षपयितुमनायासेन। किञ्चित्तन्त्रस्वतन्त्रतायां दोषदर्शिन-स्त्वेवमाहुः—कालवशादिदानीमेकस्मिन् विषये प्रगाढपाण्डित्यं जीविकां जीवनिकायं वा नैवोपकुरुते। प्राचीनकाले शैलकाननादि-स्थानमधिवसतामाजीवनिरपेक्षाणां नृपप्रेक्ष्याणाञ्च प्राचामेकस्मिन् शास्त्रे प्रगाढबुद्धयः प्रशस्तिशय्यामधिशय्य निरुपद्रवां निद्रामनु-भवन्तु, अनुभवन्तु नाम तेषामाजीविका विपाकरम्याणि शस्यानि

चेत्रपतितानि कृषीवलैरुपेचितानि। किन्त्वद्यतने काले तथाविधयैकशास्त्रनिष्णातया धिया जीविका जनप्रशस्तिर्वा नैवात्मप्रतिष्ठामुपार्जयितुमर्हति। किञ्चातीतकाले केवलमेकशास्त्रनिष्ठापि नैवोपातिष्ठत् प्रशस्तिमित्यपि प्रत्युत्पन्नबुद्धयः प्रतिपादयन्ति। किञ्चिच्छास्त्रपरिनिष्ठितबुद्धेर्हैद्धनैयायिकस्य स्वभार्य्याव्रतचर्य्यावसरे गोत्रजिज्ञासा प्रसिद्धैव, प्रसिद्धा च "नन्वेकगोत्रैवाहं भवता" इति स्वभार्य्ययाभिहितस्य तस्य न्यायनीरन्ध्रबुद्धेः—"किं नामैकगोत्रा मे भवती? किमहं सगोत्रामुदूढ़वान्" इति बहिरर्थबहिर्मुखा भारती। न तावन्नेयं बुद्धिरेकशास्त्रनिष्ठायाः फलमित्यपि प्रतिवक्तव्यं, लोके ह्येकान्तिकबुद्धयः सर्वतो दृष्टिमाकृष्यानुशीलयितव्यविषयेष्वेव तामुपस्थापयन्ति, विच्छिन्नबुद्धयः पुनर्विक्षेपविभवेन कस्मिन्नप्येकान्त्यमनुपलभमानाः प्रातिस्विकविषये स्वां मनीषां व्यापारयितुमीशते। तेन चैकनिष्ठाः केवलमेकस्मिन्नेव विषये पाटवमनुविन्दन्ते विच्छिन्नबुद्धयस्तु तेषु तेष्विति। यच्च—

> "आजीव्यैकतरं भावं यस्त्वन्यमुपजीवति।
> न तेन विन्दते क्षेमं जारं नार्य्यसती यथा॥"

इत्युक्तं भगवता कृष्णद्वैपायनेन वृष्णिकुलचन्द्रमसः कृष्णचन्द्रस्य वक्त्रारविन्दमुखेन, तज्जात्यपेक्षयेति प्रज्ञावधिरूपं समादधतामाधुनिकानां किंवा प्रतिवचनमुपस्थापयितव्यम्। तदिदमाधुनिकमतम्।

प्राचीनभावानुभावितचेतसस्तु सर्वतन्त्रस्वतन्त्रतायामनियन्त्रितमतिगाढ़ं प्रेमाणं बिभ्राणा रज्जुभ्रमेणाहिमिव स्वतन्त्रतानामभ्रमेण किञ्चित्तन्त्रस्वतन्त्रतामवलम्बन्ते। ते त्वेवं ब्रुवते, बलिभुगवृत्तयः केचिदितस्ततः पुस्तकेषु चञ्चुभिः किञ्चिद् विलिख्य यदात्मनः सार्व्वज्ञमर्वाचीना अपि प्रचिख्यापयिषन्ति तदयं नूनं नाभिमृष्यामहे। एवमेतेषां शास्त्रज्ञानमज्ञानापरपर्य्यायं कस्मिन्नपि शास्त्रे नान्तः प्रविशद् विवादाय केवलं सम्पद्यते। वरमेकस्मिन् शास्त्रे प्रगाढ़वैदुष्यं

सर्वतोदिश्यमशेषोपकारं संसाधयितुमर्हति, न पुनर्विविधशास्त्रे किञ्चिज्ज्ञता विज्ञजनोपहास्या किमपि फलमुत्पादयति। परमेकशास्त्रगामिन्यान्तःप्रविशन्त्या प्रगाढ़धिषणयाशेषाण्यपि शास्त्राण्यधिगम्येरन्निति।

विद्यायाः प्रयोजनीयता तावत् सांसारिकदशायां विशेषेणानुभूयते। तत्र हि ख्यातिविशेषलिप्सया, धनोपार्जनविधित्सया चेतोमलनिराचिकीर्षया च सा समुपास्यते साधारणैः। एते च विषयाः जनानुरञ्जनफलकतयैव प्राणिनः समुपासितुं प्रवर्त्तन्ते। तत्र च यादृग्रूपया तया तोषमनुभवन्ति स्वान्तवन्तस्तादृग्रूपैव सा विद्या समधिकर्त्तुं युज्यते प्रज्ञावद्भिः। पारमार्थिकदशायान्तु तथाविधाया विद्यायाः स्वल्पमेव प्रयोजनमनुपश्यामः। एतच्चोक्तापलालादिदृष्टान्तेनाभियुक्तैर्मोक्षोपदेशकशास्त्रे निर्दिष्टं—

"शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः।
परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत्॥
ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः।
पलालमिव धान्यार्थी त्यजेद् ग्रन्थमशेषतः॥" इति

अत्र च ग्रन्थपदेन शास्त्रं प्रतिपाद्यते, नतु लेखपुटम् 'अभ्यस्य' पदान्वयवैधुर्य्यप्रसङ्गात्, प्रक्रमेऽपि तथा प्रतिपादनात्। सर्वतन्त्रस्वतन्त्रताप्यस्यां दशायां नोपकारिणीति प्रतिपद्यतेऽस्माभिः—

"तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः।
नानुध्यायाद् बहूञ्छब्दान् वाचो विग्लापनं हि तत्॥

इत्यत्र बहुशास्त्राध्ययनस्य वाग्विग्लापकत्वाभिधानात्। तस्मात् सर्वतन्त्रस्वतन्त्रतायाः किञ्चित्तन्त्रस्वतन्त्रतायाः पल्लवग्राहिपाण्डित्यस्य च प्रवेशः सांसारिकदशायां, प्रयोजनञ्च लोकसन्तोषसंसाधनमिति प्रेक्षावतामुपक्षेपः।

तदेवमुपख्यापितास्माभिः पल्लवग्राहिपाण्डितस्य कूपमाण्डूक्यापर-

नामधेयायाः किञ्चित्तन्त्रस्वतन्त्रतायाश्च युक्तिहानोपादानयोः, स्वकीया-भिमतिस्तावन्नै वादर्शि प्रबन्धेऽस्मिन्। वयं पुनर्विस्मयविमूढ़ाः कं पन्थानं समधिरुह्य गुणग्रह्याणां सन्तोषमुत्पादयितुमर्हाम इति न जानीमः। पश्यामः पल्लवग्राहिपाण्डित्यस्य फलं महत्पदमास्थितानां मासि मास्युपार्जितं प्रभूतं धनं, पश्यामः किञ्चित्तन्त्रस्वतन्त्रतामभिनि-विशमानानामनितरसाधारण्यां तद्विषयकपाण्डित्यसम्पत्तावप्यन्यस्मिन् शास्त्रे मूकायमानतामर्थदैन्यञ्च। पद्मान्तरे पुनरनुभवामः पल्लव-ग्राहिपाण्डित्यमुपासीनानां पण्डितसदसि प्रतिपन्नासनानां गभीर-शास्त्रालोचनविधौ मूकायमानत्वम्, इतरस्य पुनस्तथाविधायां सभाया-मपभयं वाकोवाक्यमिति। तदत्र कः पन्थाः।

---

# ग्रन्थनिकषः

[ निबन्धकः—श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

**कीचकवधम्**—महाकवि-नीतिवर्मविरचितम्। जनार्दन-विरचितया व्याख्यया समेतम्। दे इत्युपपदधारिणा सुशीलकुमारेण संस्कृतम्।

प्रियपाठकमहाभागाः! तदेवेदं कीचकवधाख्यं काव्यं यत्रत्यं "नृपतिसभाम्" इति पदं समुपजनयति शिरःशूलं शाब्दिकानाम्, यत्रत्या निरन्तराः श्लेषयमकादयः शब्दालङ्काराः समुद्वेजयन्ति मान-सानि सहृदयानाम्, यस्य च प्राथमिकः श्लोकः समुपन्यस्यते द्वैतीयीक-मङ्गलाचरणस्योदाहरणत्वेन * प्रामाणिकैः। स एव चायं सुशीलकुमार-दे महोदयो येनादर्शाद्रीन् वितीर्य चोदधीन् समासादितमनितर-

* "आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा"—साहित्यदर्पणः।

साधारणं प्रावीण्यं संस्कृतभाषायाम्, समधिगतं महाध्यापकपदं ढाका-विश्वविद्यालये, समर्ज्जितञ्च सुविपुलं यशः पाश्चात्यभूमौ। अत एवासीदस्माकं बलवती प्रत्याशा यत् सुशीलकुमारेण संस्कृतं(?) स्वनिर्मिताङ्गलभाषा-टिप्पनी-भूमिकाभ्यां च समलङ्कृतं(?) कीचकवधं जगत्यद्वितीयतामनुविन्देतेति। यद्यपि निरन्तरमिक्षुभञ्जं भज्यन्ते मनोरथशतानि मनुजानां कुटिलप्रवृत्तिना दैवेन, यद्यपि 'यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसा न गणितं तदिहाभ्युपैति' इति विनिर्गतं वचनामृतं मुखारविन्दाद् भगवतो रामचन्द्रस्य, तथापि समुल्लासाद्वास्माकं भागधेयस्य, सौभाग्याद् वा भारतवर्षस्य, प्रसादाद्वा कलियुगस्य, सद्भावाद्वा कारणान्तरस्य सर्वथा पूर्णतामुपगतोऽयमास्माकीनो मनोरथः।

समवलोकितानि किलास्माभिर्बाल्यात् प्रभृति सुबहूनि मुद्रितान्यमुद्रितानि च संस्कृतभाषामयाणि काव्यानि तट्टीकाश्च, परमीदृशं दोषशतशवलितं नैकमपि कदाप्यस्माकं दृष्टिपथमवतीर्णमित्यहो सर्वङ्कषत्वमेतस्य। अत्र च प्रतिपृष्ठमेवाहमहमिकया प्रादुर्भवन्तः परःशताः प्रमादाः संसूचयन्ति सुशीलकुमारमहोदयस्य सर्व्वतन्त्रस्वतन्त्रत्वम्, अन्तरान्तरा च प्रविलसन्तोऽनवबोधविजृम्भिताः, प्राचीनटीकाकृत्सु दूषणोपन्यासाः पिशुनयन्ति साहसिकत्वञ्च सहृदयत्वञ्च महाभागस्यैतस्य।

"हितवादि"-समाख्यस्य वङ्गभाषामयस्य वृत्तपत्रस्य सम्पादकमहोदयेन प्रतिसप्ताहमेव कीचकवधगता विशेषाः प्रदर्श्यन्त इति न तत्र व्यापार्य्यते लेखन्यस्माभिः, केवलं पाठकानां परितुष्ट्यै प्रमादसिन्धोः कतिचनबिन्दवस्तेभ्यः समुपह्रियन्ते।

पृः ८५ अपः श्यत्—"खर्परे शरि वा विसर्गलोपो वक्तव्यः" इति पाक्षिको विसर्गलोप इत्यभिप्रैति व्याकरणकरिकेसरी सुशीलकुमारमहोदयः। चकारस्य खर्प्रत्याहारान्तर्भावे तु पाश्चात्यशिक्षासंस्कृतमतेः सुशीलकुमारस्य वचनमेव प्रमाणम्।

पृ: १०२ अनादरे सप्तमी is not expressly taught by Katantra. Durgasingha in his वृत्ति would explain such examples as सम्बन्धविवक्षा ( रुदतः प्राव्राजीदिति सम्बन्धविवक्षापि ). अस्याः कातन्त्रकारेण—'अनादरे सप्तमी' कण्ठतो नानुशिष्टा, दुर्गसिंहेन पुनः स्ववृत्तावीदृशाः प्रयोगाः सम्बन्धविवक्षया निर्वाहिताः । "रुदतः प्राव्राजीदिति सम्बन्धविवक्षापि" इति तदुक्तेः ।

अनुशास्तु तावन्मृत्पिण्डबुद्धिः पाणिनिः षष्ठीसप्तम्योर्भेदम्, सकलभेददूरीकरणे गृहीतदीक्षः सुशीलकुमारमहोदयः पुनः कथमेतदनुमन्येत । प्रेष्ठाः पाठकाः, सादरं च सोत्कण्ठं च साग्रहं च समवलोकयन्तु भवन्त उदाहरणमिदमनादरे सप्तम्याः ( "रुदतः प्राव्राजीत्" इति ), सफलयन्तु चात्मनो जन्मैतस्य कण्ठेकरणेन पुनः पुनरनुशीलनेन च । भवति चात्र श्लोकः—

> यान्युज्जहार पाश्चात्यात् सुशील् व्याकरणार्णवात् ।
> तानि किं पदरत्नानि सन्ति पाणिनिगोष्पदे ॥

चतुर्थसर्गस्यान्तिमश्लोकव्याख्यायां टीकाकृद्भिरुक्तम्—दृष्टान्तमाह अत्र दे महोदयेनोच्यते—In spite of इव the poetic figure in the commentary is दृष्टान्त, but it takes it to be प्रतिवस्तूपमा । इवशब्दोपादानेऽपि टीकाकृन्मतेऽत्र दृष्टान्तालङ्कारः, व्याख्यातन्तरेण पुनरत्र प्रतिवस्तूपमाभ्युपगम्यते ।

प्रथमतस्तावत्—"In spite of the pressence of इव" इत्यत्र विनिक्षिप्यतां दृष्टिः । एतद्दर्शनेन स्फुटमेव प्रतीयते यत् "तत्र तत्रोपमा यत्र इवशब्दस्य दर्शनम्" इत्येवाभिमतम् आलङ्कारिकशिखामणेर्देमहोदयस्य । एतन्मते—"किमिव हि मधुराणां मण्डनं नाकृतीनाम्" "परायत्तः प्रीतेः कथमिव रसं वेत्तु पुरुषः" इत्यादिकं सर्व्वमेवोदाहरणमुपमायाः ।

इदानीमन्विष्यतां सुनिपुणं कुत्र तावट्टीकाकृतैतस्यालङ्कारनिर्देशः कृतः।

सर्वथा "सुशील"सुलभां दिव्यदृष्टिमन्तरेण दुःशकमेवैतद् द्रष्टुं प्राकृतैरस्मद्विधैः। टीकाकृतोक्तं—दृष्टान्तमाह। अतः खलु सुशील-कुमारेणोह्यते—अत्र दृष्टान्तालङ्कार इति टीकाकृत आशयः। "अनुक्तमप्यूहति पण्डितो जनः।" सुशीलकुमारसजातीयेन विद्वदन्तरेणापि "मम महानयं प्रयासस्तदर्थं इति हृदयम्" (रघु १३।२ टी) इति मल्लिनाथीयां पङ्क्तिं व्याचक्षाणेनोक्तम्—हृदयाख्यस्य टीकाकृतो मतमिदमिति। मूढः खलु मल्लिनाथो येन शिशुपालवधस्य प्रथम-सर्गस्याष्टाचिंशत्तमश्लोकव्याख्याप्रसङ्गेनोपक्रमे—अत्र वैधर्म्येण दृष्टान्तमाह इत्युक्त्वा—अत्र वाक्यद्वये समानधर्मस्यैकस्य ईशिषे क्षमेतेति शब्दद्वयेन वस्तुभावेन निर्देशात् तत्रापि व्यतिरेकमुखत्वाद्वैधर्म्येण प्रतिवस्तूपमालङ्कारः इत्युपसंहृतम्। अहो! व्याहतत्वमुक्तेर्मल्लि-नाथस्य।

कीचकवधस्य टीकाकृता जनार्दनेन सर्वत्र दण्ड्याचार्य्याणामेव मतं प्रमाणीक्रियते, दण्ड्याचार्य्यास्तु नाभ्युपगच्छन्ति दृष्टान्तालङ्कार-मित्यन्यदेतत्।

एवं कीचकवधस्य तृतीयसर्गस्य पञ्चमश्लोकस्य 'तथाच'शब्दस्य व्याख्यानावसरे टीकाकृतोक्तम्—तथा चेति निदर्शने। अत्र दे महोदयेन रारट्यते—तथा च The commentary explains this as indicating निदर्शन or निदर्शनालङ्कारः। समीचीन युक्तः। अनयैव युक्त्या यत्र टीकाकृतोक्तम् खलुर्वाक्यालङ्कारे तत्रापि वाक्याख्यो वा वाक्यालङ्काराख्यो वालङ्कारः।

अद्य तावदत्रैव विरम्यते। अवसाने पुनः सहस्रशो वितीर्य्यन्ते धन्यवादा दे महोदयाय, येन स्वसम्पादिते प्रबन्धेऽदृष्टचरं दर्शित-मश्रुतचरं च श्रावितम् इति शिवम्।

## संस्कृतपत्रिकाविमर्षणम्

**सूर्य्योदयः**—अखिलभारतवर्षीय-संस्कृतविश्वविद्यालयस्य मुखपत्रम्। अब्दः ५ संख्ये १२,१३। अत्र तु 'सनातनधर्म्मसङ्घटनम्' इति शीर्षके निबन्धे 'उत्तिष्ठन्तु, जाग्रतु, सर्व्वेऽपि भवन्तः सङ्घीभूय शीघ्रं स्वस्वमानसिकप्रवृत्त्युपयुक्तानि धर्म्मशास्त्रशस्त्राणि गृहीत्वा धर्म्मविध्वंसकैः सर्व्वैरप्यसुरैः सह योद्धुं सन्नद्धा भवन्तु।......अद्य प्रभृति प्रतिपाठशालं सर्व्वेऽपि विद्वांसः प्रतिमासं त्रयोदशीमारभ्य प्रतिपदं यावत् प्रचलितपाठं निरुध्य स्वान्तेवासिनः सर्व्वानपि सङ्घी-कृत्य परस्परविवादाहवेन पटून् कुर्व्वन्तो भाषणशक्तिं वर्द्धयन्तो व्याख्यानादिकं शिक्षयन्तु।' इत्यादीनि कलहव्यञ्जकानि वचांसि विद्यन्ते। न जानीमो वयं सनातनधर्म्मस्यैतैः कीदृशो वा समुपकारो भविष्यतीति। वयन्तु—'सर्व्वे कर्म्मोपजीविनां क्लेशाः, जातिकुला-वान्तरकलहः, सर्व्वविधाश्चान्ये मतिभेदाः मनुष्याणां भगवत्सेवन-विरहादेवोत्पन्ना भवन्तीति' मन्यमानाः कलहादीदृशात् सर्वथा विरता एव। कलहे चास्य प्रखरतान्यत्रापि 'स्वधर्मे निधनं श्रेय' इति निबन्धे दरीदृश्यते—'ये किल मानवाः सनातनधर्म्मपद्धतिं विलु-म्पन्तो निजबुद्धिवैभवोद्भावितं स्वकपोलकल्पितं नूतनमन्धकारमयं धर्माध्वानमनुव्रजन्ति धर्म्मध्वंसाय स्वीयां समस्तां शक्तिं संयोजयन्तो न लज्जन्ते, म्लेच्छैः समं भोजनपानयौनसम्बन्धं स्थापयन्तो नितान्त-मुत्सहन्ते, स्वीयां युवतिं दुहितरं यूना यवनेनाध्यापयन्तो न संकुचन्ति, कदाचारचरित्रा ये ग्रन्थानार्षान् धूलिकायां प्रक्षिपन्ति, नास्तिका ये स्वभिन्नं नान्यं कञ्चिज्जगदीश्वरमामनन्ति, परलोकं वा न निश्चिन्वन्ति, ये च वैदेशिकीं भाषां रटन्तो दासभावेन परदेश-

मटन्तो निखिलान् परकीयान् भाषावेषभावान् गृह्णन्तो नैजीमार्य्य-भावनां विजहतो न जिह्रति, विधर्म्मिसिद्धान्तान् सारतो मुमुक्षुं गोवत्संघातयन्तो नाधर्मं मन्यन्ते, तत्पातकमपि पुण्यं गणयन्ति, धर्म्म-मर्य्यादामुल्लङ्घ्यापि धार्म्मिकमुत्थानं प्रख्यापयन्ति, स्वायत्तं विवाहादि-संस्कारजातं पराधीनं विदधाना अपि स्वराज्यस्वप्नमवलोकयन्ति, किं बहुना ;—ये खलु दुरात्मानमपि महात्मानं मन्यन्ते, ये च महापातकिनोऽपि देशोन्नायकान् नायकान् मन्यन्ते, त एवासुराः इत्यादिकम्। वयमत्रोदासीनाः शमार्थिनः केवलं प्रियपाठकान् बृहस्पतिवचनमनु-स्मारयामः।

केवलं शास्त्रमाश्रित्य नैव कार्य्या विचारणा।
युक्तिहीनविचारे तु धर्म्महानिः प्रजायते॥ इति

**श्रीसारदा**—पञ्चमवर्षस्य—सञ्चिका—१-२। प्रतिपक्षं चतु-र्थ्यामियं पत्रिका प्रकाश्यते। क्षुद्रा पत्रचतुष्टयात्मिकाऽपि सन्देश-बहुलेयम्। अस्यां सन्देशस्तम्भे हिमालये 'नर-राक्षसानां वृत्तान्तः' 'रष्यादेशे मास्को महानगरे नास्तिकमहासभाया वृत्तान्त' स्तथा— 'सर्व्वत्रेदानीं भारते ब्राह्मणद्वेषः'—'ब्राह्मणैर्ब्राह्मण्यमवलम्बनीयम् चिरप्रसिद्धं स्वजातिदूषकत्वं त्याज्यम्। ऐकमत्येन सम्भूय स्वजाति-समुत्थानाय यत्नः कार्य्यः' इत्यपि सन्निवेशितम्।

# संस्कृत-साहित्य-परिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| April, 1930. | १८५१ शकीये चैत्रे<br>१२श-वर्षस्य १२श-संख्या | Vol. XII. No. 12 |
|---|---|---|


## ईश्वरेच्छा


[ निबन्धकः—श्रीदुर्गाप्रसन्नविद्याभूषणः ]


ईश्वरेच्छां विना लोके न किञ्चिदपि सिध्यति।

दुःखी भवेयं न कदाप्यहं भवे
सदा सुखी स्यामिति को न वेच्छति ?
इच्छा तु तुच्छेव नरस्य सर्व्वथा
विनेच्छया कृच्छ्रमुपैति यन्नरः ॥ १ ॥

प्रायेण लोकाः खलु दुःखभागिनो
विभान्ति लोके विरलाः सुखे रताः ।
अथाच केचित् सुखिनो विभान्ति चे-
दीशेच्छया ते न पुनर्निजेच्छया ॥ २ ॥

स्वेच्छावशाच्चेत् सुखिनोऽत्र मानवाः
किं तर्हि वा दुःखमवाप्नुवन्ति ते ?

स्वेच्छानुरूपं न फलं यतस्ततो
वाञ्छामयीच्छा फलति ध्रुवं नराः ॥ ३ ॥

यदा बुभुक्षा प्रबला प्रजायते
तदाशने कालविलम्बनं परम्।
यदा पिपासापि भृशं प्रबाधते
तदा जलं दुर्घटमेव दृश्यते ॥ ४ ॥

अनेककार्य्येषु कृतेऽपि पौरुषे
विधेरनिच्छावशतो ध्रुवं नरैः।
न लभ्यते प्रार्थितमेव दृश्यते
ततो विधीच्छा फलतीति निश्चितम् ॥ ५ ॥

अहं सुविद्वान् यशसाप्यलङ्कृतो
भवे भवेयं प्रथितः सुतीक्ष्णधीः।
न काङ्क्षतीत्थं जगतीह कः पुन-
स्तथा भवेयुः कति वा नरर्षभाः ॥ ६ ॥

कलास्वभिज्ञो बलवान् सुरूपधृग्
अरोगदेहः कुलभूषणो भवे।
भवेयमीदृक् कतमो न वाञ्छति ?
स्ववासना कस्य भवेत् फलान्विता ? ॥ ७ ॥

धनी मनीषी मणिरत्नमण्डितः
सुपण्डितः सज्जनमण्डलप्रभुः।
भवेऽतुलः स्यामहमित्यमत्र को
न काङ्क्षति स्यात् कतमस्तु तादृशः ? ॥ ८ ॥

हृद्यानवद्या दयिता प्रियंवदा
सदानुकूला कुशला कुलोद्भवा।
पत्नी मम स्यादिति कस्य नो भवेद्
बलीयसीच्छा किमहो भवेत्तथा ॥ ९ ॥

क्वचिद् भवेद् वा जगदीश्वरेच्छया
ध्रुवं न चेत् स्यात् सकलस्य सा तथा।
कथं विरूपा कलहप्रियाऽथवा
विरुद्धभावा भृशकर्कशा प्रिया॥ १०॥
नितान्तनिःस्वोऽपि विनैव चेष्टया
प्रदत्त आढ्यस्य गृहे धनी महान्।
न पौरुषस्यात्र लवोऽपि दृश्यते
ग्रहीतुरिच्छा तु परेशवाञ्छया॥ ११॥

खाद्ये स्थितेऽपि निकटे मनुजा यथेच्छं
भोक्तुं कथञ्चिदपि नैव भवन्ति शक्ताः।
विघ्ना भवन्ति बहुधा मुहुरेव दृष्टा-
स्तस्मान्न साध्यमिह भाति नरस्य किञ्चित्॥ १२॥
का वाबलाभिलषति प्रियविप्रयोगं
तस्याः कथं भवति वा नियतं स एव।
नो यत् पुनः कलयते मनसापि बाला
वैधव्यदुःखमहहो भवतीह कस्मात्?॥ १३॥
का वाबला क्षितितले न हि कामयेत
विद्वान् गुणी बहुधनो रमणीयमूर्त्तिः।
आस्तां पतिः सुनियतं मम शीलशीलः
सा वासना फलवती भवतीह कस्याः?॥ १४॥
का वाङ्गनाङ्ग! पतिसङ्गमलिप्सयास्मिन्
नाङ्गं परिक्लशयति स्वकमेकपत्नी।
गाढोत्सुकापि लभते न च कान्तमारा-
दिच्छा कथं न फलिनी बलिनी तदीया॥ १५॥
ईशेच्छया तु सफला भवति क्वचित् सा
नात्मेच्छयेति सततं परिचिन्तनीयम्।

का नो सुपुत्रजननी भवितुं भवेऽस्मिन्
वाञ्छन्ति काममबलाः किमहो तथा स्युः ॥ १६
कन्यां सुशिक्षित-कुलोनवराय दातुं
कस्याः पितुर्न भवति प्रबला समीहा ?
दत्ताश्च तादृशवराय कति स्युरस्मिन्
लोकेच्छया भवति चेत् किमु निष्फला सा ? ॥ १७ ॥
निःसन्ततिर्जगति कोऽत्र परत्र धीरो
लब्धुं निवापसलिलं तनयं न वष्टि ?
स्वीयेच्छया भवति चेन्मनुजोऽत्र पुत्री
निष्पुत्रकः क्षितितलेऽथ किमस्ति लोकः ? ॥ १८ ॥
यस्याः पुनः क्षणमवेक्षणमन्तरेण
चक्षुः सबाष्पमचिराद् भवतीह खेदात् ।
तस्याः क्षयं प्रियतमः क इह क्षितौ वा
वाञ्छत्यहो बत कथं क्षयमेति सा वा ॥ १९ ॥

आयुष्मान् भवतान्मदीय-तनयो विद्वान् यशस्वी वशों
कोऽचेत्थं न विभावयत्यविरतं कस्यात्मजः स्यात्तथा ।
तातेच्छा यदि कारणं भवति तन्न स्यात् कथं वा तथा
श्रीशेच्छा प्रभवत्यतो न मनुजस्येच्छानुगास्मिन् क्रिया ॥ २० ॥
चैत्रे शस्यानि सन्तु प्रतिनियतमिति चैत्रपाः कामयन्ते
कस्मात् कामानुरूपं फलमथ न भवेद् भूतले वात्र तेषाम् ?
काले वृष्टिः कथञ्चिन्न भवति किमहो याचिता कर्षकैर्वा
किंवा कालेऽतिवृष्टिर्भवति च सफला कामना का नराणाम् ॥२१॥

इह जगति वदान्योऽयाचके कुत्रचिद् वा
वितरति धनराशिं स्नेहतश्चित्रमेतत् ।
अकृतपुरुषकारे सादरः किं स वा स्या-
न्न भवति किमु तस्मिन्नीश्वरेच्छैव हेतुः ? ॥ २२ ॥

न च परधनमस्मिन् प्राप्नुवन्त्यल्पका वा
किमथ पुरुषकारं कुर्वते ते तदर्थम् ?
अकृतपुरुषकाराः सम्पदं प्राप्नुवन्तः
परधन-वरकृत्या भान्ति नित्यं नरेन्द्राः ॥ २३ ॥
सततमिह नराणां कामनाया विघातः
प्रतिनयननिपातं दृश्यते यत्नभाजाम् ।
तदपि जगति मन्दाश्छन्दतो यत्नतो वा
समभिलषितसिद्धिं स्पर्द्धमाना वदन्ति ॥ २४ ॥
यदि भवति निजेच्छासिद्धिरात्यन्तिको वा
भवति भगवदिच्छा तत्र नूनं निमित्तम् ।
नियतमिति विचिन्त्यं पौरुषे वर्त्तमानैः
किमपि भगवदिच्छामन्तरेणैव न स्यात् ॥ २५ ॥
पुरुष-पुरुषकारे या च साध्वी प्रवृत्ति-
र्भवति भगवदिच्छा तत्र मूलं विशेषात् ।
यदि जगति निजेच्छा स्यात् प्रवृत्तौ निमित्तं
तदिह किमिति लोका निःस्पृहाः पौरुषे स्युः ॥ २६ ॥
अत इह सुखदुःखे ह्रासवृद्धी च नित्यं
कुमतिरथ सुबुद्धिः पाटवापाटवे च ।
अपि शुभमशुभं वा कीर्त्त्यकीर्त्ती च लोके
सकलमिति परेशस्येच्छया सिद्धिमिति ॥ २७ ॥

———

# शारीरविमर्श आहारश्च

[ निबन्धकः—रामसुब्रह्मण्यशास्त्री ]

जगति हि सर्वे प्राणिनः सुखं मे भूयात् दुःखं मे माभूत् इति सर्वेश्वरमनिशम् प्रार्थयन्ते। सुखम् ऐहिकं पारत्रिकञ्चेति द्विधा भवति। तयोराद्यं स्रक्चन्दनवनितादिरूपम्। अन्त्यं सच्चिदानन्दरूपं, तयोः साधनं शरीरं धर्मश्च भवतः। धर्मो नाम कर्मजन्योऽभ्युदयनिःश्रेयसहेतुरात्मगुणः। धर्मस्य कर्मानुष्ठानसाध्यत्वात् कर्मणः शरीरसाध्यत्वात् च शरीरं धर्मसाधनं भवति। तथा चाभिप्रैति कालिदासः—"शरीरमाद्यं खलु धर्मसाधन"मिति। तथा प्रोवाच गौतमः—"सर्वं एवात्मानं गोपायेदि"ति। अतः शरीरमिदं सर्वथा संरक्षणीयं भवति। शरीरसंरक्षणे पञ्च प्रकारा भवन्ति। तथाहि १ वायुः २ जलम् ३ आहारः ४ आवसथवस्त्रम् ५ व्यायामः। निर्दिष्टेषूपरितनेषु तृतीयो विमर्शनरीतिमद्य प्राप्नोति। प्रथमम् शिरोपङ्क्तिकायां यथा निर्दिष्टं शरीरतत्त्वं विमृश्य अनन्तरम् आहारस्वरूपम् आहारप्रवेशं जरणक्रमं धातुविपरिणामक्रमं पुष्टिक्रमञ्च आहारावश्यकताञ्च विमृशामो वयम्। तथाहि शरीरमस्माकं पञ्चभूतारब्धं भवति। पाञ्चभौतिकेऽस्मिन् शरीरे सप्त कलाः सप्त आशयाः सप्त धातवः सप्त त्वचः त्रयो दोषाः नवशतं स्नायुसन्धयः सप्तोत्तरशतं मर्माणि सप्तशतं सूक्ष्मनाड्यः चतुर्विंशती रसवाहिन्यो नाड्यः पञ्चशतं मांसग्रन्थयश्च सन्ति। कला नाम सप्तधातूनाम् आशयानां च मध्ये स्थितो देहोष्मणा पच्यमानः क्लेदः। सप्तकलासु तिस्रः कला मांसरक्तमेदांस्यधितिष्ठन्ति। चतुर्थी कला तु यकृदधितिष्ठति। यकृन्नाम कटिप्रदेशे शरीरदण्डस्य ऊर्वोश्च सन्ध्यस्थिविशेषः। पञ्चमी कला तु तन्तुसदृशान्यस्थान्यधि-

तिष्ठति। षष्ठी कला तु उदरे जाठराग्निं बिभ्रति। सप्तमी कला तु शुक्रधातुं बिभ्रति। अतःपरम् आशयान् विमृशामः। आशयाः सप्तेति प्रागुल्लिखिताः। ते च १ श्लेष्माशयः २ आमाशयः ३ अग्न्याशयः ४ पवनाशयः ५ मलाशयः ६ मूत्राशयः ७ रक्ताशयश्चेति विभक्ताः। तेषु कफाशयो वक्षसि तिष्ठति। आशय इत्यस्य आधार इत्यर्थः, अत एव पश्यामो वयं कासोत्पत्तिकाले वक्षोदुगमितं निष्ठीवम्। आमाशयो वक्षसः अधोभागे विद्यते। नाभेर्वामभागे श्लेष्माशयामाशययोर्मध्ये अग्न्याशयोऽस्ति। अग्न्याशयादधोभागे पवनाशयः। पवनाशयादधोभागे मूत्राशयो वर्तते। जीवरक्ताशयस्तु उरसि वर्तते।

अतःपरं धातुविमर्शः। धातवः सप्तेति पूर्वं निर्दिष्टाः। ते च रसरक्तमांसमेदोऽस्थिमज्जाशुक्ररूपाः। ततस्त्वग्भेदाः सप्त। तासु आद्या अवभासिनी। तयैव त्वचा अयं स्पृशतीति ज्ञानमस्माकमुत्पद्यते। अत एव अवभासिनीति नाम। तस्यामेव हि धवलादि रोगा उत्पद्यन्ते। द्वितीया लोहितेत्युच्यते। सा स्फोटोत्पत्तिस्थानं भवति। तृतीया श्वेतेत्युच्यते। तस्यां चर्मदलमिति रोग उत्पद्यते। चतुर्थी ताम्रेति कथ्यते। पञ्चमी वेदिनीत्युच्यते। तस्यां कुष्ठरोग उत्पद्यते। षष्ठी रोहिणीत्युच्यते सा ग्रन्थगण्डपदीरोगाणामुत्पत्तिस्थानं भवति। सप्तमी स्थूलेति प्रोच्यते। तस्यां विद्रधिरोगा उत्पद्यन्ते। इति सप्त त्वचां भेदाः।

दोषाः त्रयो विभक्ताः, वायुः पित्तं कफश्चेति। एषाम् उपचयापचयेन शरीरमिदं दूष्यते। अत एव तेषां दोषा इति संज्ञा भवति। अतः शरीरमिदं दोषधातुशिरादिभिर्व्याप्तं भवति। अतो दोषाणां साम्यवैषम्यावस्थाभिरुपशमकोपा भवन्ति।

अतः शरीरसम्बन्धिनां पञ्चभूतानां सात्म्यान्येव द्रव्याणि उपयोगार्हाणि भवन्ति। लोके ब्रह्मणा सृज्यमानाः पदार्थाः पञ्चभूतात्मका-

भवन्ति। तेषु द्रव्येषु ऊर्ध्वगं द्रव्यं प्रायशः अग्निपवनोत्कटं भवति, अधोगामि द्रव्यं भूयो भूमितोयगुणाधिकं भवति।

अतः परम् आहारविमर्शः। आह्रियत इति आहारः इति व्युत्पत्त्या यद्वस्तुजातं रसनयाकृष्यमाणं गलान्तः प्रविश्य जरणयोग्यं भवति तद्वस्तुजातम् आहार इत्युच्यते। प्रत्यहम् एकैकोऽपि भोज्यवस्तूनां गुणदोषान् विमृश्य भुञ्जीत। जातिभेदेन देशभेदेन च एकैकोऽपि पदार्थविशेषानुपयुङ्क्ते। भोज्यपदार्थेषु शालीनां भेदो बहुधा दृश्यते। सारामुखो दीर्घशूकः रौद्रमुखः कलमः षष्टिकः इति व्रीहिभेदो दृश्यते। तेषु षष्टिको व्रीहिः प्रशस्यतम इति आयुर्वेदशास्त्रेषु उद्घुष्यते। षष्टिको व्रीहिर्देहकान्तिमुत्पादयति त्रिदोषघ्नश्च भवति। अतो व्रीहिषु षष्टिको व्रीहिः प्रशस्यतमत्वात् भोज्यो भवति। गोधूमो वृष्यो देहेषु ग्रन्थीनां बलकृत् भवति। रसे मधुरः, वातपित्तञ्च हन्ति। मुद्गमाषमसूरादयो मलबन्धनकारिणो रसे कषायाः पाकरसे कटवश्च भवन्ति। तेषु मुद्गा मेदश्लेष्मपित्तहरा भवन्ति अल्पवायुम् उत्पादयन्ति। माषो द्विधा भिन्नः, राजमाषो माषश्चेति। राजमाषः अनिलवृद्धिं करोति बहुशः शकृत्प्रवृत्तिं करोति, माषो बलश्लेष्ममलपित्तवृद्धिकृद् भवति। कुलत्थाः पाके अम्लाः शुक्राश्मश्वासपीनसान् कासार्शःकफवातांश्च नाशयन्ति। पृथुका गुरवो बलकारिणः कफविष्टम्भकारिणश्च भवन्ति। धात्री मलबन्धकारिणी भवति। शक्तवो लघवः क्षुत्तृट्श्रमनेत्रामयव्रणान् नाशयन्ति। एवं रीत्या कानिचित् द्रव्याणि दोषोत्पादकानि, कानिचित् द्रव्याणि दोषहराणि भवन्ति। अतो वयं स्वशरीरस्वास्थ्यं प्रत्यहं विज्ञाय अनुतिष्ठेम।

अतःपरम् आहारप्रवेशविमर्शो जरणक्रमश्च। लोके एकैकोऽपि प्रत्यहं बुभुक्षायां सत्यां भोज्यवस्तूनि भुङ्क्ते, भोज्यवस्तुनि कण्ठगते प्राणानिलः पूर्वं तदाकृष्य आमाशयं प्रापयति। आमाशयं प्रपन्न आहारो माधुर्यं फेनभावञ्च प्राप्नोति। अथ स आहारः पाचकाख्य-

पित्तेन पाचितोऽम्लतां प्राप्नोति। ततोऽम्लतामापन्न आहारः समानमरुता प्रेरितः सन् ग्रहणीम प्नोति। ग्रहणी नाम पक्वामाशय-मध्यस्था षष्ठी पित्तधरा कला। ग्रहणीं प्राप्त आहारः कोष्ठवह्निना पाचितः सन् कटुरसो भवति। ततः सम्यक्पाकादाहारादुत्पन्नो रसः समानमरुता प्रेरितो हृदयं गच्छति। रसभावमापन्न आहारः पाचकः पित्तेन पुनः पच्यमानो रक्ततां याति। ततो रक्ताशयात् रक्तं नाडीप्रणालीद्वारा सर्वदेहं व्याप्नोति। ग्रहण्यां रसपाकादनन्तरं सारहीनो मलद्रवः शिराद्वारा बस्तौ नीतो मूत्रत्वमाप्नोति। तत् किट्टं पक्वामाशयेन नीतं सदपानवायुना प्रेरितं वलित्रितयमार्गेण बहिर्निर्याति। प्रथमम् आहारो रसरूपेण परिणमते, अनन्तरं रक्त-रूपेण ततो मांसेन ततो मेदसा ततो अस्थ्ना ततो मज्जया ततः शुक्रेण परिणमते। शार्ङ्गधरो मासेन शुक्रत्वं यातीत्याह। एके दिनेन शुक्रत्वं यातीत्याहुः। एवञ्च आहारेणैव रसाद्या धातवः पुष्यन्ति। अत आहारं विना जीवितुं न शक्नुवन्ति मानुषाः। अन्नाद्याहारः प्राण-रूपोऽस्ति इति मातृभूता श्रुतिरुद्घोषयति तथा—"अन्नमयं प्राणः"। 'अन्नेन जातानि जीवन्ति' इति 'आहारो जीवातुः' इति च कथयति। अत आहाराभावे प्राणो निर्याति। अत आहार आवश्यकः। भोज्य-वस्तूनि क्रिमिकीटादिभ्योऽवश्यं रक्षणीयानि भवन्ति। क्रिमिकीटा-दीनां मुखे विषखण्डं वर्तते। प्रतिक्षणं रसनायां सिक्तं विषं दंशना-वसरे भोज्यवस्तुषु पतितं सत् तैः सह व्यामिश्रीभूय भोजनावसरे प्राणिनां गलान्तःप्रविश्य आमाशयं प्राप्नोति। अनन्तरम् अतीसारादि-रोगानुत्पादयति। अतः शुद्ध आहारः सेव्यः। चैनदेशे केचन जना व्रीहितुषान् दिनत्रयं जलपात्रे निक्षिप्य वस्त्रेण निष्पीड्य सारांशम् अभ्यवहरन्ति, अत एव ते बलिष्ठा भवन्ति इति श्रुतमस्माभिः। केचन मांसम् अभ्यवहरन्ति, ते च मांसं मांसेन वर्धते इति न्यायेन मांसमभ्यवहृत्य बलिनो भवन्ति। तण्डुलेषु सारांशो नातीवास्ति, मण्ड-

ष्वतीव सारांशो विद्यते। अत एवायुर्वेदेषु मण्डः प्रशस्यतम इति प्रोच्यते। अत आहार आवश्यकः; आहारगुणाद् बलिनो भवन्ति। अन्ते च आनन्दवल्लीसमेतकैलासनाथपादपद्मयोरनन्तनमस्कारान् समर्प्य हंसवारिन्यायेन गुणान् गृह्णीयुः इति विद्वन्मणीन् प्रार्थये। इति

सुधाब्धिमन्थनोत्पन्नं तं धृतहस्तामृतं विभुम्।
वन्दारुरोगहन्तारं वन्दे धन्वन्तरिं शिवम्॥
विनायकं नमस्यामि पार्वतीप्रियनन्दनम्।
उपन्यासस्तु विदुषां मुदे भवतु सर्वदा॥

---

## पल्लवग्राहि पाण्डित्यम् *

[ निबन्धकः—श्रीक्षितीशचन्द्रचट्टोपाध्यायः, एम्. ए ]

आर्य्याः! पल्लवग्राहि पाण्डित्यं तावद्विनिन्द्यते विद्वद्भिः, नास्वाद्यते विपश्चिद्भिः प्रोज्झ्यते प्राज्ञैः, सुदूरमुत्सार्य्यते च सहृदयैः। परं निपुणं विचारयन्तो नूनं प्रतिपद्येरन् भवन्तः सर्वमेतद् गतानुगतिको लोको न लोकः पारमार्थिक इत्यभियुक्तोक्तेरविसंवादितायामेव साक्षिभूयमावहतीति। चिराय खलु समतीतः स कालो यदा रामनाथप्रभृतयः पण्डितप्रकाण्डास्तृणीकृतस्वार्था अविज्ञातसुखलेशास्तिन्तिडीपत्रादिभिरेव वृत्तिं कल्पयन्तः स्नानासनशयनभोजनादिष्वपि शास्त्रानुचिन्तनपराः शास्त्राध्ययनेनैव जीवनस्य साफल्यमाकलयामासुः, यदा प्रायेण सर्व एव ब्राह्मणा द्वादश वा चतुर्विंशतिं वा षट्त्रिंशतं वा वर्षाणि सुदुष्कराणि व्रतान्यनुपालयन्तो निरन्तरं च परिश्रमातिशयं स्वीकुर्वन्तः समासादितवन्तो वैदुष्यं तेषु तेषु शास्त्रेषु, यदा प्रतिष्ठां सूकरीविष्ठां मन्यमाना उत्सार्य्य

---

* परिषदो मासिकाधिवेशने वाचितोऽयं निबन्धः।

माध्यस्थ्यं दूरतश्च परिहृत्य वितण्डावार्त्तां वादेनैव सम्पादयामासु-र्वैयर्थ्यं बुद्धेर्मूढ़मतयः। परन्तु किं वोपकृतं भारतवर्षस्यैतैरजा-गलस्तनायमानैर्विद्वद्भिः। किं विनिर्णीत एभिर्वेदस्य विरचनावसरः, विचारितं वा पौर्वापर्यं कालिदासीयानां प्रबन्धानां, विरचितो वेति-हासो दार्शनिकानां निबन्धानाम्, विनिर्मितं वेतिवृत्तमलङ्कारशास्त्र-सन्दर्भाणाम्। एतेष्वत्यावश्यकेषु गरिष्ठेषु विषयेषु नैव व्यापारिता लेखन्येतैरित्यत्र नास्ति लेशतोऽपि संशयावसरः। अद्यत्वे पुनः सुखेनैव प्रतरन्ति परीक्षाब्धिं पटवः, लभन्ते च बिरुदानि विवि-धानि, विरचयन्ति च प्रबन्धाननुत्तमान्, श्लाघ्यन्ते च सशिरःकम्पं परमार्थत एव प्राच्यैः पाश्चात्त्यैः। साम्प्रतं हि प्रतिनगरं प्रतिग्रामं प्रति-गृहं च वर्त्तन्ते वेदविदो, विद्यन्ते वैयाकरणाः, समुल्लसन्ति साहि-त्यिकाः, नृत्यन्ति नैयायिकाः, दरीदृश्यन्ते च दार्शनिकाः। एते हि समुपभुञ्जते तांस्तान् भोगान्, समासेवन्ते तानि तानि सुखानि, आवि-ष्कुर्वन्ति चाहमहमिकया प्रतिदिनं नवनवानि तत्त्वानि। एषामुदात्त-तमानि बिरुदान्येव पिशुनयन्ति आत्मनोऽनितरसाधारणं प्रावीण्यं संस्कृतभाषायाम्, अप्रतिमश्चाहङ्कारः संसूचयति सूक्ष्मेक्षिकां सर्वतो-मुखीम्। द्वादशभिरपि वर्षैर्व्याकरणमहार्णवस्य पारमधिगन्तुं नैव प्राभ-वन् पण्डिताः प्राचीनाः, इदानीन्तनाः पुनर्मासेनैव चुलुकीकृत्य भाष्याब्धिं पाणिनेरपि प्रपितामहायन्ते। प्राचीनैर्जन्मजन्मान्तरैरपि नापारि वेदान्तशास्त्ररहस्यं सम्यगवबोद्धुम्, इदानीन्तनैः पुनः पक्षेणैव करतला-मलकीक्रियते साङ्गं सरहस्यं सावान्तरभेदं दर्शनशास्त्रम्। विरलाः किलासन्नृषयो महर्षयो देवर्षयः प्राचीने भारतवर्षे, अधुना तु प्रति-दिनमेव प्रादुर्भवन्ति नवनवा ऋषयश्च महर्षयश्च राजर्षयश्च ब्रह्मर्षयश्च।

सहृदयाः सुष्ठु तावद्विचार्य्यतां किमत्र बीजम्। अत्र सर्वत्र पल्लव-ग्राहित्वमेव निदानम् इत्यत्र नास्ति स्तोकोऽपि संशयः कस्यापि विवेकिनः। यस्य प्रसादेनानाघ्रातव्याकरणगन्धा अपि वैयाकरण-

शिरोमणित्वेन सम्मन्यन्ते, अश्रुतालङ्कारवृत्तान्ता अपि आलङ्कारिकधुरीणेषु परिगण्यन्ते, अनवलोकितदर्शनग्रन्था अपि दार्शनिकशिखामणित्वेन संपूज्यन्ते, अघटनसंघटनपटिष्ठं तथाविधं पल्लवग्राहित्वं को नाम न बहुमन्येत ? यस्य नाम माहात्म्येन विच्छिन्नाभ्रविलायं विलीना विद्वत्ता, ऊर्द्ध्वशोषं संशुष्कं शास्त्रज्ञानं, विद्युत्प्रकाशं च प्रकाशिता काकदन्तकूर्म्मरोमादीनां संख्या, को वा सचेतनो न स्पृहयेत् तादृशाय पल्लवग्राहित्वाय। सहृदयाः! सर्वात्मना शिथिलीक्रियतां शास्त्रेषु श्रद्धा, आधीयतां यत्किञ्चनकारितायां धीः, वितीर्य्यतां पल्लवग्राहितायां हस्तावलम्बः, अधिगम्यतां पाश्चात्यानां साधुवादः, उपार्ज्यतां चाक्षय्यं यशः। सर्व्वथा विजयतां देवी पल्लवग्राहिता।

---

## नलदमयन्तीसंवादः

[ निबन्धकः—श्रीयोगीन्द्रनाथविद्याचुञ्चुः, ]

( इन्द्रप्रेरितेन नलेन सह दमयन्त्याः सम्भाषणम् )

भै। कस्त्वं महापुरुषपुङ्गव धीरसत्त्व
सिंहावलोकितलसत्सुमहाप्रभावः।
दू। वार्त्तावहोऽस्मि ललने त्रिदिवाधिपस्य
तस्मात् तवान्तिकमहं समुपागतोऽस्मि ॥ १

भै। एवंविधा सुललिता शुभचिह्नगर्भा
दूताकृतिर्न हि कदाचन सम्भवेद्धि।
दू। नो दौत्यजीविकमिमं गणयेस्त्वमद्य
राजन्यवंशजलधिप्रभवोऽस्मि तन्वि ॥ २

भै। तत् किं महोदय समुन्नतमानहारि-
दौत्ये रुचिर्भवति नीचजनप्रवाह्ये।
दू। दैवं विलङ्घयति को वद मे मृगाक्षि
त्वाम्नावहं त्रिभुवनं ननु तत्प्रभावात् ॥ ३

भै। स्वप्ने मयाकृतिरियं बहुशो हि दृष्टा
सेयं किमद्य नयनातिथिरेव दिष्ट्या।
दू। स्वप्ने त्वया कति न वा पुरुषा हि दृष्टा-
स्तेषामहं कतम इत्यवधारयास्मिन् ॥ ४

भै। एषैव मूर्त्तिरनिशं प्रजहार चित्तं
नान्या कदापि खलु मे सुरवीरवीर्य्ये!।
दू। तुल्याङ्गभाज इह किं तरुणा न सन्ति
प्रोल्लिख्यतां तदभिधानमतस्त्वयास्मिन् ॥ ५

भै। नालं प्रभुः किमभिधानमहं प्रवक्तुं
जिह्वेति यन्निगदितुं रमणी प्रियाख्याम्।
दू। नाम्नां तथास्ति समता भुवनेऽत्र सुभ्रु
चाख्याहि राज्यमनघं ननु तत्प्रशास्यम् ॥ ६

द। तद्वैषधाख्यमतुलं त्रिदिवादभिन्नं
राज्यं प्रशास्ति स महान्निजबाहुवीर्य्यैः।
दू। योऽहं भवामि किमु तेन पुनः शृणु त्वं
शक्रस्य दूतमिह मामवगच्छ भद्रे ॥ ७

द। कोऽसौ स शक्र इति यं भणसीह साधो
संज्ञान्तरं किमपि तस्य न वर्त्तते किम्।
दू। इन्द्रं तमेव मनुजा अमराश्च सर्वे
जानन्ति निर्जरपतिं दिगधीश्वरञ्च ॥ ८

द। इन्द्रः स एव मम यो हृदयं द्युलोक-
स्याक्रम्य राजति चतुःककुभीश्वरस्य।

दू। वृत्रासुरं निहतवान् स हि पाकवैरी
त्वां सन्दिदेश सुभगे शतयागसिद्धः ॥ ९

द। दूतीमुखादपि भवान् श्रुतवान् न किञ्चि-
द्विज्ञोऽपि किं पथि पदं निदधासि वामे।

दू। यो दौत्यभारवहनं कुरुते तदीया
स्वाधीनता न हि कुतोऽपि हि चेष्टितेषु ॥ १०

द। प्राग् दौत्यभारवहनात् किमु चित्तवृत्तौ
स्वार्थोपघातजनिता हृदि नाप्यशान्तिः।

दू। स्वार्थं विमुच्य भवति परभव्यपुष्टिं
त्यागो हि धर्म इति तैरिह सन्निविष्टः ॥ ११

द। तद्यातु किं किमिति ते त्रिदिवेश्वरः स
त्वादिष्टवांस्तदधुना समुदीरय त्वम्।

दू। इन्द्रं वृणुष्व सदया भव तं प्रति त्वं
सिंहासनं कुरु सुशोभितमासनेन ॥ १२

द। मन्ये स ते सुरपतिर्विकृतः प्रकृत्या
मत्तोऽथवा विभवतो मरुतातिशय्यात्।

दू। सिद्धान्तमीदृशमहो हृदये कथन्ते
जातं महेन्द्रविषयं नलिनायताक्षि ॥ १३

द। भ्रान्तिः परा मघवतः कथमीदृशीयं
किंवा प्रमादपरता बहुभोगमूला।

दू। नास्तेऽधिकार इह ते खलु तद्विचारे
यत्तत्फलं प्रभविता गगनप्रसूनम् ॥ १४

द। जानीहि मां भुजजनुर्नृपतेः प्रजातां
धर्मात्मिकां परमियं छलना कुतस्ते।

दू। स्वार्थं त्वदीयमनवे कलयामि पातुं
का मे भवेच्छलयितुं भवतीं प्रलब्धिः ॥ १५

द । रम्भादि-नाक-ललनास्त्रिदिवेशतुष्टौ
　　लभ्या भवेयुरिति मेऽनुभवोऽत्र सौम्य ।
दू । रम्भा मदीयहृदयं भजते च यस्मिन्
　　रम्भान्तरं न भविता परिलब्धुमेतत् ॥ १६

द । यः षट्पदः कमलिनीमकरन्दपायी
　　नो याति वल्लिमपरां नवरागतः किम् ।
दू । या पद्मिनी दिनकरं भजते प्रफुल्ला
　　सा किं न षट्पदगणं प्रति रागिणीयम् ॥ १७

द । हा धिग् हरिर्नरवधूकरपीडनार्थी
　　लोके तु गौरवहरः सुचिरं कलङ्कः ।
दू । किं चिन्तितेन फलमत्र तु विद्यते न-
　　स्तेजस्विनां बलवतां न पराजयोऽस्मिन् ॥ १८

द । मैवं विचिन्तय गुरोर्वनितां प्रधृष्य
　　त्वद्यापि निर्जरपतिर्वहते कलङ्कम् ।
दू । इन्द्रे वृते तव सुखं भविता हि यादृक्
　　प्रख्यातुमस्मि न हि तल्ललने समर्थः ॥ १९

द । या कामिनी मृगयते सुरलोकसौख्यं
　　सा मन्यतान्तु परमं न हि भीमकन्या ।
दू । इन्द्रेण सार्धममरालयकामिनीनां
　　नृत्यं मनोहरमलं परिलोकिनी त्वम् ॥ २०

द । मद्वृतेन हरिणा वनवासिनी चेत्
　　स्वर्गाधिकं सुखमियं परिभोक्ष्यते तत् ।
दू । अत्युत्कटेन तपसा नहि लभ्यते य-
　　स्तद्याचते किल पदं भवतीं सयत्नम् ॥ २१

द । उत्कृष्टताऽस्ति न पदे ह्यपकृष्टतापि
　　कुत्रापि मानसमतिर्यत एव साधुः ।

दू। का वा त्वदन्यरमणी धरणीतलस्था
धर्मार्थकामफलदं त्रिदिवं जहाति ॥ २२
द। का मादृशी व्रतवतीन्द्रियसौख्यहेतोः
पद्भ्यां विताडयितुमिच्छति धर्मरत्नम्।
दू। धर्मस्य तत्त्वमबले किमधीतपूर्वं
यत्त्वं निकृन्तसि वृथा वचनं मदीयम् ॥ २३
द। आत्मा यदिच्छति बलाद्बुधयुक्तिसिद्धं
तं वेद्मि धर्ममिति मे मनसो वितर्कः।
दू। युक्तिर्विभिन्नरुचिता प्रतिबुद्धितर्कं
जातिश्च जातिमनुयाति हि वर्णभेदः ॥ १४
द। अस्माद्धि धर्मसरणीगतकार्य्यजातं
वैशिष्ट्यमत्र भुवने प्रतिभाति नित्यम्।
दू। चौरस्य चौर्य्यरुचिता किमु धर्मवृत्तं
पापं न वा श्रयति तं हरणेऽपरेषाम् ॥ २५
द। तद्धर्म एव परमो यदनेन तस्य
जीवन्ति दारतनयास्तदधीनजीवाः।
दू। अन्यायवृत्तिमनघां यदि कोऽपि लोभात्
कुर्य्यान्निजोदरगतां न हि पातकी किम् ॥ २६
द। सहायसम्पन्नधनधान्यमानैः
सम्पन्नपुष्टा जयिनश्चिराय।
दू। अप्रस्तुतैः का विषयैः प्रलब्धिः
सन्देश्यतर्केष्ववगाह्यतां तत् ॥ २७
द। तर्कै जिता कथमहो भवता भवेयं
चेतोऽधुना मम परं न वशं गतं स्यात्।
दू। प्रायेण दृश्यत इदं लघुधीप्रसङ्गा-
द्विश्वासमान्यमवलम्बत एव नारी ॥ २८

द। दिष्ट्याधुना गुरुधियं समुपागतास्मि
तत्सङ्गतो विदलितो भविता स बोधः।
दू। त्वं पृच्छसि सुदति किं मरजन्मनीह
लक्ष्यं प्रधानमबला पुरुषाविशेषम्॥ २९
द। चत्वार एव सुमतिमन् भुवनेऽत्र वर्गा-
स्तत्साधनार्थमनिशं मनुजा यतेरन्।
दू श्रोत्रे श्रुतं पदमिदन्त्वभिधेयपुष्टं
कीदृग् विचारकुशले परिकीर्त्त्यतां तत्॥ ३०

---

## भारतीयस्त्रीशिक्षा

(पूर्वानुवृत्ता)

[ निबन्धकः—श्रीसीतानाथसिद्धान्तवागीशः ]

सुसभ्यशर्म्मण्यप्रदेशान्तर्गते "वेभिरिया"नामकप्रदेशे सहस्रान्तरे पञ्चाशदधिकं शतं, "वरलीन" ( वार्लिन ) नगरे शतद्वयं, "सुइडेन" नामकप्रदेशे त्रयोदशाधिकं शतं, "पर्टुगाल"प्रदेशे एकविंशत्यधिकं शतं जारजसन्तानाः समुत्पन्ना इति इंलण्डीयविश्वकोषे "ब्रिटानिका"नामधेये सुस्पष्टम्। भ्रूणहत्या च "आमेरिका"युक्तराज्य ( इउनाइटेड् ष्टेट् ) नामधेयप्रदेशे १५००००० पञ्चदशलक्षसंख्याका, फरासीप्रदेशान्तर्गत "लायन्स्"नामधेयनगरे जातमपेक्ष्य मृतस्य संख्याधिक्यं, "वंशीकान्ता ( Bonci Canta ) हस्पिटाल"नामधेयचिकित्सालये जातापेक्षया सार्द्धद्विगुणसंख्याधिक्यं गर्भस्रावस्य। धरणीनन्दनकानने "पारिस्"नामधेये नगरे प्रतिवत्सरं लक्षसंख्याधिक्यं भ्रूणहत्यायाः। जननेन्द्रियव्याधिश्च 'इंलण्डाख्य"प्रदेशे "आमेरिकाख्य" युक्तराज्यप्रदेशे च शताभ्यन्तरे पञ्चसप्ततिः। दृश्यतां द्रष्टव्यमिदं चित्रं सहृदयैः।

अहो! शिक्षावैचित्र्यं सुसभ्यदेशानाम्। हन्त भोः! रमणीयता रमणीनाम्? एतच्चित्रानुसारेणैव भारतीयस्त्रीशिक्षायां प्रयतन्ते इंलण्डीयभाषाविद आधुनिकाः सुसभ्या भारतीयाः। यदीदृश-मादर्शमादर्शीकृत्य "महिलाविद्यालय" संस्थापनाय प्रयतन्ते भारतीया-स्तर्हि अचिरमेव भारतीयललनागौरवसूर्य्योऽस्तसागरे नूनमेव निम-ङ्क्ष्यतीत्यत्र नास्ति कोऽपि सन्देहः। के नाम न जानन्ति वैदेशिक-रमणीनां नग्ननृत्यम्? अवश्यमेवाधुनिकाः सुरसिका ब्रुवते, वस्त्रा-भ्यन्तरे सर्व्वं एव नग्ना इति। अहो! किमिदं सभ्यतायाः शिक्षाया वा चरमं निदर्शनं, यदादर्शीकृत्य भारतीया अपि आधुनिकशिक्षिता भारतीयमहिलाकुलानां वैशिष्ट्यमस्तपयोधौ विसर्जयिष्यन्ति। पुरापि परःसहस्रा गणिका नर्त्तक्यो वा आसन् स्थास्यन्ति च भविष्यति काले तत्र न काचिद्भीतिरस्माकम्, किन्तु भारतीयकुलाङ्गनानां रङ्गालयेऽव-तीर्णानां हावभावविलासैश्चपलमतीनामजितेन्द्रियाणामानन्दविधायिनी नृत्यपद्धतिर्भीषयते भारतहितैषिणो मनीषिणः। इदानीमेवास्मिन् भारतवर्षे शिक्षाभिमानिन्या स्वाधीनताभिलाषिण्या कयाचित् कामिन्या वैदेशिकालेख्यपटच्छाया समुद्भासिता, यस्या मुखादागमवागिवेयं वाणी निःसरति। तथा च—"शृण्वन्तु सख्यो भवत्यः! स्वर्गीया अप्सरसः स्वेच्छया विचरन्ति, नृत्यन्ति गायन्ति हसन्ति चेति सर्व्वैरपि देवै-रुपभोग्याश्चेति के न जानन्ति। ब्रुवन्तु भवत्यः, सर्वैरपि प्रार्थनीयं पारिजातकुसुमं के वा शिरोभूषणं कर्त्तुं न प्रयतन्ते? पारिजात-परिमलो वा केषां मानसानि नाकर्षति? के वा सानन्दं नावतंसयन्ति नीलोत्पलम्। श्वेतसरोजिन्यः कान् वा समागतान् मधुपानलोलुपान् मधुपान् प्रत्याचक्षते? मलयानिलसखी ऋतुराजमहिषी वसन्तलक्ष्मीः कस्य वा मानसं नाकुलयति? कान् वा न मूर्च्छयति विरहिणः कोकिलागीतिः? केवलं वयमेवैकपुरुषमात्रभोग्या भवाम इति वयं सभ्यताविरोधिन्यो नार्य्यः? किमिदमविद्यावरणं चिरमेव

स्वास्यति ? जाग्रतु भगिन्यः" इत्युच्चैस्तिरस्कृतपटहनिनादैर्जलद-गम्भीरैर्वचनजातैः प्राप्तचेतन्याः कुलरमण्यो यदि जाग्रति, तदा निर्गुणो निष्क्रियो वा लब्धस्वास्थ्यः सांख्यपुरुषो दारुविग्रहो जगन्नाथो वा भूतिभूषणो भवो वा भविष्यतीति भारतमुक्तेरभिनवः पन्थाः। काचन ब्रूते—"सतीत्वं नाम किञ्चनानिर्वचनीयं गगनकुसुमवदलीकं, ये खलु पातिव्रत्यं नाम वस्तुसत्तां ब्रुवते, ते खलु शयाना एवाकाशकमलिनीशयनं कल्पयन्ति। यथा केऽपि जगतश्चिरस्थायिनीं स्वामितां लब्धुं न शक्नुवन्ति, यथा वा विकशितवकुल-मालती-शेफालिका-गन्धराजप्रभृतीनां सौरभं केवलमधिपतिना नोपभुज्यते, किन्तु साधारणैरुपभोग्यस्तथा कमलिनीकोमला लोकलोचनचन्द्रिका कामिन्यपि चतुरचकोरनायकैरुपभोग्या" इत्यादि। "शृणोति तस्मादपि यः स पापभाक्" इति न्यायादत्र नाधिकमालोचयामः।

माननीया महर्षिकल्पा विद्वांसः! नेदानीं सखीमिव रहसि विस्रम्भालापां, भगिनीमिव हितकारिणीं, मातरमिव सततं शुभाशंसानिरतां, गुरुपत्नीमिव सर्व्वदा हितोपदेष्ट्रीं वात्सल्यरसैकनिलयां, कामप्यन्तःपुरचारिणीं रमणीं पश्यामः। नवेदानीं पश्यामो वामकक्षविधृत-सलिलपूर्णकलसां, कृतस्नानां, क्रोडीकृतबालां देवतायतने गच्छन्तीं कृतप्रणामां वामां, शिवलिङ्गनिर्म्माणाय मृद्विलिप्तकरां पाकपरिवेशनादिकार्य्येषु व्यग्रमानसां सरलस्वभावां विश्वासैकभूमिं सिन्दूरविन्दुविभूषितभालदेशां वा कामपि महिलाम्। अतो भगवतो भवतां कुलाङ्गनानाञ्च सकाशे सभक्तिकः सविनयः कृताञ्जलिश्च प्रार्थये भारतस्य वैशिष्ट्यं पुरातनी स्मृतिश्चाक्षुषं भूयादिति।

आपातसुरसेषु परिणामविरसेषु च विषयेषु कृतावधाना विद्वांसः! कया रीत्या रमण्यो रक्षणीयाः, कथं तासां विशुद्धिः सम्पादनीया, विशुद्धासु च तासु जगतः कीदृगुत्कर्षोऽपकर्षो वा भवेत्, संयमवतामि

शिष्येण कीदृशेन वर्त्तितव्यं, को वा स्त्रीणां साधारणो धर्म्मः, कीदृशे वा कर्म्मणि तासां विनियोगस्तदुक्तं मानवधर्म्मशास्त्रे—

"अभ्यञ्जनं लेपनञ्च गात्रोत्सादनमेव च।
गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम्॥ २।२११
गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः।
पूर्णविंशतिवर्षेण गुणदोषौ विजानता॥ २।२१२
स्वभाव एष नारीणां नराणामिह दूषणम्।
अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः॥ २।२१३
अविद्वांसमलं लोके विद्वांसमपि वा पुनः।
प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम्॥ २।२१४

स्वभावत एव स्त्रियो विद्वांसमपि असत्पथं नेतुं प्रभवन्ति। अतः परपुरुषसंलापोऽपि सर्व्वथा वर्जनीयः। किमधिकं, सर्व्वंसहेव क्षमाशीला दयेव विग्रहवती गृहदेवतेव पूज्या जननी, मूर्त्तिमती श्रद्धेव प्राणप्रतिमा सहोदरा, वात्सल्याधारा दुहितापि यत्र कामावेशगन्धलेशोऽपि नास्ति तत्रापि—

"मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति"॥ २।२१५

इत्यादिना सम्यगवहितं शास्त्रकारैः। यासां रक्षणाय विशुद्धये कल्याणाय च शास्त्रकारैरभिहिता विविधोपाया वर्त्तन्ते, ता यदि स्वैरिण्यः पानदोषदूषिताः दुर्जनसङ्गता वा भवेयुः, यथाकालं पतिविरहिण्यो निर्भयमेकाकिन्यो राजमार्गादिषु विचरन्त्यः परावसथवासं कामयमानाः सर्व्वैरेव नारीदोषैरुपेता वा, विकृतशिक्षया भारतकलङ्कभूतास्ताः कथं शिक्षाभिमानितां प्रतिपद्यन्ते? तथा चोक्तम्—

"पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्।
स्वप्नोऽन्यगेहवासश्च नारीसन्दूषणानि षट्"॥ ९।१३

इदानीमन्यदिदं महदाश्चर्य्यं यत्, स्त्रीत्वव्यञ्जकी स्त्रीकृताकारेकारा-

वपि विलोप्येते प्रायश एव शिक्षिताभिर्वामाभिः। तथा च अज्ञताभिव्यञ्जकं चिरतरसंस्कारमपह्नुवाना नवीनसंस्कारं कामयमानाः कलङ्कभूतं "देवी"त्यादिकमुपाधिं विसर्जयन्त्यश्चिन्नीयन्ते लेखनीतूलिकया मृणाल-कुसुम-शिरीषनाम्ना भट्टाचार्य्य-चट्टोपाध्याय-गुप्त-घोषादिभिरुपाधिमसीभिः। तत्र च रसिका ब्रुवते,—"याकारौ स्त्रीकृतौ ह्रस्वौ" अर्थात् ईश आकारस्य याकारौ, स्त्रीकृतौ ह्रस्वौ भवतः, इति कलापसूत्रानुसारेण तादृशपदस्य साधुत्वं पाणिन्यादीनामप्यविरुद्धमिति। तद् यातु, एतदवश्यमेव वक्तव्यं, यया स्त्रीणां स्वातन्त्र्यं विधीयते, तादृशी शिक्षा कदाचिदपि न सम्पादनीया समाजहितैषिभिः। तथा च—

"बालया वा युवत्या वा वृद्धया वापि योषिता।
न स्वातन्त्र्येण कर्त्तव्यं किञ्चित् कार्य्यं गृहेष्वपि॥ ५।१४७

बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने।
पुत्राणां भर्त्तरि प्रेते न भजेत् स्त्री स्वतन्त्रताम्॥ ५।१४८

पित्रा भर्त्रा दुहित्रा वा नेच्छेद्विरहमात्मनः।
एषां हि विरहेण स्त्री गर्ह्यें कुर्य्यादुभे कुले"॥ ५।१४९

इत्यादि प्रमाणशतेष्वप्यश्रद्दधाना ये केचित् स्वदेशहितैषिब्रुवास्ते नूनमेव परिपन्थिनो धर्म्मशास्त्राणां, भारतगौरवद्विजराजस्य कलङ्कभूताश्चेति। अयि! आधुनिकस्त्रीशिक्षायां कृताभिनिवेशा अपरिणामदर्शिनो भारतहितैषिब्रुवा मनीषिणः! श्रूयतां श्रीमद्भिस्त्रिकालदर्शिनां परमर्षीणामयं सिद्धान्तः—

"अस्वतन्त्राः स्त्रियः कार्य्याः पुरुषैः स्वैर्दिवानिशम्।
विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे॥ ९।२

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः"॥ ९।५ इति

सर्वे एव कुलशीलसम्पन्नामव्यभिचारिणीं भार्य्यां रक्षितुं यतन्ते। तत्र च न काचिद् विप्रतिपत्तिरस्ति। तथा च—

"इमं हि सर्व्ववर्णानां पश्यन्तो धर्म्ममुत्तमम्।
यतन्ते रक्षितुं भार्य्यां भर्त्तारो दुर्बला अपि॥ ९।६
स्वां प्रसूतिं चरित्रञ्च कुलमात्मानमेव च।
स्वञ्च धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति"॥ ९।७

एवं ९।८, ९।९ श्लोकावपि द्रष्टव्यौ।

महाभारतेऽपि—

"भार्य्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता।
प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः॥
आत्मा हि जायते तस्यां तेन जायां विदुर्बुधाः"॥ इत्यादि।

अहो! स्वभावचपलाः कामक्रोधाद्यभिभूता धर्म्मशास्त्रानभिज्ञा लघुचित्ताः सदसद्विवेकरहिता भर्त्तृषु विकुर्व्वाणा रमण्यो धर्म्ये कर्म्मणि व्रतादौ गृहकर्म्मादिषु च सततं सम्यङ्नियोगमन्तरेण विश्वस्तैरपि पुरुषैर्गृहे अवरुद्धा अपि रक्षितुं न शक्यन्ते। तथा च मानवधर्म्मशास्त्रे—

"न कश्चिद् योषितः शक्तः प्रसह्य परिरक्षितुम्।
एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम्॥ ९।१०
अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्।
शौचे धर्मेऽन्नपक्त्याञ्च पारिणाह्यस्य वेक्षणे॥ ९।११
अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः।
आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः॥ ९।१२
पौंश्चल्याच्चलचित्ताच्च नैस्नेह्याच्च स्वभावतः।
रक्षिता यत्नतोऽपीह भर्त्तृष्वेता विकुर्व्वते"॥ ९।१५

एवं ९।१६, ९।१७ श्लोकावपि द्रष्टव्यौ।

किमधिकं, तरुणोऽयं, सुरूपोऽयमभिजनोऽयमर्थवानयमिति च नापेक्षन्ते कामपरतन्त्रा योषितः। तथा च—

"नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः।
सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते॥" ९।१४

एवम्भूता अपि रमण्यो भर्तृगुणसम्पर्काद् गृहस्थिता अपि स्वर्गीया विग्रहवत्यो देवताः, प्रावृषेण्यपयोधरमाला इव वात्सल्यरसैकनिलया विश्वम्भरा इव सर्वंसहा भवितुमर्हन्ति। अतस्ता यत्नतो रक्षितव्याः शिक्षयितव्याश्चेति। तथाचोक्तम्—

"शास्त्रं सुचिन्तितमपि प्रतिचिन्तनीयं
स्वाराधितोऽपि नृपतिः परिशङ्कनीयः।
स्वाङ्के स्थितापि युवतिः परिरक्षणीया
शास्त्रे नृपे च युवतौ च कुतो वशित्वम्॥"

तस्माद् योषित्सु सम्यग् रक्षितासु कुलं धर्मश्च रक्षिते भवतः। एतदन्यथाभावे वर्णसङ्करो जायेत। ततश्च नरकपातः पिण्डोदकक्रियाविलोपश्चापद्येत। तथा च—

"तत्समुत्थो हि लोकस्य जायते वर्णसङ्करः।
येन मूलहरोऽधर्मः सर्वनाशाय कल्पते"॥ ८।३५३

स्त्रीव्यभिचारमूले वर्णसङ्करे जाते विशुद्धपत्नीक-यजमानाभावात् सत्पात्रसम्प्रदानक-दानाभावाच्च अधर्मे परिवर्द्धमाने शस्योत्पत्तिहेतुभूतवृष्ट्याख्य-जगन्मलविनाशश्चधर्मो जगन्नाशाय सम्पद्यते। गीतास्वपि—

"अधर्माभिभवात् कृष्ण! प्रदुष्यन्ति कुलस्त्रियः।
स्त्रीषु दुष्टासु वार्ष्णेय! जायते वर्णसङ्करः॥
सङ्करो नरकायैव कुलघ्नानां कुलस्य च।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः॥

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
उत्साद्यन्ते जातिधर्म्माः कुलधर्म्माश्च शाश्वताः" ॥ इत्यादि ।

पतिव्रतानां रमणीनां मध्ये सीता-सावित्री दमयन्तीप्रभृतीनां नामानि स्मर्त्तुं शक्यन्ते । पातिव्रत्यभङ्गे बलाद्योषिदाकर्षणे च कृताभिनिवेशानां सुन्दोपसुन्द-शुम्भनिशुम्भ-रावण-दुर्य्योधनादीनां कामुकानां दुरात्मनां समूलमुच्छेदः पुराणेतिहासेषु सर्वेषामेव विज्ञातः । पतिव्रताः खलु योषित इहलोके विपुलं यशः, परत्र चानुत्तमां गतिमाप्नुवन्ति । तासां खल्वयमादर्शः—

"आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता" ॥

एवं मानवधर्म्मशास्त्रीय ५।१६५, ५।१५४, ५।१५५, ५।१५६, ५।१५७, ५।१५८, ५।१६२, ५।१५०, ५।१५१, ५।१६६ संख्यक-श्लोका द्रष्टव्याः । विस्तरभयादिह नोक्ताः ।

परन्तु दुःशीलानां गर्हिताचाराणां निन्दावादश्चैव श्रूयते—

"अपत्यलोभाद् या तु स्त्री भर्त्तारमतिवर्त्तते ।
सेह निन्दामवाप्नोति पतिलोकाच्च हीयते ॥ ५।१६१
पतिं हित्वापकृष्टं स्वमुत्कृष्टं या निषेवते ।
निन्द्यैव सा भवेल्लोके परपूर्वेति चोच्यते ॥ ५।१६५
व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्यताम् ।
शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥" ५।१६४

इत्याद्यार्षवाक्येषु सर्वैरेव प्रणिधानपरैर्भवितव्यम् ।

न चापातमधुरतया सुदृश्यतया मनोहरतया वर्ण-स्त्री-पुरुषादि-वैषम्यमन्तरेण तुल्याधिकारप्रदत्वेन च वैदेशिक एवादर्शो ग्रहीतव्य इति युक्तं, भारतीयादर्शस्यैव सर्वेषामादर्शभूतत्वात् । तथाचोक्तम्—

"तस्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥" २।१८

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।

स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥"२'२० इत्यादि।

भो भो भारतहितैषिणो महात्मानः ! भूयो भूयः सविनयं कृताञ्जलिर्भवतः प्रार्थये, याः खल्वक्षतयोनयो नियतेन्द्रियाः कुमारप्रव्रजिता ब्रह्मवादिन्यो वा भवितुमर्हन्ति, जगत्पूज्यास्ताः खलु ममैतन्निबन्धविषयतां नोपगच्छन्ति। याश्च गणिका नर्त्तक्यो गायन्त्यो व्यभिचारिण्यो धर्मभ्रष्टा वा, न च तदर्थमपि मे महानयं प्रयासः। किन्तु कुलदेवतास्विव मान्यासु कुलीनासु कुलाङ्गनासु परिच्चीणधर्मसु विकृतासु च यथा बलादाकृष्टं भारतस्य दौर्भाग्यं सगर्वं प्रतिष्ठेद्दं न विचरिष्यति, तथा वर्त्तितव्यं श्रीमद्भिर्भारतकुशलाभिलाषिभिरिति शम् ।

---

# भक्तिसिद्धान्तनिम्नगा

[ निबन्धकः—श्रीप्रसन्नकुमारकाव्यतीर्थ-कविभूषणः ]

अथ कश्चिच्छैवः स्वोपासितदेवतकर्त्तृकाच्युतार्चनाचर्चाकर्णनक्षुब्धहृदयो रोषारुणविलोचनो हठेनोत्थाय प्राक्रमत व्याहर्त्तुम् ।

रे रे दुर्मतयो विमार्गगतयो वाचाटतां संप्रति
स्वां स्वां संवृणुतेदृशीं शृणुत मे तथ्यां सुपथ्यां गिरम् ।
युष्माभिः किमु न श्रुतं शिवमवज्ञायापि दक्षः पुरा
सार्द्धं कामपि दुर्गतिं कतिपयैर्देवर्षिभिः स्वैरपि ॥ १

चराचराणां जगतामधीश्वरं धराधराधीशसुतापतिं स्वयम् ।
सवासवामर्त्यगणार्चितोऽपि यं सदा सदारो भजते चतुर्भुजः ॥२

तमीश्वरं मोहतमोहतप्रभा यदत्र यूयं वदथाच्युतार्चकम् ।
इतो न किं तस्य भवत्यमाननं चकार दक्षस्य यदाजमाननम् ॥३

पिनाकिनोऽज्ञास्यत चेज्जगत्पितुः परं स्वरूपं श्रुतिदुर्निरूपितम् ।
न जातु कृष्णस्य तदर्चनीयतां प्रवक्तुमस्यां समिताववक्ष्यत ॥ ४

विमथ्यमानादुदधेर्यदोदभूज्जगत्त्रयं दग्धुमिवोद्यतो गरः ।
तदाशकन् केऽपि न केशवादयो दिवौकसोऽपि प्रतिकर्त्तुमोहया ॥ ५

स्तुतस्तु तैस्ताञ्जनको यथात्मजान् जनान् विवशान् परिपातुमीश्वरः ।
महोग्रमह्नाय विषं तदेकलः पपौ सलीलं सलिलं मनागिव ॥ ६

इत्थं चानन्यसाध्यानि त्रिपुरान्धकादिदुर्दमदानवनिवहदमनादीनि महीयांसि भूयांसि सन्ति गुणकर्म्माणि तस्यादिदेवस्य । यानि कार्त्स्न्येन वर्णयितुं सर्व्वविद्यापारदृश्वनः सहस्राननस्यानन्तस्यापि जडिमानमापद्यन्ते रसज्ञाः । तत् को वा परोऽमर्त्त्यो मर्त्त्यो वा समीहेत तानि निर्वक्तुम् । अत एव च साम्प्रतं निजनिजसामर्थ्यं प्रकटितं पूर्व्वपूर्व्वैः पुष्पदन्तप्रभृतिभिर्देवयोनिभिर्महामहिमशालिभिः श्रीमन्महादेवस्य महिमकीर्त्तने बहुधा । अपि तु कियतामिवास्य गुणानां कर्म्मणां चोत्कीर्त्तनेनैवात्मानं ते कृतार्थयामासुः । किं बहुना, के वा विदुषां प्रवरा न विदुरेतस्य देवदेवस्य पुराणेतिहासकीर्त्तितां हरिविरिञ्चयादिनिखिलदेवार्चनीयताम् । किञ्च तदधिष्ठितायां वाराणस्यभिधानायां पुर्य्याम् अज्ञानादपि देहपाते सुलभैव सद्योऽवश्यम्भाविनी मुक्तिः । तस्मादेवं ब्रवीमि—

अनायासमोक्षप्रदातारमीशं न विश्वस्य विश्वस्य नाथं जनो यः ।
उपास्तेऽपरं दैवतं मूढबुद्धिः सदैवेन मन्देन मन्दो हतात्मा ॥ ७

अतः सर्व्वथान्यं सुपर्व्वाणमारात् परित्यज्य सर्व्वेश्वरं शर्व्वमेव ।
भजन्तां जनाः शर्व्वरीशार्द्धचूडं लभन्तामपूर्व्वाश्च सिद्धीरखर्व्वाः ॥ ८

सर्वे भजन्तु चरणाम्बुजमन्धकारेर्घोरे किमर्थमनिशं भवबन्धकारे ।
स्वर्गापवर्गदविधिप्रतिबन्धकारे मार्गे भ्रमन्ति बत मोहघनान्धकारे ॥

इत्याकर्ण्य केवलशिवोपासनोपदेशमसम्यगिति मन्वानः ससम्भ्रमं कश्चन हरिहरोपासको ब्रूते स्म। अयि भ्रातः! मा गास्तावदीदृशं प्रमादम्। मा चोपादिक्षः खलु जनानेवमाचरितुम्। यतः—

विनैकोभौ पक्षौ वियति विहगानामिव गति-
र्नॄणां नूनं श्रेयो भवति भुवि नर्त्ते हरिहरौ।
उभाभ्यामेताभ्यामितरमथवा काममनयो-
रुपासीनो मर्त्योऽन्यतरमपि सिद्धिं न लभते॥ १०

अतः प्रमादं परिहृत्य साम्प्रतं स्वयं भजस्वोभयमेव सादरम्।
जनांस्तथैवोपदिशापरानपि प्रसह्य चेन्मोक्षमिहोपलिप्ससे॥ ११

तत एवंविधविविधविप्रलापश्रवणखिन्नहृदयोऽपि समुद्भूतभूतसमुदयदयो महोदयो जातशिवाद्वैततत्त्वोदयो वक्तुमुदतिष्ठच्छैवप्रवरः। उदैरयच्च तावत् सप्रश्रयं तथ्यं पथ्यं च वाक्यजातम्।

व्याहर मैवमतथ्यं संहर कुमतिं समाहर ज्ञानम्।
परिहर हरिहरभेदं विहर न तमसि भ्रमाद् भ्रातः॥ १२

य एव विष्णुः स हि शङ्करो ध्रुवं भिदा तयोरस्ति न कापि वस्तुतः।
इति श्रुतिस्मृत्युदितं वचोऽमृतं निपीय भक्त्यापुहि शाश्वतामृतम्॥

मोहादुमाधव-रमाधवयोर्विभेदं
यः किल्बिषी कलयते कलयापि कश्चित्।
निःशेषजन्मसुकृतानि कृतानि हित्वा
घोरं प्रयाति स नरो नरकं चिराय॥ १४

विष्णुं भजन् द्वेष्टि वृषध्वजं यो न वैष्णवोऽसौ कथमप्यनिन्द्यः।
शिवं भजन् द्वेष्टि तथाच्युतं यो न संसृतेर्जातु विमुच्यते सः॥१५
रुचिप्रभेदादुभयोरुपास्तिः कार्य्या तयोर्वान्यतरस्य मर्त्यैः।
सुश्रद्दधानैरनसूयचित्तैः सच्चिच्चतुर्वर्गफलाप्तिहेतुः॥ १६
वस्तुतस्तु भ्रात्रादीनामिव गणेशादीनां द्वेषो जगत्पितुरीश्वरस्या-

प्रीतिकरमपि तु हरिहरयोरेकतरस्य द्वेष एकस्याङ्गिनोऽङ्गविशेष-पोडनमिव सुतरां परमाप्रीतिकरमिति सर्वशास्त्रसिद्धान्तः। नहि कश्चित् कस्यचित् शरीरस्य पूर्वार्द्धं पोडयन् अपरार्द्धं लालयन्नपि शरीरिणोऽल्पोयसीमपि प्रीतिमुत्पादयति। अत एवावधार्य्यतां सर्वैः :—

गणेशं सूर्य्यं वा हरिमपि शिवं वापि च शिवां
यथारुच्याश्रित्याप्नुत भवमहाम्भोधितरणम्।
परं बद्धश्रद्धा अपि च तत एकत्र न पुन-
र्विधत्तान्यद्वेषं जनितगुरुदोषं लघुमपि॥ १७

इत्याकर्ण्य वचस्तस्य सुमतेः श्रुतिसम्मतम्।
मुमुदे मतिमद्भिस्तैः समस्तैः सदसि स्थितैः॥ १८

इति भक्तिसिद्धान्तनिम्नगायां चतुर्थस्तरङ्गः।

———

## मिथिलास्थन्यायभाण्डारलुण्ठनप्रसङ्गः

[ निबन्धकः—श्रीदेवेन्द्रनाथचट्टोपाध्यायः ]

खृष्टीय-पञ्चदशशताब्दाद्वङ्गदेशस्थनवद्वीपो न्यायतत्त्वविदां सिद्ध-पीठत्वेन परिकीर्त्त्यते। ततः प्राङ् मिथिलैव तच्छास्त्रशिक्षाविषये लब्धप्रतिष्ठासीत्। तदा भारतवर्षस्य नानाप्रदेशादागता विद्यार्थिनो वङ्गदेशीयच्छात्रवृन्दश्च तत्रागच्छन् न्यायशास्त्रमध्येतुम्। अध्यापना-काले तत्रत्या नैयायिका देशान्तरेभ्यः समागतांश्छात्रान् प्रति तथा जागरूका आसन् यथाध्योपाधिकास्तेऽध्ययनसमाप्तौ गृहप्रति-गमनावसरे न्यायशास्त्रसम्बन्धि किञ्चिदपि रहस्यं लेखपुटे समारोप्य नेतुं नाशकन्। न्यायग्रन्थं गृहीत्वा स्वस्वदेशान् प्रति प्रतिगन्तु-कामाः क्षतविद्याश्छात्रास्तत्तद्देशेष्वध्यापनायां प्रवृत्ताश्चेत्तदा मिथि-

लाया: प्राधान्यलोप: स्यादित्याशङ्का मैथिला: पण्डिता ईदृशमवधान-मवलम्बितवन्त:। मन्ये न्यायशास्त्रं मिथिलाया एव चिरसम्पत्तस्य स्थानच्युतिरन्याय्येति तेषां हृदयमासीत्।

तेषामिदमन्योन्नतिकार्पण्यं चूर्णीकर्त्तुमाविरभवत् खृष्टीयपञ्चदश-शताब्दे वङ्गदेशे कश्चिदसामान्यधीसम्पन्नो मानवो यो मिथिलाया अजेयन्यायभाण्डारमलौकिकशक्त्या विलुण्ठ्य तस्या गर्व्वं खर्व्वीकृत्य वङ्गदेशस्य गौरवं वर्द्धयामास। स एव वासुदेवो नाम कश्चिन्नवद्वीपवासी लब्धकीर्त्तिमहेश्वराभिधानस्य सर्व्वशास्त्रविशारदस्याध्यापकस्य पुत्र: काले नाम्ना सार्व्वभौम इति प्रसिद्धिं लेभे समग्रभारते।

पितु: सकाशादध्ययनं समाप्य वासुदेवो मिथिलाङ्गतो न्याय-शास्त्राध्ययनाय। तदानीं पक्षधरमिश्र एव प्रधाननैयायिक-पद-मलञ्चकार। समुद्रहिमाचलं तस्य ख्यातिश्च प्रथितासीत्। वासुदेव-स्तत्र गत्वा तस्य छात्रत्वं स्वीकृत्याध्येतुमारेभे। कियद्दिनाभ्यन्तरे सोऽसामान्यस्मृतिशक्तिप्रभावात् साकल्येन न्यायशास्त्रमधीत्य गुरो: समीपे शलाकापरीक्षार्थमुद्यतोऽभवत्। तस्मिन् काले शलाका-परीक्षापद्धतिर्दुरूहासीत्। परीक्षाकालेऽध्यापक: परीक्षार्थनिर्व्वा-चितग्रन्थं शलाकया वेद्धुमारभत। शलाकाया अग्रभागेण ग्रन्थस्य यद् यत् पृष्ठं स्पृष्टमभवत्तत्स्थानादेव परीक्षाप्रश्ना निर्द्दिष्टा अभ-वन्। तत्प्रश्नसमूहस्योत्तरदाने समर्थ: परीक्षार्थ्येव सफलकामोऽभ-वन्न त्वन्ये।

अध्यापक: पक्षधरमिश्रो वासुदेवस्य परीक्षाग्रहणकालेऽष्टाधिक-शतवारान् परीक्षाग्रन्थस्य विभिन्नांशाञ्छलाकाविद्धान् कृत्वा तत्तत्-स्थानेभ्य: प्रश्नान् पृष्टवान्। वासुदेवोऽपि पृष्टप्रश्नानामुत्तरं सम्यग् दातुं समर्थोऽभवत्। न केवलं पक्षधरमिश्रस्तत्रभवन्तोऽन्ये विद्वज्जना अपि विस्मिता अभवंस्तस्य प्रतिभादर्शनेन। तत: स सार्व्वभौमो-पाधिनालङ्कृत आसीत्।

अयमेव विस्मयविषयो यद्रक्षणशीला अपि मैथिलनैयायिकाश्चिन्तयितुं नाशक्नुवन्नस्य परीक्षोत्तीर्णच्छात्रस्य स्मृतिपदवीमारूढं न्यायशास्त्रमिति। यदादानभियैतः पूर्वं कमपि छात्रं किञ्चिदपि पत्रपुटितं कारयितुं ते क्षपणायन्ते स्म। वासुदेवो न्यायशास्त्राध्ययनार्थं मिथिलागमनकाले पितुश्चरणेऽभिवाद्योवाच "पितः! आशीर्व्वादः क्रियतां येनाहं न्यायशास्त्रं स्मृतावारोप्यानीय वङ्गदेशस्थान् न्यायशास्त्राध्ययनकामांश्छात्रानध्याप्य तेषां मिथिलागमनक्लेशान् दूरीकर्त्तुं शक्तो भवेयमिति।"

पितुराशीर्व्वादं शिरसि गृहीत्वा शुभलग्ने वासुदेवो गृहान्निर्गतो मिथिलां प्राप्तवान्। ततः पूर्व्वं भारतवर्षस्य नानास्थानादागताश्छात्रा मिथिलातो न्यायशास्त्रमधिगम्य गृहप्रत्यागमनकाले न्यायशास्त्रस्य किञ्चित् विषयं ततो बहिर्नेतुं न क्षमा आसन्। असाधारणधीशक्तिधरो वासुदेवो मिथिलावासिपण्डितानामीदृशीं व्यवस्थां छात्राणामवमाननाकारिणीं विविच्यालौकिकस्मृतिशक्तिबलेन समग्रं न्यायशास्त्रं मनसि कृत्वा मिथिलातो निष्क्रान्तः। तस्य मनोरथसिद्धिरभवत् पितुराशीर्व्वादश्च सफलतां गतः।

वासुदेवो मिथिलातो वाराणसीमुपगम्य वेदान्तशास्त्रं सम्यगधीत्य नवद्वीपं प्रत्यागतः। ततो वासुदेवो नवद्वीपे न्यायशास्त्राध्यापने प्रवृत्तोऽभवत्। तत्र स एव न्यायशास्त्रस्य प्रथमोऽध्यापकः।

स्वल्पकालाभ्यन्तरे तस्य ख्यातिर्भारतविश्रुतासीत्। तस्य विद्यालयो वङ्गदेशे आदर्शशिक्षाकेन्द्ररूपेण परिगणितोऽभवत्। नानादिग्देशाद्विद्यार्थिनोऽध्ययनार्थं तत्रागन्तुमारेभिरे। तदानीं ये ये छात्रास्तत्समीपाद्विद्यामधिगतास्ते सर्व्वेऽपि पण्डितकुलभूषणा अभवन्।

वासुदेवसार्व्वभौमस्य चत्वारश्छात्रा न्यायशास्त्रेषु प्रावीण्य-

मुपागच्छन् यस्य छात्रचतुष्टयस्य नामश्रवणादेव हृदयं पुलकान्वितं भवेत्। तस्य प्रथमश्छात्रो नव्यन्यायशास्त्रप्रणेता रघुनाथ-शिरोमणिर्द्वितीयश्छात्रः स्मृतिशास्त्रसंस्कारकः प्रातःस्मरणीयो रघुनन्दनस्तृतीयश्छात्रः प्रनष्टप्रायतन्त्रशास्त्रस्य समुद्धर्त्ता कृष्णानन्द आगमवागीशश्चतुर्थश्च श्रीमन्महाप्रभुः कलियुगावतारश्चैतन्यदेवः।

रघुनाथशिरोमणिरपि सार्व्वभौमस्य समीपतोऽधिगतन्यायशास्त्रो-ऽधीतविद्याया अभिज्ञतां प्रदर्शयितुं मिथिलां गतः। तदापि पक्षधर-मिश्रो जीवित आसीत्। तस्य छात्रत्वमङ्गीकृत्य रघुनाथस्तत्सकाशे न्यायशास्त्रमध्येतुमारब्धः।

पक्षधरमिश्रस्तस्याद्भुतशक्तिमवलोक्य विस्मयमुग्धोऽभवत्। किय-द्दिवसाभ्यन्तरे रघुनाथो न्यायशास्त्रे व्युत्पत्तिं लब्ध्वा पक्षधरमिश्रं विचारार्थमाहूतवान्। दीर्घकालव्यापिविचाराद् वृद्धः पक्षधरमिश्र उवाच—'वत्स! न्यायशास्त्रविचारेऽहं तवोत्कर्षं दृष्ट्वा प्रीतोऽस्मि, त्वमेवाधुना भारते सर्व्वश्रेष्ठो नैयायिकः' इति। ततो रघुनाथस्य विजयवार्त्ता सर्वत्र विघोषिताभवत्।

विजयलाभादनन्तरं स प्रत्यागच्छन्नवद्वीपम्। ततः प्रभृति नव-द्वीपस्य गौरवं दिगन्तप्रसृतमभवत्। तदानीं नवद्वीप एव न्यायशास्त्र-शिक्षाविषये श्रेष्ठविद्यापीठत्वेन सर्वत्र विदित आसीत्। वासुदेवस्य तदन्तेवासिनो रघुनाथस्य च कीर्त्तियाथार्थ्येन भारतगगनमुज्ज्वली-कृत्य यावच्चन्द्रदिवाकरं भारतवासिनः प्रीणयिष्यति। वङ्गजनन्यपि धन्या यैतादृशपुत्त्ररत्नद्वयं वक्षसि धारयितुं समर्था, धन्याश्च भारत-वासिनो भारतभूमावीदृङ्महापुरुषयुगलं लब्ध्वा। इति शम्।

# श्रीतमालिकामहिमा

[ निबन्धकः—श्रीलक्ष्मीनारायणद्विवेदी ]

अशेषलोकोत्तरसम्पदाश्रिते
जितामराधीश-धनेश-वाटिके
दिवोऽवतीर्णाऽतिरसेन भारते
तमालिका सोमलतायतेऽधुना ॥ १

अये इमां सद्गुणशालिनो नरा !
महोदया विप्रवरा धराधिपाः !
परं निपीयध्वमियं रसोत्तमा
तमालिका सोमलतायतेऽधुना ॥ २

संचूर्ण्य हस्तेन विधाय भाविता
मनोज्ञगन्धैः परिकल्प्य वानले ।
निधाय यन्त्रेण निषेव्यतामियं
तमालिका सोमलतायतेऽधुना ॥ ३

करञ्जिकाऽस्या हृदये निधीयतां
न सा यथा चेयमरं निवेश्यताम् (?) ।
निजे निजे मूर्धनि वाऽपिधीयतां
तमालिका सोमलतायतेऽधुना ॥ ४

गवां पयो न स्वदते न वा सिता
तनोति माधुर्यमलं फलानि वा ।
न सन्ति भूयो सरसान्यसौ यथा
तमालिका सोमलतायतेऽधुना ॥ ५

न चास्ति भार्य्याऽपि क्रिया तथा प्रिया
　　क्षणे क्षणे प्रीणयते मनो यथा।
इयं समाजेऽपि निशम्य चोरसि
　　प्रयाति भूयोऽधरमुन्मुखी किल ॥ ६

स्वाहा स्वधा या मुनिभिः पुराणै-
　　र्भविष्यदृष्टैर्विहिताः कलौ ताः।
हिताय लोकस्य तमालिकाया
　　रूपेण नूनं बहुधा बभूवुः ॥ ७

हरीतकीं हन्त मुधा शशंसु-
　　स्तमालिका तैर्न विलोकिताऽऽसीत्।
यस्या मुखस्पर्शनमात्र (१) भीतं
　　पलायते शीघ्रतया पुरीषम् ॥ ८

विद्योतनी बुद्धिबलेन्द्रियाणां
　　निर्मूलनी वातकफार्दितानाम्।
संशोधनी मूत्रपुरीषयोश्च
　　कलिप्रसादाधिगता तमाखुः ॥ ९

तमालपत्रं (२) परमं पवित्रं
　　प्रजापतेर्यत्सहजं पुरस्तात्।

---

(१) यत्-( तमाली ) कर्तृकस्य ( पुरीष ) सम्बन्धिमुखस्पर्शनमात्रभय-ग्रस्तं, यत् ( तमाली ) सम्बन्धिमुखकर्मक स्व ( पुरीष ) कर्तृकस्पर्शनमात्र-जन्यभयोपेतं, यत् ( तमाली ) कर्तृकभक्षकपुरुषसम्बन्धिमुखकर्मकस्पर्शन-मात्रजन्यभयविप्लुतं वेत्यर्थः। आद्ये द्वितीये च पुरीषकर्तृकस्पर्शसम्भावनैव भयहेतुः तृतीये तु मुखस्पर्शनस्य जातत्वमात्रेण भयमिति

(२) भावुकानां महामहोपाधिमतां परेषां च पण्डितानां कृते कालेय-यजुर्वेदस्थतमालीसूक्तस्य दशमोऽयं तमालीसेवनमन्त्रः। सोऽयं प्राप्तावसरो सव्याख्यं प्रकाशीक्रियते।

आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं
तमालपत्रं बलमस्तु तेजः ॥ १०

---

## श्रीकृष्णचैतन्यचरितम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—भक्तिसागरः श्रीकालीहरदासवसुः विद्याविनोदः ]

अनन्तरं श्रीचैतन्यदेवो मधुरभाषणेन सर्व्वान् पर्य्यवस्थाप्य लघु लघु चलन् दक्षिणापथं प्रतस्थे। कृष्णदासनामा कश्चिद् ब्राह्मणः करङ्कवाही सङ्गी बभूव। आनन्देन्दुः श्रीगौराङ्गः प्रत्येकं परिरभ्य यदा चलति तदा तद्विरहेण भक्ताः सर्व्वे मूर्च्छां प्रापुः। यथाहम् अकारुण्यस्य व्यपदेशं कृत्वा यथाव्यवहारं सर्व्वं सम्पाद्य प्रभुः कृष्ण-नाम गायंश्चलति —क्षणं मन्थरगतिः क्षणं त्वरमाणः। पथि पथि दर्शकगणाः कर्णविवरेषु तन्नामामृतं प्राप्य नेत्रैस्तस्य रूपमाधुर्य्यमास्वाद्य प्रेममया अभवन्। कूर्म्मस्थानमागत्य कूर्म्मं प्रणम्य शचीसूनुः प्रेम्णा नृत्यगीतादिकञ्चकार। गौरप्रेममुग्धास्तस्य सेवकाः प्रभुं स्वगृह-मानीय पादप्रक्षालनं कृत्वा सवंशास्तत्पादोदकमपिबन् प्रसादान्नञ्चा-भक्षयन्। प्रभुर्दक्षिणदेशे दिशि दिशि भ्राम्यन् सर्व्वत्र कृष्णनाम प्रचारयन् आनन्दकल्लोलैर्देशं प्लावयन् गृहे गृहे भिक्षामाटत्। ब्राह्म-णस्य तस्य भवने रात्रिं यापयित्वा प्रातः कृतस्नानो वासुदेवनाम्नो द्विजस्य समीपं समागतः। कुष्ठरोगेण गलिताङ्गः स प्रभोरागमनं श्रुत्वा भूमौ लुठन् प्रतीक्षते इति हेतोरन्तर्य्यामी दयार्द्रः प्रभु-स्तमुद्धर्तुं स्वयमागतः। आगत्य प्रभुः सहसा तं श्लिश्लेष। प्रभुस्पर्श-

जनितेनानन्देन तस्य गलितमङ्गं तत्क्षणमेव नीरोगं पूर्ववत् सुन्दरञ्च बभूव। रोगमुक्तः सः अनेन स्तौति—

"क्वाहं दरिद्रः पापीयान् क्व कृष्णः श्रीनिकेतनः।
ब्रह्मबन्धुरिति स्माहं बाहुभ्यां परिरम्भितः॥"

१०।८१।१४ श्रीमद्भागवते।

श्रीरामचन्द्रो दाक्षिणात्यम् अरण्यानीपूर्णं प्राप। श्रीगौरचन्द्रो दक्षिणदेशं श्यामलशस्यक्षेत्रैर्बहुतरजनपदैश्च पूर्णं ददर्श। गोदावरी-तटस्थं विद्यानगरं दक्षिणोत्कलस्य तदानीन्तनी राजधानी। राय-रामानन्दस्तत्र प्रतापरुद्रस्य प्रतिनिधि-शासकः। रामानन्दो जात्या वैश्यः। विद्याभक्तिवैभवानामेकाधारः परमप्रेमार्द्रचित्तः स पण्डितानां शिरोमणिः। ईदृशः सर्व्वगुणोपेतो मनुष्यो जगति दुर्लभ एव। श्रीमन्महाप्रभुः 'जियड़'नृसिंहमुपतिष्ठमानो गोदावरीतीरे समागतः। 'जियड़'मूर्त्तिः श्रीप्रह्लादमहाशयेन प्रतिष्ठापितेति यथाश्रुतं कथ्यते॥

गोदावरीदर्शनाद् यमुनास्मरणं वनदर्शनाद् वृन्दावनस्मरणञ्च भावाधीश्वरस्य प्रभोः स्वाभाविकी रीतिरभूत्। गोदावर्य्यां स्नात्वा तस्यास्तीर उपविष्टो नामरसाब्धिः श्रीगौरः श्रीनामानुकीर्त्तयन्नास्ते। अस्मिन्नवसरे नानावाद्यसमेतां दोलामारुह्य रायरामानन्दः स्नानाय बहुवैदिकब्राह्मणैः सह आयाति। स्नानतर्पणादिकं सर्वं कृत्यं समाप्य स रामानन्दः शतसूर्य्यसमकान्तिम् अरुणवसनं सुवलितप्रकाण्डवपुषं कमललोचनं सन्न्यासिनमाश्चर्य्यरूपं समीपे समासीनमालोकयन् विस्मि-तस्तमुपेत्य दण्डवत् प्रणनाम। प्रभुरुत्थाय मन्दं मन्दं सादरमवदत्— "उत्तिष्ठ कृष्ण कृष्णेति भण। अपि त्वं रायरामानन्दः!" मुखचन्द्रोद्गीर्णां तस्यामृतमधुरां वाणीमाकर्ण्य रायेणाभिहितम्—"एषोऽहं मन्दो दासः।" तच्छ्रुत्वा विनयमुग्धः प्रभुः सानन्दं रामानन्दं परिरम्भितवान्। उभावपि आलिङ्गनबद्धौ प्रेमकल्लोलावेगेन संज्ञाहीनौ भूमौ पेततुः।

योग्यो योग्येन सङ्गतः। स्वेदाश्रुस्तम्भपुलकवैवर्ण्यादिभिरष्टसात्त्विक-भावैरुभौ विह्वलौ गद्गदिकया रुद्धकण्ठौ च निरीक्ष्य विप्राः सर्वे विस्मयाविष्टाः। अपगतमूर्च्छेन रामानन्देनाभ्यधायि—"क्व भवानीश्वरः साक्षान्नारायणः क्वाहं राजसेवी विषयी शूद्राधमः। मोहान्तानां स्वभाव एवेदृक् यत्ते कर्म्मातीता अपि पतितांस्तारयन्तो नवनवं प्रदेशं भ्रमन्ति।

> महद् विचलनं नृणां गृहिणां दीनचेतसाम्।
> निःश्रेयसाय भगवन् कल्पते नान्यथा क्वचित्॥
>
> ( श्रीमद्भागवते )

रविशशिसदृशयोः श्रीकृष्णचैतन्य-रामानन्दयोर्मध्ये दश दिवसान् रसवैचित्र्यपूर्णो निगूढः संलापोऽभूत्। येन तुल्यो नाभूत् न भविष्यति। अस्मिन् संलापे राधाकृष्णलीलानिगूढत्वं चमत्कारित्वञ्च व्यक्तं व्याख्यातं प्रकटीकृतञ्च। तदास्वादनमकृत्वा यो म्रियते स मृत एव।

गौतमीगङ्गा अहोवलं स्कन्दक्षेत्रं वृद्धकाञ्ची विष्णुकाञ्ची त्रिमल्लः पक्षतीर्थं कावेरीति तीर्थानि पर्य्यट्य पीताम्बरशिवम् ( चिदम्बर ) अमृतलिङ्गशिवं कुम्भकर्णकपालं पापनाशनविष्णुञ्च परिभ्रम्य पञ्चस्थान् प्रणम्य संस्तुत्य च प्रभुः श्रीरङ्गक्षेत्रमागतः। तत्र प्रभुर्ब्राह्मणानां गृहे गृहे भिक्षां कुर्वन् चातुर्मास्यञ्च पालयन् तत्रैकस्मिन् देवालये ब्राह्मणमेकं प्रत्यहं गीतां पठन्तं ददर्श। अश्रुकम्पपुलकाविष्टो ब्राह्मणः प्रतिदिनं तां पठति। तस्य अशुद्धावृत्तिं श्रुत्वा लोकास्तमुपहसन्ति गर्हयन्ति च। श्रीमन्महाप्रभुस्तस्य भावावेशं प्रत्यक्षीकृत्य एकदा तं पृच्छति—"कोऽर्थो यमनुभूय तवेदृशं सुखं जायते?" ब्राह्मणो ब्रूते—"मूर्खोऽहं गीतार्थबोधो मे नास्ति। परन्तु यावदहं श्लोकानामावृत्तिं करोमि तावदहम् अर्ज्जुनस्य रथे रज्जुधरं

तमुपदिशन्तं श्यामसुन्दरं पश्यामि। तेन विपुलानन्दाप्लुतो भवामि"। मधुरमेतच्छ्रुत्वा गौरहरिः कथयति—"त्वमेव हि तावद्गीतापाठस्य अधिकारी, त्वमेव हि गीतार्थसारं जानासि।" इत्यभिधाय भावग्राही प्रभुस्तं प्रेमभरेणाश्लजत। प्रभोरालिङ्गनतः प्रभृति निर्मलबुद्धिः स ब्राह्मणः प्रभोश्चरणसेवी बभूव।

श्रीकृष्णचैतन्यप्रभुर्वेङ्कटभट्टभवने सुखमवतिष्ठते स्म। तयोर्द्वयोः कृष्णप्रसङ्गरङ्गः प्रचुरश्चलति। श्रीवेङ्कटस्य भ्राता प्रकाशानन्दसरस्वती दशसहस्रसन्यासिनां गुरुर्वाराणसीमधिवसति। वेङ्कटस्य दशवर्षदेशीयो बालकः श्रीगोपालभट्टः परमरूपवान् स्निग्धस्वभावो दिष्ट्या प्रभोः कृपापात्रमभवत्। श्रीगोपालः प्रभुं परमं प्रीणाति स्म। भक्तवत्सलो गौरहरिरेकदा सस्नेहं गोपालमादिदेश—"गोपाल, विवाहस्त्वया नैव कर्त्तव्यः। त्रिंशद्वर्षवयःक्रमे त्वया श्रीवृन्दावनं गन्तव्यम्। त्वया बहूनि कर्म्माणि मम साधयितव्यानि। गोपालः प्रभोरादेशं शिरसि धृत्वा तस्य पादयोः पपात। एष गोपाल उत्तरकाले वृन्दावने षड्गोस्वामिनामेकतमो बभूव। यावच्चन्द्रार्कौ विद्येते तावद् गोपालस्य कीर्त्तिर्विषयं लप्स्यते। ईदृगेव गौरकृपाप्रभावः।

वेङ्कटभट्टेन इष्टगोष्ठीं कुर्व्वंस्तद्गृहे चातुर्मास्यं समाप्य पुनः प्रभुर्दक्षिणाभिमुखं चलति स्म। ऋषभगिरौ नारायणं श्रीशैले शिवदुर्गे च भक्त्या सम्भाव्य कृतमालायां कृतस्नानः कस्यचिद् रामभक्तविप्रस्य गृहे प्रभुरतिथिर्बभूव। मध्याह्नः समायातस्तथापि ब्राह्मणो नान्नं राधयति। प्रभुणा पृष्टः स भक्तिभरेण वक्ति—"वन्यशाकफलमूलानि लक्ष्मण आनेष्यति, सीता पाकं करिष्यति।" तृतीयप्रहरे प्रभुर्भिक्षां करोति। ब्राह्मणः स्वयमुपवसति। प्रभुरुपवासस्य कारणं किमित्यपृच्छत्। पृष्टः स उक्तवान्—"मम अधन्यजीवनेन किम्। जगन्माता लक्ष्मीः श्रीसीतादेवी राक्षसेन स्पृष्टा इति श्रुत्वापि जीवामि। अहो मे जीवनं धिगिति"। प्रभुणाभिहितम्—"ईश्वरप्रेयसी

सीता चिदानन्दमूर्त्तिः। सा प्राकृतेन्द्रियाग्राह्या। रावणाग्रतः सीता अन्तर्दधे। केवलं सीताकृतिं मायासीतां स जहार।" एतेन वचनेनैव प्रबोधितः स विप्रः पूर्वभावं विस्मृत्य भोजनादिकं चकार। श्रीगौरचन्द्रे तस्य सहसा विपुला भक्तिरजायत। पुनः पश्चा भक्त्या उत्तमभोगादिकं सम्पाद्य तेन प्रभुं परितोषयामास।

अनन्तरं श्रीकृष्णचैतन्यदेवस्ताम्रपर्ण्यां स्नातस्तिलकाञ्ची-( तेन काञ्चो ) गजेन्द्रमोचणपाणागड़िश्रीवैकुण्ठमलयकन्याकुमारीकोलापुर-नासिक-त्र्यम्बक-ब्रह्मगिरय इति सहस्रं तीर्थस्थलानि भ्रमित्वा पुनर्गोदावरीं दृष्ट्वा रामानन्दचरितं ध्यायं ध्यायं गाढ़ोत्कण्ठाक्रमपरवशो विद्यानगरं प्रत्यागतः। रामानन्देन तस्य पुनर्मिलनं बभूव। सुखतरङ्गिण्यां तरङ्गा उद्वेला बभूवुः। प्रभू रामानन्दस्य करे कृष्ण-कर्णामृतं ब्रह्मसंहिता इति संगृहीतं ग्रन्थद्वयमर्पयामास। ब्रह्मसंहिता परमसिद्धान्तखनिः। रामानन्दः पश्चात् नीलाचलं गमिष्यतीति निश्चित्य प्रभुर्नीलाचलं प्रातिष्ठत। प्रत्युद्गमनार्थं श्रीनित्यानन्दप्रमुखो भक्तगण आलालनाथे समवेतः सभां कृत्वोत्फुल्लमानसो नन्दति स्म।

---

## सम्पादकीया पश्चिमपरिचर्य्या

प्रियपाठकमहाभागाः! जागतिकनियमानुगत्या प्रतिवर्षमिव प्राप्तमपि वर्षमद्य प्रक्षीणायुष्कं परिष्करोति प्रथितानां परेशविधानानामनुल्लङ्घनीयताम्। अद्य पुनर्वर्षावसानमिव प्राप्तकालं विज्ञाप्यं नः किञ्चिद् वस्त्वन्तरमस्तीत्यवधानं भवद्भिर्दीयमानमभिलषामः। विलीयमाने वर्षे समाशंसितपूर्वाणि शुभशतानि पत्रिकासम्बन्धीनि प्रतिबन्धकबाहुल्येन वन्ध्यफलानीवास्माननतिमात्रं सन्तापयन्ति। प्राणैः पणैरेनामनारतमुपचरतामस्माकमद्य यावद् द्वादश वर्षाण्यतीतानीति

प्रविचिन्त्याप्यान्तरं किञ्चनानन्दममन्दप्रसरमनुभवामः। एतत्परिचर्य्यार्थमुपसम्भृतैरुपचारैर्भवतामपि कश्चित् सन्तोषः समापद्यत चेत्तदात्मानं कृतकृत्यं मत्वा भवद्भ्यो धन्यवादशतं वितरीतुमिच्छामः। परमतिमात्रं प्रयत्यापि प्रतिकूलांस्तांस्तान् विषयानवाप्य प्रारिप्सितमपि पत्रिकागतं मङ्गलं नैव निष्पादयितुमलमभवामेति क्लेशमनुभवामः।

अद्यत्वे पुनः परिवर्द्धविद्यालयेऽध्यापनादिविधावतिव्याप्टतात्मनो न मे समयोऽपि पर्य्याप्तः पत्रिकामिमामुपचर्य्यया सम्भावयितुम्। अनुपचारसम्भाविता चेयं प्रतिपदं विषीदन्ती भवतोऽपि सुतरां दुःखाकरोतीति प्रेक्षावत्प्रवृत्तिश्चोपलभामहे। तदेवं पत्रिकागतं कल्याणविशेषं पाठकगोचरं सौमनस्यप्रकारमात्मीयञ्च समयाभावादिभिः परिचर्य्यासामर्थ्यमर्थतः समाकलय्यास्याः सम्पादनभारमात्मस्कन्धादवतारयामः।

अवतार्य्य च भारमिमं समर्थतरस्य तत्रभवतः क्षितीशचन्द्रचट्टोपाध्याय एम् ए, महोदयस्य स्कन्धे समारोप्य गुणवत्पात्रप्रतिपादितकन्यका इव स्वच्छान्तःकरणाः संवृत्ताः स्मः। नूतनवर्षप्रारम्भादेव तत्रभवन्तो भवतः पत्रिकाञ्च सममेव परिचर्य्यया परितोषयिष्यन्तीति दृढं विश्वसिमः। विश्वविद्यालयेऽध्यापयतामनवद्यविद्यागौरवसम्पन्नानामेषां चट्टोपाध्यायमहाभागानां सममाङ्गलभाषया व्याकरणज्ञानप्रावीण्यं साहित्यसरोऽवगाहित्वम् अलङ्कारपरिशीलननिष्कलङ्कित्वमद्यत्वे नान्यत्रावलोकयन्तेऽस्माभिः। काले व्यक्तीभविष्यतामेतेषां गुणसमवायानामस्मत्कृतोऽयमुपन्यासः सूचिरिव ग्रन्थस्य निमित्तमिव शुभाशुभस्य, कररेखेव मानवभागधेयस्य ज्ञापकतामाधत्ते न पुनर्निष्पादकताम्।

चिराय परिपोषितामिमामन्यस्मै प्रतिपादयतां यत्किञ्चनामानस्यं मनस्युदभूत्, तत् पुनः पात्रविशेषलाभलोभाद्‌ विद्युत्प्रणाश

नष्टमिति सहर्षमावेदयितुमग्रे सरामः। नवसम्पादकनिवेदनमभि-नववर्षारम्भे वैशाखपत्रिकायामुपच्छिन्नमत्रभवतः पाठकमहाभागा-नानन्दयिष्यतीति प्रतिपन्नभाराणामधिकारे नास्माभिः स्थूलहस्तावलेपः प्रस्तूयते। जानीमहे, यदियं क्रमेण परिपुष्टशरीरैव परिलोकयिष्यते परिषत्प्रशस्तिमभिवाञ्छद्भिर्भवद्भिः।

सम्पादनभारं परिहरतापि परिचर्य्याभारोऽस्याः समं भवद्भि-र्मयाप्यङ्गीकृत एवास्ते। अवसरे पुनर्निबन्धदानादिद्वारा भवतामस्याः पत्रिकायाश्च परिचरणपरा वयं भवद्भिर्द्रष्टव्या एवेत्याशास्महे। तदेव-मवसरग्रहणायापृच्छ्यात्रभवतः पाठकमहाभागान् पश्चिमान्यस्माभिः सम्पादकरूपेण वितीर्णानि प्रणामाश्च परिरम्भाश्चाभिवादनशतानि च यथायोग्यं यथाकालमुपहारीक्रियन्त इत्येतावतीयमस्माकं पश्चिम